ब्राह्मे दीर्घांचकाचवर्णांचविंदुत्रयविभूषिताम
त्स्याख्यासौशिलाज्ञेयाभुक्तिमुक्तिफलप्रदेति २३
विष्णुरहस्ये मत्स्यरूपंचदेवस्यदीर्घाकारंसु
भूषितम् विंदुत्रयसमायुक्तंकृष्णवर्णंसुशोभन
मिति ॥ २४ पाद्मे त्रयोमत्स्यादयः श्यामा
द्विचक्राःस्वांकसंयुताः तेषांसंदर्शनादेवसर्वा
न्कामानवाप्नुयादिति ॥२५॥ ब्रह्मांडे दीर्घद्वार
युतास्निग्धाद्वारमध्येद्विचक्रयुक् चक्रमेकंपु
च्छभागेदक्षिणेशंखसाकृतिः ॥२६॥ वामेप्रदृ
श्यतेरेखामत्स्यमूर्त्तिः शुभप्रदेति ॥ २७

ब्रह्मपुराणमें और कथन कीयाहै दीर्घेति दीर्घ और काच क्या
कचके वर्णवाली और तीन बिंदुकर्के भूषित मत्स्यनाम कर्के
सोशिला जाननी भुक्ति और मुक्तिके फलकोंदेतीहै ॥ २३ ॥
विष्णुरहस्यमें कथन कीताहै जोदीर्घाकार और सुभूषित और
तीन बिंदु कर्के युक्त और कृष्णवर्ण और सुशोभन सोदेवका म
त्स्य रूपहै ॥२४॥ पद्मपुराणमें और कथन कीयाहैं तीनजोहैं
मत्स्यादिक मूर्तियां और श्याम और दोचक्रों वालीयां और अ
पने चिह्न कर्के युक्त तिनोंके दर्शनतें संपूर्णकामांकों पुरुषप्रा
प्तहोताहै ॥२५॥ ब्रह्मांडपुराणमें और कथन कीयाहै दीर्घ द्वार
कर्के युतस्निग्धऔरद्वारमध्यमें दोचक्रोंकर्केयुत औरपुच्छभागमेंए
कचक्र और दक्षिणमें शंखकीआकृति ॥२६॥ औरवामपार्श्वमें
रेखादेखिये सो मत्स्यमूर्त्ति शुभ फलकेदेनवालीहोतीहै ॥२७॥

त्रिचक्राअपितत्रैवमूर्त्तयः परिकीर्त्तिताः नारा
यणोहरिहरोलक्ष्मीनारायणस्तथा ॥ २८ ॥त
द्वद्दाशरथीरामःशांताख्योवासुदेवकः हंसःकू
र्मयुतश्चैवकेशवोवहुरूपकः ॥ २९ ॥ अधोमु
खनृसिंहस्तुशिशुमारास्त्रिविक्रमः मत्स्यास्त्रिमू
र्त्तिःसीतेशः पुरुषोत्तमएवच ३० त्रिचक्रामूर्त्त
यश्चैताः समासेननिरूपिताः ॥ ३१ ॥ चतुश्च
क्राअपि तत्रैव चतुश्चक्राहरिहरसीतारामज
नार्दनाःत्रिविक्रमःकंसमर्दीलक्ष्मीनारायणस्त
था ॥ ३२ ॥ वटपत्रशयीरामोवुद्धस्तद्वच्चतुर्भु
जः गोवर्धनधरश्चैताश्चतुश्चक्राभवंतिहि ३३

तिसमें तीनो चक्रों वालीयां मूर्त्तियां कथन कीतीयांहैं नाराय
ण और हरिहर और तैसें लक्ष्मीनारायण २८ तिसकी
न्याईं दाशरथीराम शांतह नाम जिसका और वासुदेवकऔर
हंस और कूर्मयुत और केशवऔरवहुरूपक २९ और अधो
मुख नृसिंह शिशुमार और त्रिविक्रम और मत्स्य और
त्रिमूर्त्ति और सीतेश और पुरुषोत्तम ३० यह तीनोचक्रोंवालियां
मूर्त्तियां भैनेथोडेसेंकथनकीतीयांहैं ३१ चौंचक्रोंवालीयांमूर्त्तियांभी
तिसमेहैं चौं चक्रों वाले हरिहर और सीताराम और जनार्दन
और त्रिविक्रम और कंसमर्दी और तैसेंलक्ष्मीनारायण३२ और
वटपत्रशयी और रामऔर वुद्ध और तिसकी न्याईं चतुर्भुज
और गोवर्धनधर यह चौंचक्रोंवालीयां मूर्त्तियांहैं ३३

पंचचक्रमूर्त्तयोपितत्रैव सीतारामहरिहयौपंच
चक्राविमौस्मृतौ ॥३४॥ षट्चक्रास्तत्रैवश्री
मूर्त्तिस्तारकब्रह्मसीतारामस्त्रिमूर्त्तिकःपुरुषोत्त
मोऽव्ययश्चैवमधुसूदनएवच पदाभिरामः षट्च
क्रामूर्त्तयःसमुदीरिताः ३५ सप्तचक्राअपि तत्रै
व अनंतः प्रथमोज्ञेयोनृसिंहःसर्वतोमुखः सप्त
चक्राविमौद्वौतुविज्ञेयौपूर्वसूरिभिः ३६ अष्टच
क्रास्तत्रैव। महानारायणश्चैवचक्रपाणिपिता
महौ अनंतइत्येतिचत्वारोह्यष्टचक्रास्समीरिताः
३७ नवचक्रमूर्त्तयस्तत्रैव विष्वक्सेनाद्रूपसर्वा
नवचक्राः समीरिताः ॥ ३८ ॥

पंचमूर्त्तियांभी तिसमें कथितहैं सीताराम इति सीताराम और
हरिहय यहदोनो पंचचक्रों वालीयां मूर्त्तियां कथन कीतियांहैं
॥ ३४ ॥ छेचक्रोंवालीयांभी तिसमेंहैं श्रीमूर्त्ति और तारकब्रह्म
और सीताराम और त्रिमूर्त्तिक और पुरुषोत्तम और अव्यय
और मधुसूदन और पदाभिराम यह छेचक्रों वालीयांमूर्त्तियांक
थनकीतियांहैं३५सप्तचक्रोंवालीयांभी तिसमेंहैंप्रथम अनंतजान
ना और संपूर्णतें है मुखजिसका सोनृसिंहयह दोनोंसप्तचक्रवा
लियांवुद्धिमानोंनेजाननेयोग्यहैं ३६ औरअठचक्रोंवालियांभीति
समेंहैंमहानारायणऔरचक्रपाणि और पितामह औरअनंतयह
अष्टचक्रों वाले कथनकीयेहैं३७नवचक्रोंवालियांमूर्त्तियांतिसमेंहैं
विष्वक्सेनसेलेकरसंपूर्ण नव चक्रो वालियां जाननियां ३८

दशचक्रमूर्त्तयस्तत्रैव हृषीकेशश्चगोविंदस्त्वनं
ते विश्वरूपकः महाविष्णुश्चपातालनृसिंहः
पुरुषोत्तमः सत्यवीरश्चतेसर्वेदशचक्राः समी
रिताः ॥ ३९॥अथैकादशचक्राः शुद्धानंतोहृद
यचक्रोरुद्रानंतस्तथैवह ॥ ४० ॥ अथद्वादश
चक्रमूर्त्तयःज्ञेयोद्वादशचक्रस्तुमुकुंदःसूर्यएवच
॥ ४१ ॥ पुनरष्टचक्रादित्रयोदशचक्रांतामूर्त्त
यः वसुचक्रा अनंताश्च अनंताःपूर्वसंज्ञकाः४२
अथचतुर्दशचक्रादिचतुर्विंशतिचक्रांतामूर्त्तयः
चतुर्दशादिचक्रैश्चयुक्ताविश्वंभरादिकाः अनं
तास्तत्त्वसंख्यांताविज्ञेयाविबुधैःक्रमात् ४३

दशचक्रों वालियां मूर्त्तियां भी तिसमें हैं हृषीकेशइति हृषीकेश और गोविंद और अनंत और विश्वरूपक और महाविष्णु और पातालनृसिंह और पुरुषोत्तमऔर सत्यवीर सो संपूर्ण दश चक्रों वाले कथन कीतेहैं ॥ ३९ ॥ इसतेंउपरंत ११ यारांचक्रोंवालेकथन करतेहैं शुद्धानंत और हृदयचक्र और तैसें रुद्रानंतहै ॥ ४० ॥ इसतेंउपरंत द्वादशचक्रोंवालियां मूर्त्तियां कोंकथनकरतेहैं मुकुंद और तैसें सूर्ययहदोनोद्वादशचक्रोंवाले जानने ४१ फेर अष्टचक्रतेंलेकर्के त्रयोदशचक्रांतमूर्त्तियांहैंअष्टचक्रोंवालाअनंतऔरपूर्वसंज्ञावालेअनंतहैं४२इसतेंउपरंतचतुर्दश चक्रतों लेकर्के बीसचक्रांत मूर्त्तियांहैंचौदो चक्रों कर्के युक्त विश्वंभरादिहैंऔर अनंतचौवीस बुद्धिमानोंनेक्रमतेंजानने ४३

अथपंचविंशतिचक्रादियावत्संभवचक्रमूर्त्तयः
यावत्संभवचक्रांकास्ततोनंताविशुद्धका इति
निश्चक्राश्रपिमूर्त्तयस्तत्रैवनिर्वाणवद्धौतौज्ञेयौ
योगीशोविष्णुपंजरः सद्योजातोवामदेवईशा
नश्चंद्रशेखरः १ भवस्तत्पुरुषः शंभुशिवना
भिरघोरकः कुंडलिन्यश्चसर्वास्तुनिश्चक्रामू
र्त्तयोमताः २ एवंलक्षणसंपन्नाःशिलाश्चक्रैर
लंकृताः पूजनीयाविशेषेणसर्वकामफलप्रदाः
इति ३ अथविशेषलक्षणानिब्रुवन्नादावुद्देश
तोमूर्त्तीरनुक्रामति मत्स्याद्यादशतत्त्वैश्चसंमि
ताःकेशवादयः अनंतस्तुभवेदाद्योविश्वरूप
स्ततोपरः ४

अब पंजोचक्रादि मूर्त्तीकहतेहैं योगीश और विष्णुपंजर सद्यो जात और वामदेव और ईशान और चंद्रशेखर १ और भव औरतत्पुरुष शंभुऔरशिवनाभि और अघोरकऔर कुंडलिनीयह संपूर्णचक्रसें रहितमूर्त्तीयांहैं २ इसप्रकार लक्षणोकर्के युक्त और चक्रों कर्के अलंकृत कीतीयांहोयां विशेष कर्के शिला पूज नेंयोग्यहैं सो पूर्ण कामफलदेनेवालीयांहैं ३ इसतें उपरंत वि शेष लक्षणाकों कथनकरताहुआ पहले उद्देशतें मूर्तीयांका अनुक्रमकरताहै दश तत्त्वोंकर्के युक्त मत्स्यादि और केशवादि मूर्तियांहैं अनंत आद्यहै तिसतेंपरे विश्वरूपहै ॥ ४ ॥

वैकुंठस्तुततःपश्चाद्धयग्रीवचतुर्भुजौ गदाधर पुंडरीकाक्षौपुंडरीकसुदर्शनौ ५ योगेश्वरस्तथा विष्णुःपंचयज्ञस्वरूपधृक् दत्तात्रेयः शिशुमारो हंसः परमहंसकः६ ॥ लक्ष्मीपातिरितिख्यातो गरुडध्वजएवच वटपत्रप्रशायीचततोविश्वंभरा भिधः ७॥ पीतांवरःसत्यवीरः श्रीवाचामृतका रकः नरशेषस्तुगरुडोवनमालीततःपरम् ८॥ मुरारिश्चमुकुंदश्चततः श्रीवत्सलांछनः धरणी धरोयोगराजः श्रीमूर्त्तिः श्रीसहायकः ९

वैकुंठइति वैकुंठ तिसतें पीछें हयग्रीव और चतुर्भुज और गदा धर और पुंडरीकाक्ष और पुंडरीक सुदर्शन ५ और योगेश्वर तिसतें उपरंत विष्णु और यज्ञस्वरूप धृक् औरदत्तात्रेय औरशि शुमार और हंस और परम हंसक ६ और लक्ष्मीकापति कथन कीयाहै औरगरुडध्वज और वटपत्रप्रशायी तिसतें उपरंतविश्वं भर ७ और पीतांवर और सत्य वीर और श्रीवाचामृत कारक और नर शेष और गरुड और वनमाली तिसतें परे ८ मुरारि और मुकुंद तिसतें उपरंत श्रीवत्सलांच्छन और धरणीधर और योगराज और श्रीमूर्त्ति और श्रीसहायक ९

देवदेवश्चकपिलोऽव्ययः क्षीराब्धिशाय्यपि मुसलायुधनामाचचक्रपाणिस्ततःपरम् वहुरूपोजगद्योनिस्त्रिमूर्तिश्चततः परम् ॥ १० ॥ विश्वक्सेनोहैहयश्चएते वैविष्णुमूर्त्तयः सद्योजातोवामदेवोघोरस्तत्पुरुषस्तथा ॥ ११ ॥ ईशानशर्वसंज्ञौद्वौशंकरश्चंद्रशेखरः शिवनाभिर्भवः पश्चाद्गणेशस्त्वेकएवहि ॥ १२ ॥ सूर्यस्तथाकुंडलिन्यः पंचायत्नमूर्त्तयः हरिहरोधर्मराजः परमेष्ठीपितामहः ॥ १३ ॥

और देवदेव और कपिल और अव्यय और क्षीराब्धिशायी और मुसलायुध और चक्रपाणि और तिनतें उपरांत बहुरूप और जगत् योनि तिसतें परे त्रिमूर्तिहै ॥ १० ॥ विश्वक्सेन इति विश्वक्सेन और हैहय यहविष्णु मूर्त्तयहैं सद्योजात और बामदेव और अघोर और तत्पुरुष ॥ ११ ॥ और ईशान और शर्व संज्ञावाले दोहैं और शंकर और चंद्रशेखर और शिवनाभि और भव और एकगणेश १२ और तैसें सूर्य और कुंडलिनी यह पंचआयत्न मूर्तिहैं हरिहर धर्मराज और परमेष्ठी और पितामह १३

हिरण्यगर्भःस्वयंभूश्च तद्वत्प्रोक्तश्चतुर्मुखः
एताः प्रकीर्णकशिलाः शालग्रामसमुद्भवाः ॥
१४ उद्देशक्रमतस्तासामुच्यंतेलक्षणान्यथ
१५ तत्रादौमत्स्याद्यामूर्त्तयः मत्स्यःकूर्मः
सूकरोनारसिंहस्तद्वत्खर्वोभार्गवश्चाथरामःरा
मः सीताप्राणनाथस्तथान्योरामः प्रोक्तोरौ
हिणेयोपिबुद्धः ॥ १ ॥ तथाकल्कीतिवि
ख्यातोह्यवताराविमोद्दश नारायणस्यक्रम
तः कथ्यंतेलक्षणान्यथ ॥ २ ॥
अथकूर्ममूर्त्तिलक्षणानि पद्मपुराणेकूर्मस्याका
रचक्रांकाशिलाकूर्मः प्रकीर्तितइति ॥ १ ॥

और हिरण्यगर्भ औरस्वयंभू और तिसकीन्याई चतुर्मुख कथन कीताहै यहशालग्रामतेउत्पन्नहोईया प्रकीर्णकशिलाहैं १४ उद्देशक्रमतें तिनोंकेलक्षण कथन करतेहैं तिसके आदमेंमत्स्यादि मूर्त्तियांकथन करतेहैं मत्स्यऔरकूर्म और सूकरनारसिंह तिसकी न्याईखर्व और भार्गव रामकया पर्शुराम और सीताकेप्राणनाथ राम और रोहिणेयराम कथनकीताहै क्याबलदेव औरबुद्ध १तथे ति तैसें कल्कीकथन कीयाहे विभुनारायणकेदशअवताहैंतिन केक्रमसें लक्षणाकों कथनकरतेहैं २इसतें उपरंत कूर्ममूर्त्तियोंके लक्षण पद्मपुराणमें कथन कीयेहैं कूर्मस्येति कूर्मके आकारकी न्याई है चक्र जिस शिलामें सोकूर्मकथन कीताहै १

ब्राह्मे कूर्मस्तथोन्नतःपृष्ठेवर्त्तुलावर्त्तशोभनःह रितंवर्णमाधत्तेकौस्तुभेनचचिह्नितः ॥ १ ॥ पुराणसंग्रहे तत्तल्लक्षणसंयुक्तंभानोर्वलयपंच कम् कूर्मरूपंसचक्रंयद्दुर्लभंसर्वकामदमिति ॥ २ ॥ विष्णुरहस्ये कूर्मस्तथोन्नतः पृष्ठेवर्त्तुला वर्त्तसंयुतः हरिद्वर्णः समाख्यातःकौस्तुभेनैव चिह्नितः ३ पाशांकुशांकितंदेवंनीलवर्णंविशार दम् कूर्मदेवंभजेतसद्यश्चलांश्रियमवाप्नुयात् ४ इंद्रनीलनिभास्थूलात्रिरेखालांछितोन्नता

ब्रह्मपुराण में और कथन कीता है जो पृष्ठमें उच्चा और गोलाकार और सुंदर और हरित वर्णको धारताहुआ और कौस्तुभकर्के चिह्नित सो कूर्महोताहै १ ॥ पुराण संग्रहमें और कथनकीयाहै तिनोंलक्षणोकर्के युक्त और सूर्यकी न्याईं गोल हैं पंचचक्र जिसमें और कूर्मरूप सचक्र पुरुषको पृथिवीमेंदु र्लभहै सो संपूर्ण कामनोंकेदेनेवाला होताहै २ विष्णुरहस्यमें और कथन कीताहै पृष्ठमें उच्चा और वर्तुलावर्त्त कर्के युक्त और हरिद्वर्णकर्के प्रकट और कौस्तुभकर्के चिह्नितसो कूर्महोताहै ३ पाश और अंकुश कर्के चिह्नित और नीलवर्ण वाला ऐसा जो कूर्मदेव तिसको जोभजताहै सोअचललक्ष्मीको प्राप्तहोताहै ४ इंद्रनीलेति इंद्रनील मणिकी न्याईं है प्रकाश जिसका और स्थूल और तीनहैं रेखाजिसकीयां और चिह्नोकर्के उच्चा ॥

कूर्मम्। रिवक्रांतादुर्लभासर्वकामदा ५॥ कूर्म चक्रोद्भवंपृष्ठेवर्तुलावर्तपूरितं सर्वकामप्रदं ज्ञेयंसुखसौभाग्यवर्द्धनम् ६ अंतेमोक्षोभवेत्तस्यपूजकस्यनसंशयः कूर्मः स्यादुन्नतशिराः पृष्ठभागेखुरान्वितः ७ विख्यातोदुर्लभः सर्वमनोरथफलप्रद इति ॥ ८ वराहपुराणे वर्तुलः कमठाकारोवनमालाङ्कचक्रवान् श्यामाभोहेमबिंदुश्चकूर्मस्तुभुविदुर्लभ इति ९ ग्रंथांतरे वर्तुलंश्यामस्दृढलपृष्ठभागेतथोन्नतम् द्विचक्रंवल्गुरेखाढ्यंकूर्मदेवंसनातनम् ॥१०॥

अंतजिनकावक्रा ऐसीजो कूर्ममूर्तिसोदुर्लभहै और संपूर्णकामकेदेनेवालीहोतीहै ५जिसकीपृष्ठमें कूर्मचक्रका उद्भवहोवे और वर्तुलकहा गोलाकारका आवर्त तिसकर्के पूरित सो संपूर्णकामके देनेवालाहै और सुखसौभाग्यके देनेवालाहै ६ तिसका पूजनकरणेवाला जोपुरुष सोमोक्षको प्राप्तहोताहै इसमें कुच्छ संशयनहि जो कूर्मऊंचे शिरवालाहोवे और पृष्ठभागमें खुर वर्के युक्त ७ सोदुर्लभहै और संपूर्ण मनोरथ फलके देनेवालाहोताहै ८ वराहपुराणमें और कथनकीयाहै वर्तुलकहा गोलाकार और कमठकहा कछोयकीसी है आकार जिसका और वनमालाके चिह्नवाला और दोचक्रोंवाला और श्यामहै आभाजिसकी स्वर्णकीहै बिंदुजिसमें ऐसाजो कूर्म सोपृथिवीमें दुर्लभहै ९ वर्तुलाकार शुद्ध श्याम पीठमें ऊंचा और दो चक्रों वाला और सुंदर रेखा युक्त ऐसा कूर्म होताहै ॥ १० ॥

चतुर्धाकूर्ममूर्त्तिःस्यात्पार्श्वभागेखुरान्विता वि
ख्याता दुर्लभासर्वमनोरथफलप्रदा ॥ ११ ॥
बिंदुत्रयांकिताशंखचक्रध्वजयुतापिवा दीर्घं
दक्षिणवामास्याद्भालोर्द्धलक्षपंचकैः॥ १२ ॥
भूषिताकूर्ममूर्त्तिः स्याद्दुर्लभासर्वकामदा वृ
त्तायताकूर्ममूर्त्तिः कनकच्छाविसंयुता ॥ १३ ॥
स्नुहीपुष्पाकृतिर्वापिचक्रस्योभयपार्श्वतः कू
र्ममूर्त्तिः खगेशानसर्वकामफलप्रदेति ॥१४ ॥

चतुर्धेति जो चार प्रकारकी कूर्म मूर्त्ति और एक पासेमें खुर करके युक्त और प्रकट सो दुर्लभहै और संपूर्णमनोरथोंके फल कोदेतीहै ११ और तीनबिंदुकरके चोहत और शंख औरचक्र और ध्वजा इन करके युक्त दक्षिण और वाम पासेमें दीर्घ और सूर्यके जो पंच चक्र तिनो करके भूषित१२ऐसी जो कूर्म मूर्त्ति सो दुर्लभहै और संपूर्ण कामके देनेवाली होतीहै और गोलाकार जो कूर्म मूर्त्ति और स्वर्णके प्रकाशकी न्याई १३ और चक्रके दोनो पासयो में स्नुही क्या डंडे थोरके पुष्प की न्याईहै आकृति जिसकी हेगरुड ऐसीजो कूर्ममूर्त्ति सो संपूर्णकाम फलको देतीहै १४

गारुडे वर्त्तुलाकमठाकारादीर्घद्वारा तुवैखग
नाभिचक्रयुतारम्याकूर्माकारातुपार्श्वतः १५
स्थिरासनाज्वलत्पृष्ठाउन्नतानीललोहिता कू
र्ममूर्त्तिरितिख्यातापुत्रपौत्रविवर्द्धिनी ॥१६॥
अथवराहमूर्त्तिलक्षणं चतुर्धावराहः स्या
त्तत्राद्यःशुद्धसंज्ञकःपृथ्वीवराहस्त्वपरस्ततोल
क्ष्मीवराहकः श्वेतवराहकश्चैवतेषांलक्षणमु
च्यते १

गरुड पुराणमें और कथन कीताहै हेगरुड वर्तुल
क्या गोलाकार और कमठ क्या कछोपडकी न्याई आ
कार और दीर्घ मुखवाली और नाभि चक्र करके युक्त और रम्य
क्यासुंदरऔरपासेतें कूर्माकार १५औरस्थिरासन और प्रकाशवाली
पृष्ठजिसकी और उंची और नीललोहित ऐसी कूर्ममूर्त्ति
कथन कीतीहै सो पुत्र और पोत्रके वधाने वाली होतीहै १६
इसतें उपरंत वाराह मूर्त्तिके लक्षणकों कथन करतेहैं चतुर्धेति
इसमें वाराह क्या सूकरकी चारप्रकारकी मूर्त्तिहै प्रथम शुद्ध
संज्ञक क्या शुद्धवराह और पृथ्वी वराह और तिसतेंपरे ल
क्ष्मीवराहक और श्वेतवाराहक तिनोका लक्षण कथन क
रताहै १

तत्रशुद्धवराहलक्षणं पद्मपुराणे वराहस्सतु विज्ञेयश्चक्रंयस्यसहांबुजं तस्यसंपूजनाद्देही प्राप्नोतिमनसेप्सितम् २ वराहाकृतिराभुग्न श्चक्रादिभिरलंकृतः वराहइतिसंप्रोक्तःसर्व कामफलप्रदइति ३ ग्रंथांतरेपि पृष्ठरेखासमा युक्तो वराहाकृतिरेववा आस्यमात्रंतुवैताक्ष्य पादलांगूलकंतथा ४ अतसीकुसुमप्रख्यानी लोत्पलनिभातथा दीर्घाकारातुवैदीर्घाहारयु क्तासजर्जरा ५

तिसमें शुद्धवराहका लक्षण पद्मपुराणमें कथन कीताहै जिसको कमलकाहै चक्र सोवराह क्या सूकर मूर्त्ति जान नोतिसके पूजनतें पुरुष संपूर्ण कामनाके फलको प्राप्तहोता है २ और वराहकीन्याईहैआकृतिजिसकी और आभुग्नक्यातेरडी और चक्रोंकरकेंजोअलंकृतसोवराहमूर्तिसंपूर्णकामनाकेदेनेवाली कथनकीतीहै ३ और ग्रंथमेंकथनकीताहैपृष्ठमेंजोरेखातिसककें यु क्त और वाराहकी न्याईहै आकृति जिसकी अथवा मुखमात्र हैगरुड वा सूरकी न्याई है पाद वापुच्छ जिसकी ४ और अल सीके फूलकी न्याई प्रकट और नीला जो कमल तिसकीन्या ई है कांतिजिसकी और दीर्घ आकार वाली और हार करकें यु क्त और जर्जरा क्या जीर्ण ५

पृष्ठोन्नताचदीर्घास्याबामतश्चक्रयुग्मकम् दृश्य
ते कौस्तुभ.कारारेखापृष्ठेचपार्श्वतः ६ वराह
मूर्तिरित्युक्ताराज्यलक्ष्मीप्रदायिका पुत्रपौत्रा
दिवृद्धिंचप्रजाज्ञानप्रदासदेति ७ वाराहे वरा
हृशक्तिलिंगंतुचक्रेचविषमेस्थिते इंद्रनीलनिभं
स्थूलं त्रिरेखालांछितंशुभमिति ८ कूर्मांगानी
वचपरेद्वाराहंरूपमव्ययम् गोष्पदंयत्रदृश्ये
त्तवराहोनात्रसंशयः९ अथधरणीवराहलक्षणं

पृष्ठतें उंचा और दीर्घ और बामपार्श्वतें चक्र युग्म और कौ-
स्तुभ मणिकी न्याई आकार वाली पृष्ठमें और पार्श्वतें रेखा
ऐसी मूर्तिजो देखिये सो वराह मूर्ति कथन कीतीहै सोराज्य
लक्ष्मी कों देतीहै और पुत्र पौत्रादियांकों बधातीहै प्रजा और
ज्ञानकोंसदादेतीहै ७ वराहपुराणमें और कथनकीताहै शक्तिका
है चिह्न जिसमें और विषम चक्रों करके स्थित और इंद्रनीलम
णिकी न्याईहै कांतिजिसकी और स्थूल और तीनरेखोंवालाहै
चिन्ह जिसमें और शुभ सो वराहमूर्त्ति होतीहै ८ जिस अव्यय
रूपकों कूर्मके अंगोंकी न्याई देखिये सो वराह मूर्त्ति होतीहै
और जिसमें गौकापैर देखिये सोभी वराह मूर्त्ति होतीहै इसमें
कुछ संशयनहि ९ इसतें उपरंत धरणी बराहका लक्षणहै ॥

वाराहे दीर्घास्यंश्यामलाकारंपृथग्वलश्चवे
ष्टितं द्वारदेशेऽलसच्चक्रंभूवराहंविदुर्बुधाः १०
पुराणसंग्रहे अधश्चक्रमसंदिग्धंपृष्ठोन्नतमपी
नकम् वराहंधान्यफलदंसर्वैराराधनीयकं ११
अंकुशाकारवदनंभूवराहंशुभंविदुरिति ॥ अथ
लक्ष्मीवराहलक्षणम् वाराहे दक्षपार्श्वगतेचक्रे
समलग्नेप्रदेशतः वनमालायुतंलक्ष्मीवराहःप
रिकीर्त्तितइति १२

वराहपुराणमें कथन कीयाहे दीर्घहै मुख जिसका और श्यामहै आकार जिसका और भिन्न चक्रों करके वेष्टित और द्वार देशमें प्रकाशमान है चक्र जिसमें तिसकों बुद्धिमान् वराह कथनकरतेहैं १० पुराण संग्रहमें कथन कीयाहै अधइति अधाहे चक्र जिसके और असंदिग्ध और पृष्ठतें उंचा और अपीनक क्या नमोटा ऐसा जो वराह सो धान्य फल कों देताहे और तिसकी संपूर्ण पुरुषोंने आराधनाकरणी चाहिये ११ और जिसके मुखमें अंकुशका आकार होवे ऐसा जो भूवराह तिसकों शुभ जानतेहैं इसतें उपरंत लक्ष्मी वराहके लक्षण कों कथन करतेहैं वराह पुराणमें जिसके दहनेपासेमें प्रदेशतें समलग्नक्याइको जैसेदोचक्र हैं और वनमालाकर्के युक्त सोलक्ष्मी वराहकथन करीदाहै १२

अथश्वेतवराहलक्षणं वाराहे दीर्घघोणासमा युक्तमेकदंष्ट्रंसुनिर्मलंवनमालायुतंरम्यंश्वेतवाराहमुच्यते १३ नृसिंहपुराणे गोक्षीरवर्णमतुलंवनमालांकितंतथा श्वेतवाराहकंनामतस्यपुण्यमनंतकमिति १४ इतिवराहमूर्त्तिलक्षणानि अथविदारणराक्षसांतकनृसिंहयोर्लक्षणम् ब्रह्मांडे विदारणाभिधानंस्यान्नृसिंहंदीर्घकेसरम् अंतश्चक्रंवृहद्द्वारंदाक्षिणोन्नतमस्तकम् विदारणमितिख्यातंदंष्ट्राभ्यामुपशोभितम् १

इसतें उपरंत श्वेत वराह का लक्षण कथन कीयाहै वराह पुराणमें दीर्घहै नासा जिसकीयां एक दाडा करके युक्त और निर्मल और वनमाला करके युत और रम्य सो श्वेतवराह कथन कीयाहै १३ नृसिंहपुराणमे और कथन कीयाहै गोके दूधकी न्याईहे रंग जिसका औरअतुल औरवनमालाका चिन्ह जिसमें तिसका श्वेतवराह नामहै तिसके पूजनका पुण्य अनंत होताहै १४इसतें उपरंत विदारणनृसिंह और राक्षसांतकनृसिंहकेलक्षण कों कथन करतेहैं ब्रह्मांडपुराणमें विदारणेति विदारण नामक कें जो नृसिंह कैसाहे दीर्घहैं वाल जिसके और अंतरमें चक्र और वाहरमें हे मुख जिसका औरदक्षिणों उचाहै मस्तक जिसका और दाडोंकरके सुंदर सो विदारण कथन कीताहै १

ब्रह्मचर्यविलोपेन नरसिंहोर्चितोयदिचौरशत्रु भयंतस्यवह्निनादह्यतेगृहम् ॥ ति २ कपिलोग्रंथि मालाढ्योरक्तविंदुसमान्वितः विदारणनृसिंहो सौदीर्घकेसरशोभितः ३ अथराक्षसांतकनृसिंह लक्षणं ब्रह्मांडे बहुच्छिद्रंभिन्नचक्रंसुवर्णकनका चितम् तद्राक्षसांतकंज्ञेयंनृसिंहंगृहदाहकम् ४ अस्पष्टचक्रमत्स्यास्यंकेशभारमनोहरं तच्छि न्नराक्षसंज्ञेयंनृसिंहंगृहदाहकम् ५ अथवामन मूर्त्तिलक्षणम् वामनाख्यंहरेर्मूर्त्तिर्द्विविधापरि कीर्तिताशुद्धवामनसंज्ञैकात्वपरादधिवामनाद्

जेकरब्रह्मचर्यतें विनापुरुषनरसिंहको पूजताहैतिसकों चोरशत्रुतें भयहोताहै औरतिसका गृह अग्निकरकें दग्धहोताहै २ और कपि लवर्णवाला और ग्रंथिमाला करकें युक्त और रक्त विंदुकरकें युक्त और दीर्घ जो बालतिनोंकरकें सुंदर सो विदारण नृसिंह कथन कीयाहै ३ इसतें उपरंतराक्षसांतकके लक्षणकों कथन करतेहैं ब्रह्मांड पुराण में बहुत छिद्रोंवाला और भिन्नहै चक्र जिसमें और सुंदर वर्णवाला और स्वर्णकीयांहैं रेखा जिसमें ऐसाजो नृसिंह सो घरके दाहकरणे वाला राक्षसांतक जानना ४ और अस्पष्टहै चक्र जिसमें और मछकी न्याईं है मुख जिसका और बडे हैं केश जिसके सो नृसिंह गृहके दाहकरणेवाला छिन्नरा क्षस जानना ५ इसते उपरंत वामन मूर्तिका लक्षणकथनकरते हैं वामन नामककें हरिकी मूर्ति दोप्रकारकी कथन कीतीहै सो शुद्धवामन और दधिवामन नामककेंहै ६ ॥

शुद्धवामनलक्षणं पद्मपुराणे वामनाख्योभवे
द्देवोहूस्वोयः स्यान्महाद्युतिः ऊर्ध्वचक्रस्त्वध
श्चक्रः सोपिस्वार्थप्रदोनृणाम् ॥ ७ ॥
ब्रह्मपुराणे ॥ अतसीपुष्पसंकाशोविंदुनापरि
परिशोभितः वर्त्तुलश्चातिहूस्वश्चवामनः प
रिकीर्त्तित इति ॥ ८ ॥ पुराणसंग्रहे अ
तसीपुष्पसंकाशोविंदुनापरिभूषितः पारिजा
तध्वजोवज्रोवर्तुलश्चातिशोभनः ॥ ९ ॥ अ
न्नपानसम्वृद्धिः स्यात्सुखसौभाग्यवर्धनः आ
रोग्यसुखदश्चैववामनः परिकीर्त्तित इति १०

शुद्धवामनका लक्षण पद्मपुराणने कथन कीयाहै जो हूस्व
क्या छोटा और बडेतेजवाला और उपर है चक्र जिसके
और अधः चक्र वाला सो वामन नाम करके देव है सो
पुरुषोंको स्वार्थके देने वाला होताहै ७ पद्मपुराणमें और
कथन कीताहै जो अलसीके पुष्पकी न्याई प्रकाशमान और
विंदु करके शोभायमान और वर्त्तुल क्या गोलाकार और छो
टा जैसा सो वामनकथन कीयाहै ८ पुराण संग्रहमें और कथ
न कीयाहै जो अलसीके पुष्पकीन्याई प्रकाशमान और विंदु
करके भूषित और पारिजात वृक्षकीहै ध्वजा जिसमें और वज्रके
चिह्नवाला और गोलाकार और सुंदर ९ सोअन्नपानकीवृद्धिदेने
वालाहोताहै और सुखसौभाग्यकेवधानेवाला और आरोग्यऔर
सुखके देनेवाला वामन कथन कीयाहै ॥ १०

ग्रंथांतरे कंदर्पकुसुमाकाररेखापंचकभूषितः
वर्तुलश्चातिह्रस्वश्चवामनःपरिकीर्त्तितइति
११ वाराहे इंद्रनीलनिभाभासंवनमालांबुजो
ज्ज्वलम् ह्रस्वंचवर्त्तुलंचैववामनंपरिचक्षतइ
ति १२ ब्रह्मांडे ः र्त्तुलांस्निग्धमत्यंतंस्पष्टच
क्रसमन्वितम् ह्रस्वमुन्नतमुच्चैश्च दीर्घास्यमति
गव्हरम् १३ स्फुरद्रेखावलियुतंनाभिस्तस्यो
न्नताभवेत् चक्रस्योभयपार्श्वेतुस्नुहीपुष्पाकृति
र्भवेत् १४ केशभारंतुवैतार्क्ष्यंदृश्यतेचक्रपार्श्व
तःवामनोगृहिणांश्रेष्ठःसुखसौभाग्यसंपद १५

ग्रंथांतर में और कथनकीयाहै कंदर्पइति कंदर्पके पुष्पकीन्या
ईहै आकार जिनका ऐसी पंचरेखोंकर्केभूषित और वर्त्तुल क्या
गोलाकार और ह्रस्वक्याछोटासोवामन कथनकीयाहै ११ वरा
हपुराण में और कथन कीताहै जो इंद्रनीलमणिकी न्याई प्र
काशवाला और वनमाला और कमलके प्रकाशवाला और
छोटाजैसा और गोलाकार सोवामनकथनकीताहै १२ ब्रह्मांडपु
राणमें और कथन कीताहै वर्त्तुल क्या गोलाकार और अति
शयकर्कोंचिंदाऔर स्पष्टचक्र कर्कें युक्त और ह्रस्व और अतिश
यकर्कें उच्चाऔरवडाहैमुखजिसका और अतिगव्हर १३ और
प्रकाशमान जो रेखाकीपंक्तितिस कर्कें युक्ततिसकीनाभिउच्ची
होवे और चक्रकेदोनोंपासयोंमें थोरके पुष्पकी आकृतिहोवे १४
हेगरुड चक्रके पासेतें केशभार जिसके देखियेसोवामनगृहस्थी
यांकोंश्रेष्ठहोताहैऔरसुखऔरसौभाग्य और संपदाकोंदेताहै १५

गृहपुत्रान्नवृद्धिंचभूपालंदिशतिध्रुवम् मध्य
चक्रंवामनंचनृणामोप्सितदायकम् ॥ १६
अतसीपुष्पसंख्यं च किंचिदुन्नतमस्तकम् त
द्वामनंकामदंतु किंचिद्व्यक्तचक्रकम् ॥ १७ ॥
वर्त्तुलंनीलमेघाभंवनमालासमन्वितम् सूक्ष्म
रंध्रंवृहत्कुक्षिवामनं भुविदुर्लभमिति ॥ १८ ॥
अथपरशुराममूर्त्तिलक्षणम् जामदग्न्यस्तुभ
गवान्द्विविधःपरिकीर्त्तितः एकस्तूग्रतया
ख्यातोद्वितीयः शांतसंज्ञकः ॥ १९ ॥

राजाको निश्चयकर्के गृह और पुत्र और अन्नकी वृद्धि कर्ताहै और जिसवामनके मध्यमे चक्र होवे सोपुरुषोंको इच्छितफल देताहै १६ अलसीके पुष्पकीन्याई प्रकाशमान और कुच्छक उच्चाहै मस्तक जिसका और कुच्छक प्रकटहै चक्र जिसमें सो वामन कामनाके देनेवालाहोताहै १७ और वर्त्तुल क्या गोला कार औंर नीले मेघकी न्याईहै आभाजिसकी और वनमाला कर्के युक्त और सूक्ष्महैं छिद्रजिसमें और बडीहै कुक्षि जिसकी ऐसाजो वामन सोपृथिवीमे दुर्लभहै १८ इसतें उपरंत परशुराम कीमूर्त्तिका लक्षण कथनकरतेहैं परशुरामकीयांदोमूर्त्तिया कथन कीनियांहैं एकतो उग्र दूसरी शांतसंज्ञावालीहै १९ ॥

पुराणसंग्रहे सितकृष्णारुणोपेतंदीर्घाकारंदृ
ढखिलम् भिन्नभागगतंचक्रंवामदक्षिणतोपिवा
चक्रभागेभवेद्बिंदुः परश्वाकृतिरेववा २० ॥
पृष्ठेवापार्श्वतोवापिरेखादंष्ट्राकृतिर्भवेत् जाम
दग्न्यस्तुभगवानर्चनीयोमहीभृतामिति २१
विष्णुरहस्ये बाणचापांकितोदेवः स्वर्णवर्णः
सुखासनः जमदग्निसुतोरामोमुक्तिंभक्तानृप्र
यच्छतीति २२ पुराणांतरे लसत्परशुरेखा
ढ्योदूर्वाश्यामस्तथोन्नतः नाभिदेशलसच्चक्रो
रामोसौजमदग्निज इति २३

पुराणसंग्रहमेकथनकीयाहै सित क्या चिट्टा और कृष्ण और अ
रुणक्या लाल इनोवर्णोंकरके युक्त और दीर्घ आकारवाला और
बडीहै खुडजिसमें और वाम और दक्षिणमें भिन्नभिन्नचक्रहोवे
वाचक्रके भागमें बिंदुवापर्शुकी आकृति होवे सोपरशुरामकी
मूर्त्ति होतीहै २० पृष्ठइति जिसकी पृष्ठमें वा पासेंतें दाडाकी
न्याईरेखा होवेसोजामदग्न्यक्या परशुरामहोताहै राजोंनेपूजने
योग्यहै २१ विष्णुरहस्यमें औरकथनकीयाहै बाण और चापक्या
धनुषतिनोंकाहै चिन्ह जिसमे सो देव और स्वर्णके वर्णवाला
और सुखवालाहै आसन जिसका ऐसा जो जमदग्निका पुत्र
राम क्या परशुराम सो भक्तोंको मुक्ति देताहै ॥ २२ पुराणां
तरमें औरकथनकीयाहै प्रकाशमान जो कुहाडेकी रेखा तिस
करके युक्त और घासकीन्याईं श्याम और उच्चा और नाभिदेशमें
प्रकाशमानहै चक्र जिसके सोजमदग्निका पुत्र परशुरामहै २३

अथ शांतपरशुरामलक्षणं पुराण संग्रहे केव
ललांच्छनंपृष्ठपरश्वाकृतिरेववा सजामदग्नि
र्भगवान्शांताख्यः शांतिदोर्चित इति २४ ॥
दाशरथिरामलक्षणं पुराणसंग्रहे राममूर्ति
द्वादशधातत्राद्योरामएवाहि रामवालोद्वितीयः
स्यात्सीतारामःतृतीयकः२५ तारकब्रह्मसंज्ञौ
चदशकंठकुलांतकः वीरोविजयकश्चान्योहष्ट
कोदंडपूर्वकः २६ कालिनाशकरोरामः श्री
रामश्चततः परम् पद्माभिरामसंज्ञःस्याद्द्वाद
शः परिकीर्तित इति २७

इसतें उपरंत शांतपरशुरामका लक्षण पुराण संग्रहमें कथन
कीयाहै जिसकी पृष्टमें घुवाडेकी न्याईं जो रेखा तिसका
चिन्हहोवे सो परशुराम शांत नाम करकें होताहै सो पूजिया
हुआ शांतिकों देताहै ॥ २४
दशरथका पुत्र जो रामचंद्र तिसका लक्षण पुराण संग्रहमें
कथन कियाहै राममूर्त्तिरिति बारां प्रकार की रामचंद्रकी मू
र्ति कथन कीतीहै तिनोमें प्रथम रामचंद्र १ दूसरी रामबाल
२ और तीसरी सीताराम ॥ ३ ॥ और तारक४ब्रह्म ॥५॥और
दशकंठकुलांतक ॥ ६ ॥ और वीर ॥ ७ ॥ और विजयक ८
और हष्टकोदंडपूर्वक ९ और कालिनाशकर १० और श्रीराम
११ और पद्माभिराम १२ यहबारां मूर्त्तियां कथनकीतीयांहैं२७

राममूर्त्तिलक्षणं ब्रह्मपुराणे रामचंद्रस्तथास्नि
ग्धो दूर्वाभश्चक्रशोभनः पृष्ठदंडस्तथापार्श्वेरे
खाद्वितयसंयुत इति २८ पुराणसंग्रहे वाणेन
धनुषायुक्तः पद्मरेखासमन्वितःकोदंडीकुक्कुटां
डाभोमध्येचक्रसमन्वितः २९ कल्पद्रुमसमा
युक्तः पृष्ठश्यामवर्णकः रामोदाशरथिर्ज्ञेयो
दुर्लभोभुवनत्रये इति ३० ग्रंथांतरे धनुर्बाण
युतंदीप्तंस्थूलदीर्घंसबिंदुकम् नाभिचक्रंबहु
च्छिद्रंश्यामंदाशरथिंविदुरिति ३१

रामचंद्र की मूर्त्तिका लक्षणब्रह्मपुराणमें कथन कीयाहै रामचंद्र इतिजोस्निग्ध और घासकी न्याईहै आभा जिसकी और चक्र करकें शोभायमान और पृष्ठमें दंड और तैसें पासेमें दोरेखां करकें युक्त सो रामचंद्रकी मूर्त्ति कथन कीतीहै२८पुराण संग्रह में और कथन कीयाहै वाण और धनुष करकेंयुक्त और पद्मकीरेखा करकें समन्वित और कोदंड क्या धनुषहै विद्यमान जिसमें और कुकुडके आंडेकी न्याईहै आभा जिसकी और मध्यमेंहै चक्रजिसके २९ और कल्प वृक्षके सदृश और पृष्ठमें श्यामवर्ण वाला सो दशरथका पुत्र रामचंद्र जानना सो तीन भुवनोमें दुर्लभहै ॥ ३० ॥ ग्रंथांतरमे और कहाहै धनुषऔरवाणकरकेंयुक्त और प्रकाशमानऔरस्थूल और दीर्घ और बिंदुकरकें युक्त औ नाभिमें हे चक्र जिसके और बहुत छिद्रों वाला और श्याम सो दश रथका पुत्र रामचंद्र जानना ३१

गरुडपुराणे एकचक्रातुवदनेकृष्णवर्णासुशोभ
ना सारामममूर्त्तिर्विज्ञेयापूजकस्यफलप्रदेति ३२
अथसीतारामलक्षणं ब्रह्मपुराणे एकस्मिन्नेववद
नेचतुश्चक्रोंबुदप्रभः चापबाणांकुशच्छत्रध्वज
चामरसंयुतः ३३ वनमालाधरोदेवः सीतारा
मः प्रकीर्त्तितः सर्वसौभाग्यदःप्रोक्तःसर्वत्रवि
जयप्रदः ३४ अथवा द्वारद्वयेचतुश्चक्रःक्रम
तश्चैकचक्रवान् बाणतूणीरचापाढ्यः सीतारा
मः स्रगन्वितः ३५

गरुड पुराणमें और कथन कीताहै जिसके मुखमें एकचक्र और श्याम वर्ण वाली और सुंदर सो रामचंद्र की मूर्त्तिजाननी पूजनवाले पुरुषकों फलके देने वालीहोतीहै ३२ इसतें उपरंत सीतारामका लक्षण ब्रह्मपुराणमें कथन कीताहै जिसके मुखमें चार चक्र और मेघकी न्याई है प्रभा जिसकी और चाप क्या धनुष और बाणऔर अंकुशक्या कुंडा और छत्र औरध्वजा और चामर इनोकर्के युक्त३३ और बनमालाके धारणेवाला जो देव सो सीताराम कथन कीयाहै सो संपूर्ण भाग्यके देनें वाला और संपूर्ण स्थान में जयके देणेवाला कथन कीताहै ३४ और कथन करतेहैं दोनो द्वार क्या मुखोंमें चार चक्र होण अथवा एक मुख में एक चक्रहोवे और बाण और भथ्यडा और धनुष कर्के युक्त और बनमाला कर्के युक्त सो सीताराम कथन कीयाहै ॥ ३५

पाद्मे कुक्कुटांडसमाकारश्चधश्चक्रेचकुंडलम् द्वार
देशेसमेचक्रेकल्पवृक्षसुचिह्नितः ३६ वामपार्श्वे
शिरश्चक्रो रेखया शुभलांछितःसीतारामःसवि
ज्ञेयोभुक्तिमुक्तिफलप्रद इति ३७ तारकब्रह्मसी
तारामलक्षणंपाद्मे अंतःक्षतेनधनुषागोखुरेणच
लांछितःविलत्रयसमायुक्तःखड्गदर्शनसंयुतः
३८श्यामलोन्नतपृष्ठश्चस्थूलजंबूफलाकृतिःसी
तारामःसविज्ञेयस्तारकब्रह्मसंज्ञितइति ॥ ३९
दशकंठकुलांतकरामलक्षणं ब्रह्मांडे

पद्मपुराणमें और कथन कीयाहै कुक्कुटेति कुक्कुट के आंडेकी न्याईहै आकाराजिसकाऔर अधासेंहै चक्र और कुंडलजिसमें और द्वारदेशक्यामुखमें दोचक्र जिसकेऔर कल्पवृक्षकाहै चिह्न जिसमें ३६ और वामपासेमें और शिरमें चक्र जिसके और रेखाकर्के सुंदरहै चिन्हजिसमें सो सीतारामजानना सो भुक्ति और मुक्तिकेदेनेवालाहोताहै ३७ तारकब्रह्म जो सीताराम ति सका लक्षण पद्मपुराणमें कथनकीयाहै अंतरजोक्षत और धनुष और गोखुरतिसकर्के लांछित क्या चिन्हित और तीन जो छिद्र तिनोकर्के युक्त औरखड्गऔरसुदर्शनचक्रकर्केयुक्त ३८ और श्याम औरउच्चीहै पृष्ठ जिसकी और स्थूलजो जंबूफल तिसकी न्याईं हैआकृति जिसकी सोतारकब्रह्मसंज्ञावालासीतारामजानना ३९ दशकंठकुलांतक जो रामचंद्र तिसका लक्षण ब्रह्मांडपुराणमें कथन कीयाहै ॥

कोदंडीकुक्कुटांडाभःश्यामलः पृथुसंततःरेखाद्व
यसमोपेतोद्वारपार्श्वेधनुर्धरः ४० धनुषाकृति
कारेखादक्षपार्श्वेयुतापिवा पृष्ठतोवाभवेद्रामो
दशकंठकुलांतकइति ४१ अथवीररामलक्षणं
ब्रह्मांडे वाणतूणीरचापाढ्यः कुंडलीस्त्रक्सम
न्वितःसूक्ष्मकेसरश्चक्राढ्योवीररामःश्रियावहः
४२विजयरामलक्षणं ब्रह्मांडे दिव्यवाणेनसं
युक्तश्चापतूणीरसंयुतः करालवदनोयस्तु
विंदुयुक्चक्रशोभिताः सस्याद्विजयरामाख्यः
केसरोपेतचक्रकइति ४३ ॥

कोदंडीति कोदंडी क्या धनुष धारया हुआहै जिसने और
कुक्कुटकी न्याई है आभा जिसकी और श्याम और विस्तार
वाला औरदोरेखोंककै युक्त और मुखमें धनुषधारीका चिन्हहोवे
४०और दक्षिणपासेमेंवापृष्ठमें धनुषकी आकृति वाली जिसमें
रेखाहोवे सोदशकंठकुलांतकरामचंद्रहोताहै ४१ इसतें उपरंत
वीर जो रामचंद्र तिसकालक्षण ब्रह्मांडपुराणमें कथन कीयाहै
जो वाण और भथ्यडा और चापककें युक्त कुंडली और माला
ककें और सूक्ष्म केसरक... युक्त सो श्रीके प्राप्तकरणेवाला वीर
रामचंद्रहोताहै ४२ विजयजोरामचंद्र तिसकालक्षण ब्रह्मांडपुरा
णमें कथनकीताहै जो सुंदर वाणककें युक्तऔर चाप औरथ्यडे
ककेंयुक्तकरालहै मुखजिसकाऔरविंदुककें युक्तऔरचक्रककेंसुंदर
औरकेसरयुक्त चक्रवाला सोविजयरामकथन करीदाहै ४३

हृष्टरामलक्षणम् ब्रह्मांडे मूर्ध्निमालाधनुर्बाणौ पार्श्वेखुरयुतस्तथा हृष्टराम इतिप्रोक्तोभुक्तिमुक्तिफलप्रदइति४४ कोदंडिरामलक्षणं ब्रह्मांडे धनुषैकेनसंयुक्तोवर्तुलः किंचिदायतःकोदंडश मनामास्याच्छुद्धनीलांबुदप्रभ इति ४५ कालिनाशकररामलक्षणंपाद्मे जंबूफलसमाकारःकृष्णवर्णःसबिंदुकः पृष्ठेशुषिरमास्येचचक्रेमकरकुंडले ४६ ललाटेहेमवाणेनबिंदुनाधनुषायुत ःकलिनाशकरःप्रोक्तः सर्वकामफलप्रदः४७

हृष्ट जो रामचंद्र तिसका लक्षण ब्रह्मांड पुराणमें कथन कीयाहै जिसके मस्तकमें माला होवे और धनुष और बाण और तैसें खुर करकें युक्त होवे सो भुक्ति और मुक्ति फलके देनेवाला हृष्टराम कथन कीताहै ४४ कोदंड जो राम तिसका लक्षण ब्रह्मांडपुराणमें कथन करतेहैं जो एक धनुष करकें युक्त और वर्तुल क्या गोलाकार और कुच्छक विस्तार वाला और शुद्धजोमेघ तिसकी न्याईंहै प्रभा जिसकी सो कोदंड नामकर्कें रामहोताहै ४५ कलिनाशकर जो राम तिसका लक्षण कथन करतेहैं पद्मपुराणमें जंबूफलकीन्याईंहै आकार जिसका और कृष्णवर्ण वाला और बिंदुवाला औरपृष्ठ और मुखमेंहै छिद्र जिसके औरमकरक्यामच्छ और कुंडलकाहै चक्र जिसमें४६ और मस्तकमें सुवर्णकाजोबाण और बिंदु और धनुष करकेंजोयुक्तसो संपूर्ण कामफलकेदेनेवालाकलिनाशकररामकथनकीताहै ४७

अपुत्रोलभतेपुत्रंसर्वमंगलकारणमिति। श्रीरा
मलक्षणं पाद्मे वदनेष्वेकैकरदनश्चतुर्वक्रोंवुद
प्रभः श्रीराम इति विख्यातःपीतकेसरचक्रयु
क् ४८वाराहे कोदंडीकुक्कुटांडाभःश्यामलोन्न
तपृष्ठकः रेखाद्वयसमायुक्तोद्वारपार्श्वेधनुर्धरः
श्रीराम इति विख्यातोभुक्तिमुक्तिफलप्रदइति
४९ पदाभिरामलक्षणं ब्रह्मांडे पूर्वभागेत्रिव
दनःपार्श्वचक्रेणसंयुतः वाणतूणीरचापाढ्यः
कल्पवृक्षसमन्वितः ५०

अपुत्रइति और जो अपुत्र सो पुत्रको प्राप्त होताहै और सो
संपूर्ण मंगलाचार को करणे वाला होताहे ॥ श्रीरामका लक्ष
ण पद्मपुराणमें कथन कीयाहै मुख जिसके चार होन और ए
क एक मुखमें एक एक दंद हो और मेघ की न्याईहै प्रभा
जिसकी और पीलीयां रेखा वाला जो चक्र तिस करके जो
युक्त होवे सो श्रीराम कथन करीदाहै ४८वराह पुराणमें और
कथन कीताहै कोदंडी क्या धनुष के धारणे वाला और कु
क्कुटकीन्याईहै आभा जिसकी और श्याम और उच्चीहे पृष्ठजिस
की और दोरेखां करके युक्त और मस्तकमें धनुष धारीका चिह्न
सो भुक्ति और मुक्तिके देने वाला श्रीराम कथन कीयाहै ४९
ब्रह्मांडपुराणमें पदाभिरामका लक्षण कहाहै पूर्वभागमें तीनहैं
चक्र जिसमें और पासमें जो चक्र तिस करके युक्त वाण और भ
थ्यडा और चाप करके युक्त और कल्पवृक्षकाहै चक्र जिसमें ५०

सिंहासनसमारूढोरामःपरिजनैःसह पदाभि
रामइत्युक्तः सर्वलक्ष्मीप्रदोनृणामिति ५१
बलराममूर्त्तिलक्षणान्युच्यंते पुराणसंग्रहे बल
रामः सीरपाणिः प्रलंबघ्नइतित्रयः प्रभेदा बल
रामस्यतेषांलक्षणमुच्यते ५२ दीर्घाकारोबृह
द्वारः श्वेतलांगलचिह्नितः एकचक्रःसमुसलः
पृष्ठेनीलोत्पलप्रभः बलरामइतिख्यातोबलवं
शविवर्धन इति ५३ ग्रंथांतरे श्वेताभोहलचि
ह्नाढ्योमुसलाकृतिरेववा नीलोत्पलप्रसूनाभः
पृष्ठेघोणासनोपिवा बलशालीभवेद्रामोबलवं
शविवर्धन इति ५४ ॥

और संबंधियोंके साथ सिंहासनमें आरूढ सो संपूर्ण पुरुषोंको संपूर्ण लक्ष्मी के देनेवाला पदाभिराम कथन कीयाहै ५१ बलराम मूर्त्तिका लक्षण कथन करतेहैं पुराण संग्रहमें बलरामइति बलराम और सीरपाणि और प्रलंबघ्न यहतीन बलरामकेभदहैं तिनोंके लक्षणकों कथन करतेहैं दीर्घहै आकार जिसका और बडे मुखवाला और चिट्ट हलकाहै चिह्न जिसमें और एकचक्रवाला और मुसलके सहित और पृष्ठमें नीले कमल की हैप्रभा जिसमें सोबल और वंशकेवधाने वाला बलराम कथन कीताहै ॥ ग्रंथांतरमें औरकथन कीताहै श्वेतहै आभा जिसकी और हलकेचिह्न करकें युक्त और मुसलकी आकृति जिसमेंऔर नीले कमलकी है आभा जिसकी और पृष्ठमें नासांकाहै आसन जिसमें और बलवाला सो बल और वंशके वधानेवालरामहै ५४

द्वितीयोवामचक्रश्चरेखाचैवतुदक्षिणे वलशाली भवेद्रामोलांगलेनांकितःप्रभुरिति ५५ स्थूलचक्रोभवेद्देवोहरिल्लोहितवर्णकः वलरामःसविज्ञेयोगोत्रकीर्त्तिविवर्धनइति ५६ सीरपाणिलक्षणं पुराणसंग्रहे सर्वत्ररक्तवर्णःस्याच्छ्वेतनीलाभवर्जितः सचक्रोवक्रचक्रोवासीरपाणिः शुभप्रद इति ५७ प्रलंवघ्नमूर्तिलक्षणं पुराणसंग्रहे एकचक्रस्तुवदनेरक्तवर्णसमन्वितः प्रलंवघ्न इति ख्यातः पूजितोमृत्युदायक इति ॥ ५८

द्वितीयइतिवामपार्सहैचक्रजिसमें औरदक्षिणमेंरेखावाला औरवलवालाऔरहलकाहैचिह्नजिसमें सोरामदूसराजानना स्थूल ५५ चक्रवाला देव होवे और हरा और लोहित वर्णवाला सो गोत्र और कीर्त्तिकेवधानेंवाला वलरामजानना५६सीरपाणिकालक्षण पुराणसंग्रहमें कथनकीयाहै संपूर्ण रक्तवर्ण वाला होवे औरश्वेत औरनील आभातेंरहित होवे और सहित चक्रके वामुखमेंचक्रहोवे सोसीरपाणिशुभकेदेनें वालाहोताहै ५७पुराण संग्रहमें प्रलंवघ्नमूर्त्तिका लक्षण कथन करतेहैं मुखमें एकचक्र जिसके औररक्तवर्ण करकें युक्त सोप्रलंवघ्न कथनकीताहै सो पूजिआ हुआ मृत्युकोंदेताहै५८

निष्केसरोर्ध्वचक्रस्तुह्यधश्चक्रःसकेसरःपद्मना
भइतिख्यातोविपरीतोहलायुधइति वौद्धमूर्त्ति
लक्षणं साद्विधानिर्वाणवुद्धपूर्विकावुद्धदेवपूर्वि
काच तत्राद्या ब्रह्मांडे अंतर्गक्रसंयुक्तश्चक्रहा
नस्तथाभवेत् निर्वाणवुद्धसंज्ञोसौददातिपरमं
पदमितिद्वितीयापुराणसंग्रहे अंतर्गक्रसंयुक्तं
चक्रेणरहितंतथा वुद्धदेवंविजानीयात्पूजकस्य
शुभप्रदम् १ स्कांदे अंतःशून्यंवहिःशून्यं वृहत्कु
क्षिसमन्वितं चक्रशून्यंगुहाचक्रंवुद्धदेवंप्रचक्षते

निष्केसर इति ऊर्ध्वमें निष्केसर क्या (०) कारांते रहित चक्र होवे और अधा में सकेसर क्या (×)कारांवाला चक्रहोवे सो पद्मनाभ कथन करीदाहै जेकर तिना चक्रों तें विपरीतहो तद हलायुध कथन करीदाहै ॥ बौद्ध मूर्त्तिका लक्षण कथन करतेहैं सो दो प्रकारकी है एक निर्वाणवुद्ध और दूसरी वुद्धदेवप्रथम निर्वाण वुद्धका लक्षण ब्रह्मांडपुराणमें कथन कीयाहै अंतर जो चक्र तिस कर्के युक्त और चक्र हीन क्या कुछक चक्रहोवे सो परम पदकों देनेवाला निर्वाण वुद्ध कथन कीताहै॥ दूसरी मूर्तिका लक्षण पुराणसंग्रहमें कथन कीयाहै अंतर में छिद्रकर्के युक्त हो और चक्र कर्के रहित होवे सो वुद्ध देव जानना पूजने वालेकों शुभफलकों देताहै ॥ स्कंदपुराण में और कथन कीयाहै अंतरसें शून्य औरबाहरमें शून्य और वडी कुक्षि कर्के युक्त औरचक्र सें रहित औरगुहामें है चक्र जिसके सो वुद्धदेव कथन कीताहै

कल्किमूर्त्तिलक्षणं ब्रह्मांडे अतिरिक्तः सूक्ष्म
विलःस्पष्टचक्रःस्थिरासनः कृपाणाकृतिकारे
खाह्वारस्योपरिमस्तके १ म्लेच्छनाशीभवेत्क
ल्किः कलिकल्मषनाशन इति २ पुराणसंग्र
हे अतिरिक्तंस्पष्टचक्रंस्थिरासनयुतंतथा कृपा
णाकृतिरेखाढ्यंकल्किदेवंविदुर्बुधा इति ३
केशवमूर्त्तिलक्षणं पाद्मे सौभाग्यंकेशवोदद्याच्च
तुष्कोणोभवेद्यदीति ४ वैखानससंहितायाम्
नाभ्यधस्तुभवेच्छंखश्चक्रेचवदनांतरे केशव
स्सतुविज्ञेयः सर्वदुःखविनाशन इति १ ॥

कल्कि मूर्त्तिका लक्षण ब्रह्मांड पुराण में कथन कीयाहे अतिरि
क्त इति जो अतिरिक्त होवेऔर सूक्ष्महे विल क्या छिद्रजिसमें
और स्पष्ट चक्र वाला और स्थिरासन और मस्तकमें खड्ग की
न्याई रेखा होवें १सो म्लेछों के नाशकरण वाला और कलि
युगके पापां कों नाशकरणेवालाहे सो कल्कि कथन करीदा
है २ पुराण संग्रह में और कथन कीयाहै अतिरिक्त और स्पष्टच
क्र वाला और स्थिरासन कर्के युक्त और कृपाण की आकृति की
न्याई जो रेखा तिसकर्के जो युक्त बुद्धिमान् तिसकों कल्किदे
व जानतेहैं ३ पद्मपुराण में केशव मूर्त्तिका लक्षण कथनकीता
है जो केशव चौंकोणो वाला होवे सो सौभाग्य कों देनाहै ४
वैखानससंहितामें और कथन कीयाहे नाभिके अधमें शंखका
आकार होवे और मुखकें अंतरालमें दोचक्र होवें सो केशव
जानना संपूर्ण दुःखकेनाश करणवाला होताहै १

विष्णुरहस्ये सवर्तुलस्तथाग्निषः पृष्ठेचसशरोभ
वेत् नीलवर्णस्तथास्थूलः पृथुचक्रः सुशोभनः
॥ १ ॥केशवस्सतुविज्ञेयस्सर्वकामफलप्रदः वा
मपार्श्वेस्थितेचक्रेरेखाचैवतुदक्षिणे ॥ २ ॥ रु
चिरः सशिरः स्निग्धःशोभनः सुस्थिरासनः
सौभाग्यंकेशवोदद्याच्चतुष्कोणोभवेद्यदि ३
ब्रह्मांडे नीलवर्णस्तथास्थूलः पृथुचक्रः सुशो
भनः रेखाद्वयंद्वारदेशेपृष्ठेपद्मेनलांछितः सौ
भाग्यंकेशवोदद्याच्चतुष्कोणोभवेत्तुयइति १॥

विष्णुरहस्यमें और कथनकीयाहै सइति सवर्तुल क्या गोलाका रहोवे उर तैसेंअग्निष्ठ क्याअग्निकी न्याईंहै प्रभावजिसका और पृष्ठमें बाणकाचिह्नहोवे और नीलेवर्णवाला और तैसेंस्थूल होवे और वडेचक्रवाला और सुंदरहोवे ॥ १ ॥ सोसंपूर्णका मनाकेदेणवाला केशवजानना वामपासेमें दोचक्र स्थितहोणा और दहनेपासेमें रेखाहोवे ॥ २ ॥ रुचिर क्यासुंदर और शिर के चिह्नवाला और स्निग्धक्याथिंदाहोवे और शोभन और स्थि रासनहोवे सोकेशवकथनकरीदाहै जेकरचारकोणो वालाहोवे तदसौभाग्यकों देताहै ॥ ३ ॥ ब्रह्मांडपुराणमें और कथनकीता हैनीलेवर्णवाला और स्थूल और वडेचक्रवालाहोवे और सुंदर और मुखमें दोरेखांहोण और पृष्ठमें पद्मकाचिह्नहोवेसोकेशव कथन करीदाहै जो चार कोणो वाला होवे सो सौभाग्यके दे णे वाला होताहै ॥ १ ॥

ब्रह्मवैवर्त्ते राजतैर्विन्दुभिर्हैमैरन्वितंसूक्ष्मचक्र
कम् वनमालान्वितंश्यामंकेशवाख्यंविदुर्बुधाः
१॥ तथा पूर्वपश्चिमदिग्भागेयस्यचक्राणिसं
तिहि केशवंनामतंविद्यान्महासौख्यप्रदायक
मिति १ नारायणमूर्त्तीनांलक्षणान्युच्यंते तत्र
नारायणलक्ष्मीनारायण नरनारायणरूपना
रायणवीरनारायणमायानारायण शंकरनारा
यणमहानारायणेत्यष्टभेदाभवंति १ अग्निपुरा
णे श्यामोनारायणोदेवोनाभिचक्रस्तथोन्नतः
दीर्घरेखासमोपेतोदक्षिणेशुषिरान्वितः।१।

ब्रह्मवैवर्त्तमें कथनकीयाहै प्रकाशमानजो स्वर्णकीयांबिंदुतिनोक
र्केयुक्त और सूक्ष्मचक्रवाला और बनमालाकर्के युक्तऔर जो
श्याम बुद्धिमान् तिसको केशवजानतेहैं १ और कथनकीयाहै
जिसके पूर्व और पश्चिमभागमें चक्रहोएसो बडेसौख्यकेदेणेवा
लाकेशवनामकर्के जानना १ नारायणकीयांमूर्त्तियांकालक्षणक
थनकरतेहैं नारायण और लक्ष्मीनारायण और नरनारायण और
रूपनारायण और वीरनारायण और मायानारायण और शंकर
नारायण और महानारायण यहअष्टभेदहैं १ अग्निपुराणमेंनारा
यणकालक्षण कथनकीयाहै श्याम और नाभिमेंहैचक्रजिसकेऔ
रउच्चा और दीर्घरेखों कर्के युक्त और दक्षिणमें जो छिद्रतिनो
कर्के युक्तसोनारायण देवजानना ॥ १ ॥

एकपद्मांकितश्चैवदक्षिणावर्त्तसंयुतःवर्त्तुलच्छ
त्रसंयुक्तोभोगमोक्षप्रदायक इति २ ब्रह्मांडे
श्यामंनारायणंविंद्यान्नाभिचक्रंतथोन्नतं दीर्घ
रेखासमोपेतंदक्षिणेशुषिरंपृथु १ विलजेसुमु
खेचक्रेमध्यचक्रःसुशोभनः ताटंकनानाभरण
हारकेयूरलांछनः नारायणः समाख्यातःस
र्वसिद्धिप्रदायक इति २

और एक पद्म कर्के चिन्हित और दक्षिण में जो चक्र तिस कर्के युक्त औरगोलाकार जो छत्र तिस कर्के जोयुक्त सो भोग और मोक्षके देनेवाला नारायण कथन कीयाहै २ ब्रह्मांडपुराणमें और कथन कीताहै नाभिमेंहै चक्र जिसके और दीर्घरेखों कर्के युक्त और दक्षिणमेंहै छिद्र जिसके सो श्यामनारायण जानना १ छिद्रमें सुंदर मुखवाला चक्र होवे और मध्यमें चक्र जिसके और सुंदर और कान फूल और नानाप्रकारके जो भूषण और हार और बवट्टे इनोंकेहीं चिन्ह जिसमें सो संपूर्ण सिद्धिके देने वाला नारायण कथन कीताहै ॥

विष्णुरहस्ये वामपार्श्वस्थितेचक्रेरेखाचैवतुद
क्षिणे पांडुवर्णेनसंयुक्तःस्थिरासनसवर्त्तुलः
सस्यान्नारायणोदेवः सर्वपापप्रमोचन इति
२ लक्ष्मीनारायणो यथा ध्वजवज्रांकुशोपे
तोवामचक्रस्सवर्तुलः लक्ष्मीनारायणोदेव
श्चतुश्चक्रसमन्वितः १ पूजनीयस्सदासद्भि
र्वैष्णवैर्मोक्षकांक्षिभिरिति २ ॥

विष्णु रहस्यमें और कथन कियाहै वामपार्श्वेति वाम पासेमेंच
क्र और दहनेमें रेखाहोवे और पीलेवर्ण कर्के युक्त और स्थिरास
न और गोलाकार ॥ १ ॥ सो संपूर्ण पापके दूर करणे वाला
नारायण देवहोताहै ॥ २ ॥ लक्ष्मी नारायण के लक्षण कों क
थन करते हैं ध्वज और वज्र और अंकुश इनो कर्के युक्त होवे
और वाम पासेमें चक्रवाला और गोलाकार और चांरचक्रों क
र्के युक्त सो लक्ष्मी नारायण कथन करीदाहै मुक्तिकी इच्छावा
ले जो वैष्णव पुरुष तिनोने सो सदा पूजने योग्यहै ॥ २

ब्रह्मांडे एकचक्रश्चतुश्चक्रोवर्त्तुलःश्यामवर्णकः
ध्वजवज्रांकुशोपेतोमालायुक्तस्सविंदुकः १
१ नातिह्रस्वोनचस्थूलोलक्ष्मीनारायणःस्मृतः
तस्यदर्शनमात्रेणह्यभीष्टफलमाप्नुयादिति २
पाद्मे सूक्ष्मद्वारश्चतुश्चक्रोवनमालांकितोदरः
लक्ष्मीनारायणः श्रीमान्भुक्तिमुक्तिफलप्रद इ
ति१ तथा चत्वारिसूक्ष्मचक्राणिद्वारभागेभवं
तिहि उदरेवनमालाचलक्ष्मीनारायणोभवेत्
१ पूजनीयःसदाभक्तैर्भुक्तिमुक्तिफलप्रदइति२

ब्रह्मांड पुराणमें और कथन कीताहै एक चक्र इति एकचक्र वा चार चक्रों वाला होवे और गोलाकार और श्यामवर्ण वाला और ध्वज और वज्र और अंकुश क्या कुंडा तिनो क र्के युक्त और विंदु वाला होवे १ और न अतिशय कर्के छो टा और न स्थूल होवे सो लक्ष्मीनारायण कथन कियाहै ति सके दर्शनते पुरुष इच्छित फलकों प्राप्त होताहै २ पद्मपुराण में और कथन कीताहै सूक्ष्महै मुख जिसका और चार चक्रों वाला और उदरमें बनमालाकाहै चिन्ह जिसमें और शोभा वाला सो भुक्ति और मुक्तिके फल कों देने वाला लक्ष्मीनारा यण होताहै १ और कथन कियाहै जिसके मुखमें चार सूक्ष्म चक्र होए और उदरमें बनमाला का चिन्ह होवे सो लक्ष्मीनारायण होताहै भक्त जनोंने भुक्ति और मुक्तिके फल कों देने वाला सो सदा पूजने योग्यहै २

तथा गवाकृतिस्त्रिरेखश्चलक्ष्म्यंकोमध्यदेशतः
ध्वजवज्रांकुशोपेतोवामचक्रः सवर्त्तुलः लक्ष्मी
नारायणोदेवःसर्वाभीष्टप्रदायकइति १ ब्र
ह्मांडे वर्त्तुलंवर्त्तुलद्वारंत्रिगम्भीरंचगव्हरम् स
मचक्रंसमंवक्रंपृष्ठेचवनमालया १ सुवर्णाभंच
कृष्णाभंलक्ष्मीनारायणंविदुरिति २ वाराहे
स्थिरासनमतिस्निग्धंनातिस्थूलंचनाधिकं च
तुश्चक्रसमायुक्तंचारुरेखासुशोभितं लक्ष्मी
नारायणंप्राहुस्त्रिपुलोकेषुदुर्लभम् १

उोर कथन करतेहैं गोकी आकृति और तीनरेखा होन
उोर मध्यमें लक्ष्मीका चिन्हहोवे ध्वज उोर वज्र उोर अंकुश
तिनो कर्के युक्त होवे उोर गोलाकार सो संपूर्ण इच्छाके देने
वाला लक्ष्मीनारायण देवहोताहै १ ब्रह्मांडपुराणमें उोर कथन
कियाहे वर्त्तुलक्या गोलाकार उोर गोलाकारहै मुख जिसक
उोर त्रिगंभीर क्या तीन वट्टों वाला उोर गव्हर उोर समचक्र
वाला और सम मुख वाला होवे उोर पृष्टमें बनमाला का
चिन्ह होवे १ उोर सुवर्ण की आभा वाला उोर कृष्ण आ
भा वाला होवे तिसकों लक्ष्मीनारायण जानतेहैं २ वराहपु
राणमें उोर कथन करतेहैं स्थिरासन होवे उोर चिदा उोर सू
क्ष्म उोर न अधिक होवे उोर चार चक्र कर्के युक्त उोर सुंदर
रेखाकर्के जो शोभायमान तिसकों लक्ष्मीनारायणकथनकरतेहैं
सोतीनोंलोकोंमे दुर्लभहै १

गरुडपुराणे लक्ष्मीनारायणस्साक्षाच्चतुश्चक्र
युतस्तथा त्रिचक्रोवाभवद्वामेचक्रंचात्यंतशो
भनम् १ लक्ष्मीनारायणंदेवंभुक्तिमुक्तिफलप्र
दमिति २ तथा कृष्णवर्णंचतुश्चक्रंवनमालो
पशोभितम् ध्वजवज्रांकुशोपेतंगोष्पदेनचाचिं
ह्नितम् १ लक्ष्मीनरायणंदेवंसर्वकामफलप्र
दमिति २ तथा चिह्नितंवनमालाभिस्तत्रस
न्निहितोहरिः तस्मिन्गेहेनदारिद्यंदुःखशोक
भयंनहि १ ॥

गरुडपुराण में और कथन कियाहै लक्ष्मीति जो चार चक्रों करकें युक्त होवे सो साक्षात् लक्ष्मीनारायण होताहै और वामपासें में तीनचक्र होंण और चक्रकर्के शोभायमानहोवे १ सो भुक्ति और मुक्तिकेदेनेवाला लक्ष्मीनारायण देव होताहै २ और कथन करतेहैं कृष्णवर्णवाला होवे और चार चक्र होन और बनमाला करकें शोभायमान होवे ध्वजा और वज्र और अंकुश इनोंकर्के युक्तहोवे और गौका जो खुर तिसकर्के चिन्हितहोवे १ सो संपूर्णकामनाके देनेवाला लक्ष्मीनारायण देव होताहै २ और कथन करतहैं जिस शिला में बनमाला का चिन्ह होवे तिसमें हरिस्थित होताहै जिस में ऐसीमूर्त्ति होवे तिस घर में दरिद्र और दुःख और शोक और भय नहि होताहै । १

नचौरादिभयंतत्रनदुष्टैः परिभूयते अंतेमोक्षो भवेत्तस्यपूजकस्यनसंशयइति स्कांदेपक्कजंबू फलाकारश्चिह्नितोवनमालया एकद्वारश्चतुश्चक्रोलक्ष्मीनारायणोहरिः १ गोस्तनाकारचक्राढ्यः पूर्वभागेतुपुष्कलः गोपदेन समायुक्तो ध्वजच्छत्रसमन्वितः २ श्रीवत्सलांछनोपेतोमालयापरिवेष्टितः अंकुशध्वजसंयुक्तो लक्ष्मीनारायणोहरिः ३ तथा एकंमुखंचतुश्चक्रंवनमालासुशोभितं नातिह्रस्वंनातिदीर्घंशंखचक्रादिभिर्युतम् ॥ ४ ॥

नेंति तिसघरमें चौरादिभय नहि होता और पूजने वाला जो पुरुष तिसका दुष्ट जीवोंने निरादर नहि करीदा और अंत में तिसका मोक्षहोताहै इसमें कुछ संशयनहि २ स्कंदपुराण में और कथन कियाहे पक्का हुवा जो जंबूफल तिसकी न्याईं है आकारजिसका और बनमाला करके चिन्हित और एकहै मुख जिसमें और चारहैं चक्र जिसमें सो लक्ष्मीनारायण हरि कथन करीदाहै १ गोस्तनकेआकारकी न्याईं जो चक्र तिस करके युक्तऔर पूर्वभागमें पुष्कलहोवे और गोपद करके युक्त और ध्वज औरछत्रकरकेयुक्त २ श्रीवत्सकेचिन्हकरके युक्त और मालाकरके परिवेष्टित और अंकुश औरध्वजकरके युक्त सो लक्ष्मीनारायण हरिहोताहै ३ एकहैमुखजिसमें और चारचक्रों वालाऔरबनमालाकरके शोभित औरनसूक्ष्म और नदीर्घ और शंख चक्रकरके युक्तहोवे ४

गदापद्मेनखड्गेनतोमरेणापिशोभितम् सुवर्ण
विंदुसंयुक्तंलक्ष्मीनारायणंस्मृतामिति ॥ ५ ॥
तथा पक्वजंवूफलाकारंवर्त्तुलंश्यामवर्णकम् च
तुश्चक्रसमायुक्तंवामभागेतुपुष्कलम् ॥ १ ॥
कल्पद्रुमकौस्तुभाद्यैर्मस्तकोपरिमंडितम् स्व
र्णाभंसूक्ष्मवदनंलक्ष्मीनारायणंस्मृतम् ॥ २ ॥
नरनारायणलक्षणं ब्रह्मांडे नरनारायणोदेवः
श्वेतवर्णः सुशोभनः तमालदलसंकाशः स्व
र्णपंकविलेपन इति ॥ १

औरकथनकरतेहैं गदेति गदा और पद्म और खड्ग तोमर इ नोकर्के जो सुंदर और सुवर्णकीयां विंदुकर्के युक्त सो लक्ष्मी नारायण कथन कीताहै ॥ ५ ॥ और कथन करतेहैं पक्कजो जंबूफल तिसकी न्याईहै आकारजिसका और गोलाकार और श्यामवर्णवाला और चारचक्रोंकर्के युक्त और वामभागमें पुष्कलकाहै चिह्न जिसमें ॥ १ ॥ और कल्पवृक्ष और कौस्तुभ मणि कर्के भूषितहै मस्तक जिसका औरसुवर्णकीहै आभाजिसमें और सूक्ष्महै मुख जिसका सो लक्ष्मीनारायण कथन करीदाहै २नर नारायणकालक्षण ब्रह्मांडपुराणमे कथनकियाहै जो श्वेतवर्णवाला और सुंदर और तमालबृक्षकाजोपत्र तिसकी न्याईहै प्रकाश जिसका और पीत टिकेवाला सो नरनारायण देवहोताहै १ ॥

रूपनारायणलक्षणं ब्रह्मांडे मुसलायुधमा
लासिशंखचक्रगदान्वितः रूपनारायणोदेवो
मुखेचाभिमुखंधनुः सर्वसिद्धिप्रदोदेवःसर्वका
मफलप्रदइति वीरनारायणलक्षणं पुराणसं
ग्रहे तमालदलसंकाशः स्वर्णसंकलितस्तथा
वीरनारायणोदेवोह्येकचक्रसमन्वितइति ॥ १
तथा वीरनारायणोदेवः श्वेतचक्रस्सुशोभनः
मुसलायुधमालासिशंखचक्रसमन्वित इति १

रूपनारायणका लक्षण ब्रह्मांड पुराणमें कथन कीयाहै मुसलक्या मोहला और आयुध और माला और खड्ग शंख और चक्रइनोंकर्के जो युक्त और मुखमेंहै धनुका चिह्नजिसकें सोरूपनारायणदेव कथन कीताहै सो संपूर्ण सिद्धि और संपूर्ण कामनाके फलको देनेवालाहोताहै ॥ १ ॥ वीरनारायण का लक्षण पुराणसंग्रहमें कथन कीयाहै तमाल वृक्षके पत्रकी न्याईहै प्रकाश जिसका और तैसें सुवर्णकीरेखावालाहोवे और एकचक्र कर्के जो युक्त सो वीरनारायण कथन कीताहै ॥ १ ॥ और कथन करतेहैं श्वेतहै चक्रजिसमें और सुंदर और मुसल और आयुध और माला और तलवार और शंख और चक्रइनो कर्के जोयुक्त सोवीरनारायणदेव कथन कीताहै ॥ १ ॥

मायानारायणलक्षणं स्कांदे निर्मलेमुसलेच क्रेमध्यचक्रेसुशोभने ताटंकनासाभरणहारके यूरलांछनः १ मायानारायणोदेवः सर्वसि द्धिप्रदायक इति २ शंकरनारायणलक्षणं ब्रह्मांडे शिवनाभियुतःपार्श्वेवायव्येदक्षिणे पिवा सचशंकरपूर्वोवैनारायणइतीरितः १ पुरा णसंग्रहे गंडकीगर्भसंभूतंधनुशकारशोभित म् शंखप्रतिमपूर्वार्धपश्चार्धंश्यामलप्रभम् १ ॥

मायानारायणका लक्षण स्कंदपुराण में कथन कीयाहै निर्मलयि ति निर्मल मुसल और चक्रजिसमें और मध्यचक्र कर्के सुंदर औ र ताटंक क्या कान फूल और नासा भरण क्या नथ्य और हा र और भुवट्टे इनोकाहै चिन्ह जिसमे १ ॥ सो संपूर्ण सिद्धिके देने वाला माया नारायण कथन कीताहै २ ॥ शंकर नारायण का लक्षण ब्रह्मांड पुराणमें कथन करतेहैं वाम और दक्षिण पासेमें शिवनाभि कर्के युक्त होवे सो शंकर नारायण कथन कियाहै १ ॥ पुराण संग्रहमें और कथन करतेहैं गंडकी नदीके गर्भतें उत्पत्ति जिसकी और धनुषके आकार कर्के शोभायमान होवे और पूर्वले पासेमें शंखका आकार होवे और पश्चिम पासे में श्याम रंग की प्रभा होवे १ ॥

सरोजपुटचक्राग्रमधस्ताद्रक्तबिंदुकम् गौरल
क्ष्मीसमायुक्तंशूलश्रीवत्ससंयुतम् २शीर्षस्थि
तजटारेखावनमालापरिप्लुतम् सर्वाभीष्टप्रदं
श्रीशंकरनारायणात्मकम् ३॥ यःपूजयेन्नरोभ
क्त्याल्लब्धभाग्यवशान्मुने पुत्रपौत्रैःपरिवृतो
धनधान्यसमन्वितः ४ कोटिजन्मकृतंपापंस्प
र्शात्सद्योविनश्यति इहलोकेसुखंप्राप्यतत्सा
युज्यमवाप्नुयादिति ५ ॥

सरोजेति सरोज क्या कमलका जोपुट तिसकी न्याईहै च क्रका अग्र भाग जिसमे और गौर और लक्ष्मी करके युक्त और शूल और श्रीवत्स करके युक्त २ ॥ और जिसके शिरमें जटा की रेखाहोवे और वनमालाकरके युक्त होवे सोसंपूर्ण इच्छाके देने वाला शंकरनारायण कथन कीयाहै ३ ॥ हेमुने प्राप्त हुआ जो भाग्यवश तिसतें जो पुरुष भक्ति करके शंकर नारायणकों पूजताहै सो पुत्र और पौतरे और धन और अन्न करके युक्त होताहै ४ तिस पुरुष का क्रोड जन्म का किया जो पाप सो तिस मूर्तिके स्पर्श करणेतें तात् काल दूर होताहै और इस लोकमें सुखकों प्राप्तहो करके अंत समयमे शंकर नारायण कों प्राप्त होताहै ॥ ५ ॥

महानारायणलक्षणं स्कान्दे कृष्णवर्णोमहा
स्थूलोह्यष्टचक्रसमन्वितः शंखचक्रगदायुक्तो
महानारायणःस्मृत इति १ ॥ माधवमूर्त्तिलक्ष
णं वैखानससंहितायाम् माधवोमधुवर्णा
भोगदाकंबुविलक्षित इति १ ॥ ब्रह्मांडे मधु
वर्णोमधुचक्रः स्निग्धसूक्ष्मतनुस्तथा माधव
स्सतुविज्ञेयोयतीनांमोक्षदायक इति १ ॥ वि
ष्णुरहस्ये शुक्लवर्णातथास्निग्धापंचरेखासम
न्विता माधवाख्याशिलाज्ञेयामोक्षैकफलदायि
नीति १ ॥

महानारायणका लक्षण स्कंदपुराणमें कथन कीयाहै कृष्ण व
र्ण इति कृष्णहै वर्ण जिसका और महास्थूल और आठोंचक्रोंक
र्के युक्त शंख और चक्र और गदा कर्के युक्त सो महा नारायण
कथन कीयाहै १ माधव मूर्त्तिका लक्षण वैखानस संहितामें
कथन कीताहै मखीरके वर्णकी न्याईंहै आभा जिसकी और
गदा और शंख कर्के जो युक्त सो माधव कथन कीताहै १ ब्र
ह्मांड पुराणमें और कथन कीताहै मखीरकी न्याईंहै वर्ण जि
सका और मधुकाहै चक्र जिसमें और थिंदा और सूक्ष्महै शरीर
जिसका सो माधव नारायण जानना सो यतीयांको मोक्षकें
देनेवाला होताहै १ विष्णुरहस्यमें और कथन कीयाहै श्वेतवर्ण
वाली जो शिला और थिंदी और पंचरेखों कर्के युक्त सोमाधव
नामकर्के शिला जाननी सो मोक्षको देनेवाली होतीहै १

ब्रह्मपुराणे स्वर्णविंदुसमायुक्तोमधुवर्णस्सुचि न्हितः माधवस्सतुविज्ञेयोमहारोग्यहरश्चय इति १ ॥ गोविंदमूर्त्तिलक्षणं पुराणसंग्रहे नाभिस्थूलःकृष्णवर्णोगोविंदःपंचचक्रकः वामचक्रोवृहद्द्वारोह्यनंतोमध्यनिम्नग इति१ विष्णुरहस्ये पताकाध्वजाचिन्हाढ्य पद्मवर्णसचक्रकम् गोविंदपूजयेद्भक्त्या सद्योलक्ष्मीप्रदायकम् तथा इंद्रनीलनिभाभायापृथक्चक्रासुशोभना गोविंदाख्याचसाज्ञेयामूर्त्तिःसौभाग्यकारकाइति २ ॥

ब्रह्मपुराणमें और कथनकरतेहैं स्वर्णेति सुवर्णके विंदुकर्के जो युक्तऔर मखिरकी न्याईहै वर्ण जिसका और सुंदर चिन्होवाला होवे सो बडे रोगके हरणेवाला माधव जानना १ गोविंद मूर्तिका लक्षण कथन करतेहैं पुराण संग्रहमें नाभिहै स्थूल जिसकी और कृष्ण वर्ण वाला और पंच चक्रों वाला होवे और वामे पासेतेंहै चक्र जिसका और बडाहै मुख जिसका और अनंत और मध्यमें नीवांहोवे सो गोविंदजानना १ विष्णुरहस्यमें और कथन कीताहै पताकाध्वजके चिन्हकर्के जोयुक्त और पद्मवर्णवाला और चक्रवाला सोगोविंद कथनकीताहै जोपुरुष भक्तिकर्के गोविंदकों पूजताहै सोतातूकाल लक्ष्मीकों प्राप्तहोताहै १॥ नीलम मणिकी न्याईहै आभा जिसकी और भिन्नचक्रवाली और सुंदरसोसौभाग्यके करणे वाली गोविंदकी मूर्त्तिजाननी २

वराहपुराणे कृष्णवर्णातथास्निग्धापंचरेखास
मन्विता गोविंदाख्याशिलाज्ञेयासर्वसौभाग्य
दायिनीति १ विष्णुमूर्त्तिलक्षणं पद्मपुराणे
स्थूलचक्रोभवेद्विष्णुर्मोक्षैकफलदोर्चितइति ब्र
ह्मांडे कृष्णवर्णस्तथाविष्णुःस्थूलचक्रस्सुशो
भनः द्वारोपरितथारेखादृश्यतेमध्यदेशतइति
१ पुराणसंग्रहे कृष्णवर्णस्तथाविष्णुः स्थूलच
क्रस्सुशोभनः यस्यमध्येगदाकारादृश्यतेपंच
रेखिकेति ॥ १ ॥ वैखानससंहितायाम् कृष्ण
वर्णस्तथाविष्णुःस्थूलचक्रःसुशोभनः

वराह पुराणमें और कथन करतेहैं कृष्णेति जो कृष्णवर्णवाली और चिकनी और पंचरेखा करके युक्त सो संपूर्ण सौभाग्यके देने वाली गोविंदनामकरके शिलाजाननी १ विष्णुकीमूर्त्तिकालक्षण कथनकियाहै पद्मपुराणमें स्थूलचक्रवाला विष्णुहोताहै सोपूजि आहुआ मोक्षफलकोंदेताहै १ ब्रह्मांडपुराणमें और कथनकरतेहैं कृष्णवर्ण वालाहोवे और स्थूलचक्र जिसमें और सुंदरऔर मुखमें औरमध्यदेशमें रेखादेखिये सोविष्णुहोताहै १ पुराणसंग्रहमें और कथनकरतेहैं कृष्णवर्णवालाहोवे और स्थूलहै चक्राजिसमें औरसुं दर और जिसके मध्यमें गदाके आकार वाली पंचरेखादेखिये सो विष्णु कथनकरीदाहै १ वैखानससंहितामें औरकथनकरतेहैं कृष्णवर्णइति कृष्णहै वर्ण जिसका औरस्थूलचक्रवाला और सुंदर

पद्माकृतिस्तथारेखादृश्यतेपृष्ठमध्यगेति १ ॥ ब्रह्मांडे वामचक्रोबृहद्द्वारउन्नतोमध्यनिम्नगःसकापिलःस्निग्धवर्णोविष्णुर्विषयभोगदइति १ विष्णुरहस्ये बिल्वाकृतिस्त्वधोरेखःसुषिरंचातिसंकुलम् कृष्णवर्णस्तथाविष्णुःस्थूलचक्रेणशोभितः १ गदाकृतिस्तथारेखादृश्यतेमध्यदेशतः २ वाराहे कृष्णवर्णस्तथाविष्णुःस्थूलचक्रेणशोभितं बिल्वाकृतिस्तथारेखादृश्यतेमध्यदेशतःगृहस्थःपूजयेन्नित्यंधनधान्यसमृद्धिदम् ॥ १ ॥

और जिसकी पृष्ट और मध्यमें पद्मकी न्याई रेखादेखिये सो विष्णुहोताहै १ ब्रह्मांडपुराणमेंऔरकथन कियाहै वामभागमेंहै चक्र जिसके और बडेमुखवाला और उचाऔर मध्यमें नीचाऔर कपिल और स्निग्ध वर्णवाला सो विषय भोगके देनेवाला विष्णु कथनकरीदाहै १ विष्णुरहस्यमें और कथन करतेहैं ॥ बिल्वकीहै आकृति जिसकी और अधोरेखावाला और अति संकुल छिद्रहै जिसमे और कृष्णवर्णवाला और स्थूलचक्रकरके जो सुंदर सोविष्णुहोताहै १ और जिसके मध्यदेशमें गदाकी रेखादेखिये सोभी विष्णु होताहै २ वराहपुराणमें और कथन कीनाहै कृष्णहै वर्ण जिसकाऔरस्थूल चक्र करके सुंदर और जिसके मध्यदेशमें बिल्वकी न्याईरेखादेखिये सोविष्णुहोताहै जो गृहस्थी तिसको नित्यपूजिताहै सो धन और अन्नकी वृद्धिको प्राप्त होताहै॥ १

पुराणसंग्रहे विष्णुक्रांतस्तलाकारोवनमालाब्जचिह्नकःपंचायुधधरःश्रीमान्विष्णुरित्युच्यते बुधैरिति १ महाविष्णुलक्षणं पुराणसंग्रहे महाविष्णुस्तुभगवान्दशचक्रेणसंयुतः स्वर्णरेखासमायुक्तोमणिमाणिक्यदीप्तिमानिति १ मधुसूदनमूर्तिलक्षणं वैखानससंहितायाम् नाभिपार्श्वेशंखपद्ममुद्रायस्मिन्प्रदृश्यते मधुसूदनदेवोसौशत्रुहापरिकीर्तितइति १ ब्रह्मांडे मधुसूदनोमहादेवएकचक्रोमहाद्युतिः सुवर्णेनसमायुक्तोमहातेजःप्रदः शुभ इति ॥१॥

पुराणसंग्रहमें और कथन कीताहै विष्णुक्रांतइति जो तलीकेआकारवाला औरवनमाला औरकमलकाहै चिह्न जिसमें औरपांच आयुधकेधारणेवाला औरशोभावाला सोबुद्धिमानोंने विष्णुक्रांत औरविष्णु कथन कीयाहै ॥१॥ महाविष्णुका लक्षण पुराणसंग्रहमें कथन कीताहै दश चक्रकरके जो युक्त और सुवर्णकीरेखाकरके युक्त मणि और माणिक्यकी न्याई जो प्रकाशमान सो भगवान् महाविष्णु कथन कीताहै ॥ १ मधुसूदनकी मूर्तिका लक्षण वैखानस संहितामें कथन कीयाहै जिसकी नाभिपासमे शंख और पद्मका चिह्न दिखिये सोमधुसूदनदेवहोताहै सो कीर्तित कीयाहुआ शत्रुवांकों दूरकरताहै ॥१॥ ब्रह्मांड पुराणमें और कथन करतेहैं एकहै चक्रजिसमें और बडेतेजवाला औरसुवर्णकरके जो युक्त सोवडे तेजके देनेवाला मधुसूदन कथन कीताहै १ ५

चक्रद्वयंमुखेयस्य श्यामांगोवर्त्तुलाकृतिः देवो गदाधरोनामराजसूयफलप्रद इति १॥ तथा चक्रद्वयंतुवदनेसमंताद्वर्तुलाकृतिः देवंगदाधरंकृष्णंराजसूयफलप्रदमिति॥ १ ॥ पुंडरीकाक्षलक्षणं ब्रह्मांडे पार्श्वेवामूर्ध्निपृष्ठेवा चामरद्वयसंयुता पुंडरीकाक्षमूर्त्तिःस्यात्सर्वलोकवशंकरीइति १ तथा द्वारोपरितथारेखापद्माकारासुशोभना पार्श्वेवामूर्ध्निपृष्ठेवानयनद्वयसंयुतेति ॥ १ ॥

चक्रद्वयमिति जिसके मुखमे दोचक्रहोण और श्यामहै अंग जिसका और गोलाकारहै आकृति जिसकी सो राजसूय यज्ञ केफलकोंदेनेवाला गदाधरनाम कर्के देवहोताहै ॥ १ ॥ और कथन करतेहैं जिसके मुखमे दोचक्रहोण और चारे ओरतें गोलाकारहोवे सो राजसूयके फलकोंदेनेवाला गदाधरदेवहोताहै ॥ १ ॥ पुंडरीकाक्षका लक्षण ब्रह्मांड पुराणमे कथन कियाहै जिसके पासेमे मस्तकमे वापृष्टमे चौरीयोंके दो चिह्नो कर्के जो युक्त सो संपूर्णलोक कों वश करणे वाली पुंडरीकाक्षकी मूर्तिहोतीहै ॥ १ ॥ और तैसे कथनकरतेहैं जिसके मुखमे कमलकी न्याईहै आकार जिसका ऐसीरेखाहोवे और पासेमे वा मस्तक वापृष्टमे नेत्रोंके दो चिन्हहोण सो पुंडरीकाक्षहोताहै १

पुंडरीकमूर्त्तिलक्षणं ब्रह्मांडे एकचक्रयुतोवक्रे श्वेतवर्णसमन्वितः पुंडरीकःसमाख्यातः पूजितोमोक्षदायकइति ॥१॥ सुदर्शनमूर्त्तिलक्षणं पुराणसंग्रहे सुदर्शनंत्रिधाज्ञेयंलक्षणांतरभेदतः शुद्धंसुदर्शनंचैवतथोभयसुदर्शनं सुदर्शनसमाख्यंचज्ञेयंलक्षणकोविदैरिति ॥ १ ॥ तत्रादौ शुद्धसुदर्शनलक्षणं पुराणसंग्रहे एकचक्रः शिरोदेशेपार्श्वेशंखादिचिह्नितः असौ सुदर्शनोदेवः पूजनात्सर्वकामदः ॥ १ ॥

इसतें उपरंत पुंडरीक का लक्षण ब्रह्मांड पुराणमे कथन किया है एकचक्रेति जिसके मुखमे एकचक्रहोवे और श्वेतवर्णकर्के जो युक्त सो पुंडरीक कथन कीताहै सो पूजिआहुआ मोक्षकों देताहै ॥ १ ॥ सुदर्शन मूर्त्तिका लक्षण पुराण संग्रहमे कथन करतेहैं लक्षणाकों जानने वाले जो बुद्धिमान् तिनोंने लक्षणांतर भेदतें सुदर्शन तीन प्रकारका जानीदाहै कौनसें शुद्धसुदर्शन १ और उभय सुदर्शन २ और समसुदर्शन ३ प्रथम शुद्ध सुदर्शनका लक्षण कथनाकियाहै पुराण संग्रहमे जिसके शिरमे एकचक्रहोवे और पासेमे शंखादि चिन्हहोवे सो पूजनतें संपूर्णकामके देनेवाला शुद्ध सुदर्शन देव होताहै ॥ १ ॥

अतिसूक्ष्मंश्यामवर्णंसरघाकारकंमुखे कोमलं वर्त्तुलंस्निग्धंनराणांभुविदुर्लभमिति २ धूम्रवर्णंतथारूक्षंरक्तकेसरमंडितं सछिद्रंविलहीनं चग्रहस्थःपरिवर्जयेदिति ॥ ३ ॥अथोभयसुदर्शनलक्षणं पुराणसंग्रहे एकचक्रंशिरोभागेतथाधोप्येकचक्रकम् श्यामवर्णंसूक्ष्मरूपंनवांकेनापिचिह्नितम् ॥ १ ॥ सुदर्शनंचोभयाख्यंदेवानामपिदुर्लभ एनंयःपूजयेन्नित्यंसर्वान्कामानवाप्नुयादिति ॥ २ ॥

अतिसूक्ष्ममिति जो अतिसूक्ष्म होवे और श्यामहै वर्ण जिसका और सरघा मक्खीके आकारकी न्याईंहै मुख जिसका और कोमल और गोलाकार होवे और चिंदा होवे सो पुरुषांको पृथिवीमे दुर्लभहै ॥ २ ॥ धूम्रकी न्याईंहै वर्ण जिसका और रूक्ष और रक्तकेसर करके भूषित और छिद्रहै जिसमे और छिद्रसे हीन जो तिसका गृहस्थीत्याग करे ॥ ३ ॥ इसतें उपरंत उभय सुदर्शनका लक्षण कथन कियाहै पुराण संग्रहमे जिसके शिरमे और हेठमें एक चक्र होवे और श्यामहै वर्ण जिसका और सूक्ष्म रूप वाला होवे और अंक करके चिह्नित नहोवे ॥ १ ॥ सोउभय सुदर्शनहोताहै सोदेवतियांको दुर्लभहै इसका जो पुरुष नित्य पूजन करताहै सो संपूर्ण कामनाकों प्राप्त होताहै ॥ २ ॥

समसुदर्शनलक्षणं तत्रैव द्वाभ्यांशिरसिच क्राभ्यांपंक्त्याकारेणभूषितः श्यामवर्णःपार्श्वे भागेराजशंखादिसंयुतः ॥ १ ॥ समःसुदर्शनो देवोभूतलेतीवदुर्लभः पूजनीयस्सदासद्भिर्भु क्तिमुक्तिफलप्रद इति ॥ २ ॥ योगेश्वरलक्ष णं ब्रह्मपुराणे दृश्यतेशिखरेलिंगं शालग्रा मसमुद्भवं सवैयोगेश्वरोनामब्रह्महत्यांव्यपोह ति १ ॥ विष्णुपंजरलक्षणं पद्मपुराणे वज्र कीटोद्भवारेखाःपरिभूताश्चयत्रवै शालग्रामशि लायास।.विष्णुपंजरसंज्ञिता ॥ १ ॥

समसुदर्शनका लक्षण पुराण संग्रहमे कथन कियाहै द्वा भ्यामिति पंक्तिके आकार कर्के शिरमें दो चक्रों कर्के जो भूषित और श्यामहै वर्ण जिसका और पासमे राज शंख कर्के जो युक्त ॥ १ ॥ सो सम सुदर्शन देव श्रेष्ठपुरुषोंने सदा पूजने योग्यहै किसकारणतें भुक्ति और मुक्तिके फलकों देनवाला और पृथिवीमे दुर्लभहै २ योगेश्वरका लक्षण ब्रह्मपुराणमे कथन कियाहै जिसके शिखरमें शालग्रामतें उत्पन्नहुआ जो लिंग सोदेखिये सो ब्रह्महत्याके दूर करणे वाला योगेश्वर नाम कर्के देवहै ॥ १ ॥ विष्णु पंजरका लक्षण पद्मपुराणमे कथन कियाहै जिस शिलामे वज्रकीटोद्भवरेखाहोण सो शालग्राम शिला विष्णु पंजर संज्ञा वाली होतीहै १ ॥

अतसीपुष्पसंकाशोबिंदुनापरिभूषितः सुदर्श
नःस्मृतोदेवःश्यामोभूमिसुखप्रद इति २ ब्र
ह्मपुराणे सुदर्शनस्तथादेवःश्यामवर्णोमहाद्यु
तिःवामपार्श्वेगदाचक्रेरेखाचैवतुदक्षिणेइति १
ब्रह्मांडे एकचक्रंशिरोदेशेकृष्णवर्णमुखस्तथा
सुदर्शनस्सविज्ञेयस्सर्वपापप्रणाशन इति १
पाद्मे चक्राकारेणपंक्तिश्चयत्ररेखामयीभवेत्
ससुदर्शनइत्येवंख्यातः पूजाफलप्रद इति १

अतसीति अलसीके पुष्पकी न्याईंहै प्रकाश जिसका औरबिंदु
कर्के भूषित औरश्यामसो पृथिवी और सुखको देनेवाला सुदर्श
न कथन कियाहै २ ब्रह्मपुराणमे और कथन करतेहैं श्यामव
र्णवालाहोवे और बडाहै तेजजिसका और वाम पासेमें गदा
और चक्रहोवे और दहनेमे रेखाहोवे सोसुदर्शन देवहोताहै १
ब्रह्मांडपुराणमे और कथन कियाहै जिसके शिरमे एक चक्रहो
वेऔर तैसे कृष्ण वर्णवाला मुखहोवे सोसंपूर्णपापके नाशकरणे
वाला सुदर्शन जानना १ पद्मपुराण मे और कथन करतेहैं
जिसमे चक्राकारकी न्याईं रेखा वाली पंक्तिहोवे सो सुदर्शन
जानना सो पूजित किया हुआसंपूर्ण फलको देताहै १

तथा सुदर्शनंतथाज्ञेयंसर्वपापप्रणाशनं पद्मा
सनंवृहच्चक्रं निम्ननाभिसुदर्शनं यतिभिःपू
जनीयंचह्येकचक्रंसरक्तकमिति १ तथा सुद
र्शनंकृष्णवर्णमुत्तमंपरिकीर्त्तितं मधुवर्णमध्यमं
स्यात्कपिलंतुपरित्यजेदिति १ तथा नवांकितं
कृष्णवर्णविंदुनापरिशोभितं स्वर्णरेखासमायु
क्तंनशाणांभुक्तिमुक्तिदमिति १

और तैसे कथन करतेहैं तथेति कमलकी न्याईहै आसन जिस
का और बडाहै चक्र जिसमें और नीवींहै नाभि जिसकी और
रक्तवर्ण वाला है एकचक्रका है चिन्ह जिसमे सो सुदर्शन
जानना तिसका यतियोंने पूजन करणे योग्यहै १ और तैसेंक
थन करतेहैं कृष्ण वर्ण वाला जोसुदर्शन सोउत्तम कथन किया
हे और जोमखीरके रंग वाला होवेसो मध्यम होताहैऔरजो
कपिलवर्ण वाला होवे तिसको त्यागना चाहिये १ और तैसेंक
थन करतेहैं नहि है चिन्ह जिसमे और कृष्णहै वर्ण जिसका
और विंदु करके भूषित और सुवर्णकी रेखा करके जो युक्त सो
सुदर्शन पुरुषोंको भुक्ति और मुक्तिको देताहै १

अथयज्ञमूर्त्तिलक्षणंब्रह्मांडे यज्ञमूर्त्तिस्तुभगवान्पीतरक्तादिमिश्रितः द्वारस्यवामतश्चक्रेस्रुक्चिह्नंदक्षिणेतथा १ पुराणसंग्रहे पीतरक्तायज्ञमूर्त्तिरितिवेदविदोविदुः १ अथ दत्तात्रेयलक्षणम् पीतारुणासिताभश्चह्रस्वपृष्ठोन्नतोभवेत् अक्षमालाकृतिःपृष्ठेदत्तात्रेयः शुभप्रदः १ तथा कृष्णोरक्तश्चपीतश्चदत्तात्रेयाभिधोभवेदिति १

इसतें उपरंत यज्ञमूर्तिका लक्षण ब्रह्मांडपुराणमे कथन कियाहै यज्ञमूर्त्तिरिति पीत और लाल रंगकर्के जोमिश्रित और मुखके वामपासेमे चक्रहोवें और दहनेमे सुरचेका चिह्नहोवे सो यज्ञमूर्ति भगवान् होताहै ॥ १ ॥ पुराण संग्रहमे उोर कथन करतेहैं पीत और रक्तरंग वाली जोशिला तिसकोंवेदकें जाननेवाले यज्ञमूर्तिजानतेहैं १ दत्तात्रेयका लक्षण कथन कियाहै पीत और लाल और कृष्ण है आभा जिसकी और ह्रस्वहै पृष्ठ उोर उच्चा होवे उोर पृष्ठमे रुद्राक्षमालाकी आकृतिहोवे सो शुभके देनेवाला दत्तात्रेय होताहै ॥ १ ॥ और कथनकरतेहैं कृष्ण और रक्त और पीतहै वर्ण जिसका सो दत्तात्रेय होताहै १

शिशुमारलक्षणं ब्रह्मांडे शिशुमारोदीर्घ
कायः शिल्पादिव्यांगगव्हरः परतः पृष्ठभागे
तुचक्रेणैकेनसंयुतःसर्वाधारस्सविज्ञेयःसर्वसि
द्धिप्रदोनृणामिति ॥ १ ॥ पृष्ठभागेचैकचक्रंव
क्रेचक्रद्वयंभवेदिति २ ॥ अथहंसमूर्त्तिलक्षणं
ब्रह्मांडे हंसस्तुधनुषाकारोनीलश्वेतविमिश्रि
तः चक्रपद्मसमोपेतःकेवलंमुक्तिदोभवेदिति
॥ १ गारुडे हंसः शंखाकृतिर्द्युक्तोनाभिचक्र
स्तथोन्नतः दक्षिणेधनुषाकारोवामेकुमुदपुष्प
कम् दृश्यतेभिन्नवर्णस्तुमोक्षवर्गप्रदःशुभइति१

शिशुमारका लक्षण ब्रह्मांड पुराणमे कथन कियाहै शिशुमार इति दीर्घहै काया जिसकी और दिव्य क्या सुंद रहै अंग जिसका और पृष्टकेचारे औरतें एक चक्र करकें जो युक्त सो पुरुषां कों संपूर्ण सिद्धिके देनेवाला और संपूर्णकाआधार शिशुमार जानना ॥ १ ॥ पृष्टभागमें एक चक्र होवे और मुखमें दोचक्र होण सोभी शिशुमार जानना ॥ २ ॥ हंसमूर्त्तिका लक्षण कथन कियाहै ब्रह्मांडपुराणमे धनुषकी न्याईहै आकार जिसका नील और श्वेत वर्णकरकेंमिश्रित और कमल और चक्र करकें जो युक्त सों केवल मुक्ति कों देनेवाला हंस कथनकियाहै १ गरुड पुराण मे. और कथनकियाहै शंखाकृति जो होवे और नाभिमेंहै चक्र जिसके और तैसेंउच्चा और दहनेमें धनुषका आकार और वाममें कुमुद पुष्पकाचिह्न देखिये और भिन्नहै वर्ण जिसका सों मोक्षके देनेवालाहंस कथन कियाहै ॥ १ ॥

परमहंसमूर्त्तिलक्षणं ब्रह्मांडे परमहंसःखगे शानशिखंडिगलसन्निभः स्निग्धश्चायतवृत्त श्चवर्त्तुलद्वारसंयुतः तथा विलमध्येतथाचक्रे दृश्यतेयत्रशोभने चक्रस्यदक्षिणेपार्श्वेद्युमाणि र्भास्वरोभवेत् १ वाराहरेखायद्वामेदृश्यतेवि नतासुत मूर्त्तिःपरमहंसाख्याचतुर्वर्गफलप्रदे ति ॥ १ ॥ लक्ष्मीपतिलक्षणं ब्रह्मांडे मुखेवा पार्श्वतोवापिमयूरगलसन्निभःकृष्णवर्णःसूक्ष्म चक्रःपृथुलास्यः स्त्रगन्वितः लक्ष्मीपतिरिति ख्यातो लक्ष्मीसंपत्तिदायक इति ॥ १ ॥

परम हंस मूर्त्तिका लक्षण ब्रह्मांड पुराण मे कथन कियाहै परमहंस इति हेगरुड जो मोरके गलकी न्याई चि न्नोंवाला होवे और थिंदा और विस्तारवाला गोलाकार और गोलाकार मुख करके युक्त सो परम हंस होताहै ॥ १ ॥ और तैसे कथन करतेहैं जिस शिलाकेविलके मध्यमे सुंदरदोचक्र होवें और चक्रके दहने पासेमे सूर्यका चिह्न होवे ॥ १ ॥ जि सके वाम पासेमें सूकरकी न्याई रेखा देखिये सो हेगरुड धर्म अर्थ काम मोक्षके फलकों देने वाली परमहंस की मूर्त्ति कथन कीतीहै ॥ १ ॥ लक्ष्मी पतिका लक्षण ब्रह्मांड पुराणमे कथन कीताहै मुखमें और पासेतें मोरके गलके सदृश होवे और कृष्णहै वर्ण जिसका और सूक्ष्महै चक्र जिसमे और व डाहै मुख जिसका और मालों करके जो युक्तसो लक्ष्मीकी जो संपदा तिसकों देने वाला लक्ष्मी पति कथन कीयाहै १

गरुडध्वजमूर्त्तिलक्षणं ब्रह्मांडे स्वर्णशृंगखुरः सौम्योवर्त्तुलः स्निग्धकेसरः चक्रेमध्यगते कृष्णेरेखाविंदुविभूषितः ॥ १ ॥ लक्ष्मीकरोवै नतेयगरुडध्वजसंज्ञक इति ॥ २ ॥ वटपत्र शायिलक्षणं ब्रह्मांडे वटपत्रशायीभगवान् वर्त्तुलोऽत्यंतशोभनः क्षीरबुद्बुदवत्तार्क्ष्यनीलश्वे तविमिश्रितः ॥१॥ वक्रस्यवामतःशंखोदक्षिणे पद्ममेवच वदनैकमध्यदेशेचतुश्चक्रस्त्रिविंदुक इति ॥ २ ॥

गरुडध्वजमूर्त्तिकालक्षण ब्रह्मांडपुराणमे कथन कियाहै स्वर्णेति सुवर्णका है शृंग और खुर जिसमें और सोम्य और गोला कार और स्निग्ध केसर वाला और मध्यमे कृष्ण चक्र होवे रेखा और बिंदु करके जो भूषित ॥ १ ॥ हेगरुड सो लक्ष्मीके करणे वाला गरुड्ध्वज होताहै ॥ २ ॥ इसतें उपरंत बटपत्र शायीका लक्षण ब्रह्मांड पुराणमे कथन कियाहै गोलाकार औ र अत्यंत सुंदर और दुग्धके बुलबुलेकी न्याई होवे हेगरुड नी ल और श्वेत करके मिश्रित ॥ १ ॥ मुखके वामपासे शंख और दहनेमें कमलका चिह्न होवे और मुखके मध्यदेशमे चार चक्र होण और तीनहैं विंदु जिसमे सो बटपत्रशायी भगवान् कथ न कीताहै ॥ २ ॥

शेषशायिलक्षणं ब्रह्मांडे फणाकाराशिला यस्यमुखेचक्रद्वयंभवेत् शेषशायसिचक्रेद्वे कृष्णवर्णोमहाद्युतिः ॥१॥ऊर्ध्वरेखासमायुक्तो वनमालाविभूषितःशेषशायीतिविख्यातःसर्वै श्वर्यप्रदायक इति ॥ २ ॥ विश्वंभरमूर्त्तिल क्षणं ब्रह्मांडे चक्राणांचापिविंशत्यायुक्तोविश्वं भरःशुभः भुक्तिमुक्तिप्रदोन्दणामंतेमोक्षप्र दायकइति ॥ १ ॥

शेषशायीका लक्षण कथन कियाहै ब्रह्मांड पुराणमे फणेति जिसकी शिला फणके आकार की न्याईं होवे और मुखमें दोचक्र होण सो शेषशायी होताहै अथवा दो चक्रों वा ला होवे और कृष्ण वर्ण वाला और बडे तेजवाला १ ॥ और ऊर्ध्व रेखा कर्के युक्त और बन माला कर्के भूषित सो संपूर्ण ऐश्वर्यके देने वाला शेषशायी कथन कीताहै ॥ २ ॥ विश्वंभ रमूर्त्तिका लक्षण ब्रह्मांड पुराणमे कथन करतेहैं बीस चक्रों क र्के जो युक्त सो विश्वंभर कथन कीताहै सो पुरुषांकों भुक्ति और मुक्तिकों देताहै और अंतमे मोक्षकों देताहै ॥ १ ॥

पीतांवरमूर्त्तिलक्षणं ब्रह्मांडे स्निग्धोगोरोचना कारस्सचक्रोवर्त्तुलोऽपिवा पीतांबरधरोदेवस्सौ स्यद: शुभदोऽर्चितइति १॥ तथा द्वारदेशेभवे च्चक्रंबहुवर्णसमन्वित: पीतांबरधरोदेवस्सौ स्यैकफलदोर्चितइति १ सत्यवीरश्रवसोलक्ष णंब्रह्मांडेसवर्त्तुलोहृदयचक्र:सर्वांगेहेमविंदुक: सत्यवीरश्रवा:प्रोक्त:सर्वसौभाग्यवर्धनइति १ तथा वर्तुल:पंचवक्र: स्यात्सर्वांगेहेमाविंदुक: सत्यवीरश्रवानामसर्वसौभाग्यवर्धनइति १

पीतांवर मूर्त्ति का लक्षण ब्रह्मांड पुराणमे कथन कीताहै स्निग्ध इति स्निग्ध और गोरोचनके रंग वाला और चक्र वाला और गोलाकार होवे सो पीतांवर देव होताहै पूजिआ हुआ सो सुख और शुभकों देताहै १ ॥ और कथन क रतेहैं मुखमें एक चक्र होवे और बहुत वर्णकर्के जो युक्त सो पितांबर पूजिआ हुआ सुखकों देताहै १ ॥ सत्य वीर श्रव का लक्षण ब्रह्मांड पुराण मे कथन कीताहै गोलाकार और हृदयमे हैं चक्र जिसके और संपूर्ण अंगमे सुवर्णकी विंदु वाला होंवे सो सौभाग्यके देने वाला सत्यवीरश्रवा कथन कियाहै १ और कथन करतेहैं गोलाकार और ५ पंच मुखों वालाहोवे और संपूर्ण अंगोंमे सुबर्णकीयाहैं विंदुजिसमे सो सौभाग्यकों वधानेवाला सत्यवीरश्रवा कथन कियाहै १॥

अथामृताहरणमूर्त्तिलक्षणं ब्रह्मांडे वर्त्तुलोह्रस्व
वदनोह्रस्वचक्रोऽतिकोमलः अमृताहरणोदेवो
नीलोत्पलसमप्रभइति ॥ १ ॥ नरमूर्त्तिलक्षणं
ब्रह्मांडे नरमूर्त्तिस्तुभगवानतसीकुसुमप्रभः ए
कचक्रसमोपेतोब्रह्मसूत्रंचपार्श्वके १ ॥ अथशे
षमूर्त्तिलक्षणं पाद्मे नागवत्कुंडलीभूतरेखा
पंक्तिस्सशेषकइति १ ॥ ब्रह्माण्डे अथवाकुंड
लीभूतनागभोगसमन्वितः शेषमूर्त्तिस्तुभगवा
नशेषैश्वर्यदायकइति १ ॥

इसतें उपरंत अमृताहरण मूर्त्तिका लक्षण ब्रह्मांड पुराणमे कथन कियाहै वर्तुल क्या गोलाकार और ह्रस्वहै मुख जिसका और ह्रस्वहै चक्र जिस मे और कोमल और नीले कमलकी न्याईंहै प्रभा जिसकी सो अमृता हरण देव होताहै ॥ १ ॥ नर मूर्त्तिभगवान्का लक्षण ब्रह्मांड पुराणमे कथन कियाहै अलसीके पुष्पकी न्याईंहै प्रभा जिसकी और एकचक्र करकें जो युक्त और पासेंमे यज्ञोपवीतका चिह्न होवे सो नरमूर्त्ति भगवान् होताहै १ ॥ इसतें उपरंत शेष मूर्त्ति का लक्षण पद्म पुराण में कथन करतेहैं नागकी न्याईं कुंडलीभूतहै रेखोंकी पंक्ति जिसमे सो शेष नाग मूर्त्ति होताहै १ ॥ ब्रह्मांड पुराणमे और कथन करतेहैं अथवा कुंडलीभूत नाग भोग करकें जोयुक्त सो संपूर्ण ऐश्वर्य के देने वाली शेष मूर्त्ति होतीहै १ ॥

अथगरुडमूर्त्तिलक्षणं पाद्मे पक्षाकारेचचक्रेद्वे
मध्येलंबाचरेखिका गरुडस्सतुविज्ञेयोभुक्तिमु
क्तिप्रदायकइति १ ब्रह्माण्डे द्विपक्षाभ्यामुपेतं
यद्गरुडंभुविदुर्लभंदुर्लभंसमचक्रंचकलौकल्मष
नाशनं तथा कल्मषौघविनाशीस्याद्वलयाकार
रेखया सुवर्णनिभयाद्वित्रिचतुष्टयसमेतया १
बनमालिमूर्त्तिलक्षणम् शिलाशुभ्राचसुश्लक्ष्णा
शुभचक्रासुशोभना बनमालीसाविज्ञेयोह्याशु
मोक्षफलप्रदइति ॥ १ ॥

इसतैं उपरंत गरुड मूर्त्तिका लक्षण पद्मपुराणमे कथन करतेहैं पक्षेति खंबके आकारकी न्याई मध्यमे दोचक्र जिसमे और लंबीहै रेखा जिसमे सो भुक्ति और मुक्तिके फलको देनेवाला गरुड जानना ॥ १ ॥ ब्रह्मांड पुराणमे और कथन करतेहैं जो गरुड दोपंखोंकर्के युक्त सो पृथिवीमे दुर्लभहै अथवा समहै चक्र जिसमे सोभी दुर्लभहै सो कलियुगमे पापांका नाशकरता है ॥ १ ॥ और तैसे कथन करतेहैं सुवर्णकीन्याई दो तीन वा चार जो वलयाकार रेखा तिन कर्के जो युक्त सो गरुड कलियुगमे पापोंका जो समूह तिसका नाश करता है १ बनमालि मूर्त्तिकालक्षण कथनकरतेहैं श्वेत जो शिला और कोमल और शुभ चक्र कर्के सुंदर सो तात्काल मोक्ष फलको देने वाला वनमाली जानना ॥ १ ॥

मुरारिमूर्त्तिलक्षणं पुराणसंग्रहे मध्येचक्रंशि
लासूक्ष्मंदक्षिणांगेचपुष्कलम् मुरारिंदैवतंदेह
कुष्ठव्याधिविनाशनमिति १ मुकुंदमूर्त्तिलक्षणं
पुराणसंग्रहे अल्पास्योवहुचक्रश्चश्यामवर्णं
स्तथोज्वलःमुकुंदःसर्वपापघ्नः पांडुरेवफलप्रद
इति १ ब्रह्मांडे षण्मुखेनमुकुंदाख्यस्सतांमुक्ति
प्रदायक इति १ श्रीवत्सलांछनलक्षणं पुरा
णसंग्रहे श्रीफलाकारसदृशंपीतंचसहचक्रिणं
श्रीवत्सलांछनंनामस्त्रीहत्यापापनाशनम् १ ॥

मुरारि मूर्त्तिका लक्षण पुराण संग्रह मे कथन कीयाहै मध्ययि
ति मध्यमें है चक्र जिसके और सूक्ष्महै शिला जिसकी और द
क्षिण पासे मे वडा होवे सो देहमें जो कुष्ठ रोग तिसको दूर
करणे वाला मुरारि देवता होताहै ॥ १ ॥ मुकुंदमूर्त्तिकालक्षण
पुराणसंग्रहमें कथन कीयाहै अल्पहै मुख जिसका और वहुतहैं
चक्र जिसमें और श्याम है वर्ण जिसका और उज्वल होवे
सो संपूर्ण पापको दूरकरणेवाला मुकुंदहोताहै पांडु वर्णवाला
भी फलको देताहै १ ब्रह्मांड पुराणमें और कथन करतेहैं छे
मुखों वाली जो मूर्त्ति सो मुकुंद नामककैं होतीहै और श्रेष्ठपु
रुषोंको मुक्तिदेतीहै १ श्रीवत्सलांछनका लक्षण पुराण संग्रहमे
कथन करतेहैं गोलाकार और पीतहै वर्ण जिसका और चक्र
वाला होवे सो स्त्रीहत्याका जो पाप तिसको नाशकरणेवाला
श्रीवत्सलांच्छन होताहै ॥ १ ॥

श्रीफलाकारसदृशं पीताभं वामचाक्रिणम्
श्रीवत्सनामदेवेशंहत्याकोटिविनाशनमिति१
धरणीधरमूर्त्तिलक्षणं ब्रह्मांडे वर्त्तुलोद्वारचक्र
श्चशिलास्थूलः सुशोभनः धरणीधरस्सविज्ञे
यः सर्वयज्ञफलप्रदइति १ योगराजमूर्त्तिलक्ष
णं विष्णुरहस्ये वामांगेपुष्कलंस्निग्धंद्विचक्रंच
सुसूक्ष्मकम् स्थिरासनंकृष्णवर्णनाभियुक्तं
चयद्भवेत् तद्ज्ञेयंयोगराजस्यलक्षणंयोगदा
यकम्॥ १ ॥

और तैसें कथन करतेहैं श्रीफलेति श्रीफलके आकारके सदृश क्या गोलाकार और पीत वर्ण वाला और वाम पासे में चक्र होवे सो क्रोड हत्याके दूर करणे वाला श्रीवत्स नाम कर्के देव होताहै १ धरणीधर मूर्त्ति का लक्षण कथन कीयाहैं ब्रह्मांडपुराणमे गोलाकार और मुखमें चक्र होवे और स्थूलहै शिला जिसकी और सुंदर सो संपूर्ण यज्ञके फलको देने वाला धरणिधर जानना १ योगराज मूर्त्तिका लक्षण विष्णु रहस्यमे कथन कीताहै वाम भागमें बडा होवे और थिंद्दा और दोहैं चक्र जिसमे और सूक्ष्म और स्थिरहै आसन जिसका और कृष्ण वर्ण वाला होवे और नाभि कर्के युक्त होवे सो योगकों देने वाला योगराज जानना १

श्रीमूर्त्तिलक्षणं पुराणसंग्रहे अधोधस्तात्त्रि
वदनःषट्चक्रःश्यामलोविभुः श्रीमूर्त्तिरिति
विख्यातः सर्वसौभाग्यदायक इति १ स्कांदे
शंखचक्रादिकमलकमंडलुनिशाकरैः मुखत्र
येणसंयुक्तः श्रीमूर्त्तिस्तुशुभप्रदः १ श्रीसहा
यमूर्त्तिलक्षणं पुराणसंग्रहे चक्रैस्तुकेवलैर्यस्तु
पंचाभिरुसमलंकृतः वनमालांकितश्चैवसंज्ञेयः
श्रीसहायकइति ॥ १ ॥

श्रीमूर्त्तिका लक्षण पुराण संग्रहमे कथन कियाहै अधइति जिसके अधा अधातें तीन मुख होण और छे ६ चक्रों वाला और श्याम वर्ण वाला और विभु सो संपूर्ण सौभाग्य के देने वाला श्रीमूर्त्ति कथन करींदाहै १ स्कंद पुराणमें और कथन करतेहैं शंख और चक्र और कमल और कमंडलु और चंद्रमा इनों करके और तीन मुखां करके जो युक्त सो शुभके देने वाला श्रीमूर्त्ति होताहै १ श्रीसहाय मूर्त्तिका लक्षण पुराण संग्रहमे कथन कियाहै केवल पंच चक्रों करके जो अलंकार कीयाहुआ और वनमालाकाहै चिन्ह जिसमे सो श्रीसहायक जानना १

देवदेवमूर्त्तिलक्षणं स्कान्दे सर्वाभस्सूक्ष्मवद
नःपीतरेखः सलक्ष्मकः विदिक्षुदिक्षुसर्वासुदृ
श्यतेचसमंततः १ सदेवदेवोविज्ञेयः पुराणपु
रुषोत्तमः २ कपिलमूर्त्तिलक्षणं स्कांदे। कपि
लोवर्त्तुलोऽत्यंतस्पष्टचक्रसमान्वितः पंचाविंदुस
मोपेतःपरविद्याप्रदोनृणामिति १ अव्ययमूर्त्ति
लक्षणं ब्राह्मे प्रदक्षिणावर्त्तयुतोवनमालाविभू
षितःकृष्णवर्णयुतश्चापिधनधान्यसुखप्रदः १

देवदेव मूर्त्तिका लक्षण स्कंद पुराणमे कथन कियाहै सर्वाभ इति संपूर्णमेहै आभा जिसकी और सूक्ष्म मुख वाला और पीतहै रेखा जिसमे और चिन्ह वाला और संपूर्ण दिशा और विदिशा में चारें औरतें जो देखिये ॥ १ ॥ सो पुराण पुरुषोत्तम देवदेव जानना २ ॥ कपिल मूर्त्तिका लक्षण स्कंद पुराणमे कथन कियाहै गोलाकार अत्यंत स्पष्ट चक्र करकें युक्त और पंच विंदु करकें जो युक्त सो पुरुषांकों परविद्याके देने वाला कपिलदेव होताहै १ अव्यय मूर्त्तिका लक्षण कथन कीताहै ब्रह्मपुराणमें प्रदक्षिणावर्त्त करकें युक्त और बनमाला करकें भूषित और कृष्ण वर्ण करकें जो युक्त सो धन और अन्न और सुखके देने वाला अव्यय होताहै १

क्षीराब्धिशायिलक्षणं स्कान्दे एकचक्रंचवदने पंचायुधलसत्तनु पृष्ठेसवर्त्तुलंलाक्षाक्षीरकांति समन्वितम् १ चक्रस्योभयपार्श्वेतुफणिपंजरशोभितम् सवर्त्तुलंतथास्निग्धंक्षीराब्धिशयनंविदुरिति २ मुसलायुधमूर्त्तिलक्षणं ब्रह्मांडे मुसलाकाररेखाभिरेकचक्रेणसंयुतः मुसलायुधनामासौशंखचक्रगदान्वितः पूजनाच्चैवसर्वेषांभुक्तिमुक्तिफलप्रद इति १ ॥

क्षीराब्धि शायीका लक्षण स्कंद पुराणमे कथन कियाहै एक चक्र मिति जिसके मुखमे एक चक्र होवे और ५ पंच बाणो करके प्रकाशमानहै शरीर जिसका और पृष्ठमे गोलाकार और लाख और क्षीरकी कांति करके युक्त ॥ १ ॥ और चक्रके दोनो पासयोंमें सर्पके देह करके युक्त और गोलाकार और जो थिंदा तिसको क्षीराब्धि शायी जानतेहैं २ मुसलायुधमूर्त्तिका लक्षण कथन कीताहै ब्रह्मांडपुराणमें मुसलक्या मोहलेके आकारकी न्याई जो रेखा और एक चक्र करके जो युक्त शंख और चक्र और गदा करके जो युक्त सो मुसलायुध नाम करके देव होताहै पूजनतें सो संपूर्णकों भुक्ति और मुक्तिके फलकों देताहै १

चक्रपाणिमूर्त्तिलक्षणं ब्रह्मांडे पूर्वभागेत्रिव
दनःपश्चादेकास्यसंयुतः चक्रपाणिरितिख्या
तश्चक्रवर्त्तित्वदायकः १ ॥ वहुरूपमूर्त्तिलक्षणं
ब्रह्मांडे अभ्यंतरेपृथक्चक्रोवहुलास्यः समं
ततः वहुरूपीसमाख्यातः पूजितोमोक्षदाय
कः १ ॥ अथजगद्योनिमूर्त्तिलक्षणं ब्रह्मांडे
द्वारचक्रोरक्तवर्णोजगद्योनिःसुखप्रदइति १ ॥

चक्रपाणिकी मूर्त्ति का लक्षण ब्रह्मांड पुराण मे कथन कियाहै पूर्वभागयिति पूर्वभाग मे तीन मुख होण पीछेतें एक मुख करकें जो युक्त सो सारी पृथिवी के राज्यकों देने वाला चक्रपाणि कथन कीताहै ॥ १ ॥ वहु रूप मूर्त्ति का लक्षण व्रह्मांड पुराण मे कथन कीताहै जिसके मध्य मे एक चक्र होवे और बडे मुख वाला होवे सो पूजित्र्प्रा हुआ मोक्षकों देने वाला बहुरूपी कथन कीताहै ॥ १ ॥ इसतें उपरंत जगद्योनि मूर्त्ति का लक्षण ब्रह्मांड पुराण मे कथन कीता है मुख मे चक्र वाला होवे और रक्त वर्ण वाला होवे सो सुखकों देने वाला जगद् योनि होताहै १ ॥

त्रिमूर्त्तिलक्षणं ब्रह्मांडे ऊर्ध्वाधस्तुत्रिवदनःष ट्चक्रःश्यामलांगधृक् त्रिमूर्त्तिरितिविख्यातः सर्वसौभाग्यदायकः १ ॥ वामने चक्रत्रयस मेतश्चत्रिमूर्त्तिःस्याच्छुभप्रदइति १ ॥ विष्व क्सेनमूर्त्तिलक्षणं स्कांदे पद्मकोशप्रतीका शोनवचक्रसमन्वितः विष्वक्सेनस्तुभगवान श्वमेधफलप्रदः १ ॥ पुराणसंग्रहे अष्टचक्र श्चतुर्वक्त्रःश्रीचक्रेणसमन्वितः श्वेतरेखास मायुक्तःकृष्णवर्णःस्थिरासनः १ ॥

त्रिमूर्त्तिका लक्षण ब्रह्मांड पुराण मे कथन कीताहै ऊर्ध्वेति उ पर और अधा में तीन मुखों वाला होवे और छे ६ हैं च क्र जिस में और श्याम अंग के जो धारणे वाला होवे सो संपूर्ण सौभाग्यके देने वाला त्रिमूर्त्ति कथन कीताहै १ ॥ वा मन पुराण मे और कथन करते हैं तीन चक्रों करकें जो युक्त सो शुभ कों देने वाला त्रिमूर्त्ति होताहै १ ॥ विष्वक्सेन मूर्त्ति का लक्षण कथन कीयाहै स्कंद पुराणमें कमल की डोडी की न्याईं हैं प्रकाश जिस का और ९ नौ चक्रों करकें जो युक्त सो अश्वमेध फल कों देने वाला विष्वक्सेन होताहै १ ॥ पुराण संग्रह मे और कथन करतेहैं ॥ आठ ८ हैं चक्र जि समे और चारहैं मुख जिस मे और श्री चक्र करकें युक्त औरश्वेत रेखा करकें जो युक्त ओर कृष्ण है वर्ण जिस का और स्थिर आसन वाला होवे ॥ १

शंखचक्रगदायुक्तोधनुर्वाणसमन्वितः यज्ञसूत्रधरः श्रीमान्विष्वक्सेनःप्रकीर्त्तितः ॥ २ ॥ हैहयमूर्त्तिलक्षणं ब्रह्मांडे गर्भागारेतुचक्रेद्वे पद्मंदक्षिणतोवहिः पद्मपत्राकृतिर्वापिहेमवर्णसमाकुलः हैहयस्तुभवेद्देवस्सर्वसिद्धिप्रदायकः॥ १ ॥ इतिशालग्राममूर्त्तिलक्षणम्

शंखेति शंख चक्र और गदा करके जो युक्त धनुष और बाण करके जो युक्त यज्ञसूत्रके धारणेवाला सो शोभावाला विष्वक्सेनहोताहै ॥ २ ॥ हैहय मूर्त्तिका लक्षण ब्रह्मांड पुराणमे कथन कीयाहै जिसके गर्भमें दोचक्रहोंन और दक्षिणके बाहरकी तरफमें कमलका चिह्नहोवें वा कमलके पत्रकी आकृतिवाला होवे और सुवर्णके रंगवालाहोवे सो संपूर्ण सिद्धिके देनेवाला हैहयदेव होताहै ॥ १ ॥ एहशालग्राममूर्तियोंकालक्षण समाप्त भया ❀

अथ शालग्रामशिलास्नानजल महिमा

॥ स्कांदे ॥ शालग्रामभवोदेवोदेवेश्वरयुतो भवः उभयोःस्नानतोयेनब्रह्महत्यानिवर्त्तते ॥ १ ॥ पाद्मे ॥ सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितःशालिग्रामशिलातोयैर्योभिषेकंसमाचरेत् ॥ २ ॥ गंगागोदावरीरेवास्सद्योमुक्तिप्रदास्तुयाः निवसंतीहतीर्थानिशालग्रामशिलाजले ३ अम्बरीषगृहेतेषांदासोहंवशगःसदा हरेःस्नानावशेषंचजलंयस्योदरेस्थितम् ४ ॥

अब शालग्राम शिलाके स्नान वाले जलके साथ स्नान करनेकी महिमा लिखीहै स्कंदपुराणमे ॥ शालग्राम पर्वत भव जो देवता और देवेश्वरके युक्त जो महादेव इन दोनोंके स्नान जल के साथ ब्रह्महत्या दूर होतीहै ॥ १ ॥ पद्मपुराणमे कहाहै सोई पुरुष सारेतीर्थोंमें न्हायाहै और सारेयज्ञोंमे दीक्षित भी ओहीहै कौन जो शालग्रामकी शिलाके स्नान कराये होए जलों करके आप मार्जन कर्ताहै ॥ २ ॥ गंगागोदावरीरेवा इत्यादिक नदियां शीघ्र स्नान मात्र करके मुक्ति देने वालियां जौनसीयां हैं सो सारियांही नदियां और तीर्थ शालग्राम शिलाके जलमैं निवास कर्तेहैं ३ ॥ अंबरीषके प्रति भगवान् कहतेहैं हे अंबरीष हरिका स्नानावशेष जल जिसके उदरमें नित्य स्थितहै उनके घरमेमैं दासहोकररहताहुं ॥ ४ ॥

अंबरीषप्रणम्योच्चैः पादपांशुः प्रगृह्यतां गर्जं
तितावदन्यानितीर्थानिभुवनत्रयेयावन्नप्राप्य
तेतीर्थंशालिग्रामाभिषेकजं ५ जन्मप्रभृतिपा
पानांप्रायश्चित्तंयदीच्छसि शालग्रामशिलावा
रिपापहारिनिषेव्यतां ६ नृसिंहपुराणे गंगा
प्रयागगयपुष्करनैमिषारण्यपुण्यानियानिकुरु
जांगलयामुनानि कालेनतीर्थसलिलानिपुनं
तिकालेपादोदकंभगवतःप्रपुनातिसद्यः ७ ॥

हे राजन अंबरीष तूं भी प्रणाम कर्के उनके पादों की धूलि ग्रहण कर ओह वडी श्रेष्ट है और त्रिलोकी मे तीर्थ उतना हि काल गर्जन कर्तेहैं जितना काल शालग्राम शिलाके स्नान करणे वाला तीर्थरूप जल नहि प्राप्त होताहै ॥ ५ ॥ हे अंबरीष जन्मतें लेकर पापोंके प्रायश्चित्तकी जेकर इच्छा करताहैं तो पापोंक दूरकरणेवाले शालग्रामशिलाके जलकासेवनकर ६ ॥ नृसिंहपुराणमे कहाहै गंगा प्रयाग गया पुष्कर नैमिषारण्य और जौनसें पवित्र कुरुजांगल यमुनाके किनारे के देशहैं सो काल कर्के पवित्र कर्तेहैं और तीर्थोंके जल ओहभी चिरकाल कर्के पवित्र कर्तेहैं जौनसा भगवान् जीके चरणों का जलहै सो शीघ्र पवित्र कर्ताहै ॥ ७ ॥

स्मृत्यंतरे: देहःशुद्ध्यतिवाह्योऽद्भिरंतरात्मोद कंहरेः नित्येनैमित्तिकेकाम्येपीत्वाभुक्त्वानदु ष्यति ॥ ८ ॥ विष्णुपादोदकंपीत्वाशालग्रा मशिलाभवं विशेषेणहरेत्पापंब्रह्महत्यादिकं नृणाम् ॥ ९ विष्णुरहस्ये विष्णुपादोदकंपीत्वा पश्चादशुभशंकया यआचामतिसंमोहाद्ब्रह्मह त्यांसविंदति॥ १० ॥बृहन्नारदीये ॥ तुलसीद लसंमिश्रंजलंसर्षपमात्रकं गंगायास्तुपुना त्येकंकुलानामेकविंशतिम् ॥ ११ ॥

स्मृत्यंतरमे लिखाहै किदेहजोहै सोवाहरसें जलकरके शुद्धहो ताहै और अंतरात्मा हरिके चरणोदककरके शुद्धहोताहै सो हरि का चरणामृत कैसाहै नित्यनैमित्तिक काम्यकर्मके आद औरभो जनके पीछे उसका पान करके पुरुष उच्छिष्ट नहिहोताहै ८॥ विष्णुकेपादोंका जल शालग्रामकी शिलासें उत्पन्न होएआ हुया विशेषकरके पुरुषोंके ब्रह्महत्यादि पापोंकों हर्ताहै ॥ ९ ॥ विष्णु रहस्यमे लिखाहै विष्णुके पादोंका जल पान करके पी छेसे अपवित्रता की शंका करके जो आचमन कर्ताहै अज्ञा नसें सो ब्रह्महत्या कों प्राप्तहोताहै १० बृहन्नारदीयमे कहाहै तुलसी दलके साथ मिला हुया श्रीगंगाजीका जल सरेयों के दाने तुल्य पान करा हुया इकीस कुलोंकों पवित्रकर्ताहै ॥ ११

क्रियायोगसारमेलि० ॥ ततःपादोदकंप्राज्ञोम
हाविष्णोःपरात्मनः समस्तपातकध्वंसिगृह्
णीयाद्भक्तिभावतः ॥ १२ ॥ कणमात्रंवहेद्य
स्तुविष्णुपादोदकंशुभं सस्नातःसर्वतीर्थेषुजै
मिनेसत्यमुच्यते ॥ १३ ॥ स्पृशेत्पादोदकंवि
ष्णोर्गंगास्नानफलंलभेत् गांगेयसलिलंविप्र
विष्णुपादोदकंयतः ॥ १४ ॥ पापव्याधिविना
शार्थंविष्णुपादोदकौषधं पापिनोऽपिनरस्तच्च
पिबंतुप्रतिवासरम् ॥ १५

क्रियायोगसारमैं लिखाहै तिसकारणसैं विष्णुके पादोंका जल सारेहीपापोंका नष्ट करने वाला भक्तिभावना सैं पुरुष ग्रहण करे ॥ १२ ॥ जोपुरुष विष्णुके पादोंका शुभ जल किणका मात्रभी धारण कर्ताहै हेजैमिने सोपुरुष सारे तीर्थोंमें न्हाया एहवात सत्य कथन करीहै ॥ १३ ॥ विष्णुके चरणोंका जल जो स्पर्श करेसो गंगाजिके स्नानका फल पावताहै क्यों कि जिसकारणसें हेविप्र गंगाजीकाभी जल विष्णुके हिपादोंका जलहै ॥ १४ ॥ पापरूपी व्याधिके विनाश वास्ते विष्णुके पादोंकाजलही औषधहै इसकारणसैंही प्रति दिन तिसका पापी पुरुष पान करे ॥ १५ ॥

अकालमरणंनास्तिनचसंसारजंभयं स्पृशतः
पादसलिलंकेशवस्यमहात्मनः ॥१६॥ विष्णु
पादोदकंशुद्धंतुलसीपत्रमिश्रितं योवहेच्छिर
सानित्यंतस्यपुण्यंवदाम्यहम् १७ ब्रह्महत्या
दिभिःपापैर्विमुक्तोविष्णुरूपधृक् अंतेविष्णु
पुरंगत्वाविष्णुनासहमोदते ॥१८॥ अनर्हंमम
नैवेद्यंपत्रंपुष्पंफलंजलं शालग्रामशिलास्पृ
ष्टंसर्वंयातिपवित्रताम् ॥१९॥ स्कांदे ॥ सुल
भंकिंनसेवतशालग्रामशिलाजलं यस्यस्प
र्शनमात्रेणपूतोभवतिमानवः॥ २० ॥

महात्मा केशव विष्णुजीके पादोंका जल स्पर्श करने वाले पुरुषकों अकाल मृत्यु नहिहोंताहै और संसारका भय नहिहोताहै ॥ १६ ॥ शुद्धनिर्मल जो विष्णुके पादों का जल तुलसी दलके साथमिला हुया तिसकों शिरकर्के जो धारणकर्ताहै तिसके पुण्यका माहात्म्यकहताहुं ॥ १७ ॥ सोब्रह्महत्यादिपापों सें निर्मुक्तहोआ हुआ विष्णुका रूपधारकर अंतमें विकुंठ लोकमे जाकर विष्णुके साथ सुख भोगताहै ॥१८ ॥ और अनर्ह क्या अयोग्य जो स्पर्शादि दोषोंकर्के पत्र पुष्प फल एह सभ शालग्रामकीशिलाकर्के स्पर्शकरेहोएपवित्रताकोंप्राप्त होंतेहैं ॥१९॥ स्कंदपुराणमेंकहाहै ॥ सुखालींवस्तु जो शालग्राम शिलाका जल तिसकों लोक क्यों नहि सेवता जिसके साथ स्पर्शमात्र कर्के मनुष्य पवित्र होजाताहै ॥ २० ॥

पिबंतियेनरानित्यंशालग्रामशिलाजलं पंच
गव्यसहस्रैस्तुप्राशितैःकिंप्रयोजनम् ॥ २१॥
शालग्रामशिलायत्रतत्तीर्थंयोजनत्रयम् तत्र
दानंचहोमश्चसर्वंकोटिगुणंभवेत् २२ ॥ शाल
ग्रामशिलातोयंयःपिबेद्बिंदुनासमं मातुःस्त
न्यंपिबेन्नैवसभवेन्मुक्तिभाङ्नरः २३ अत्रवि
शेषःविष्णुपादोदकंयस्तुकरेणपिवतेयदि समू
ढानरकंयातियावदिंद्राश्चतुर्दश ॥ २४ ॥

जौनसे नित्यं प्रति शालग्रामकी शिलाकाजल पान कर्तेहैं ति
नोंकों हजारों वार पंचगव्य खाने कर्के क्या प्रयोजनहै ॥ २१
जिस स्थानमैं शालग्रामकी शिलाहै ओह स्थान तीन योजन
तक तीर्थ रूपहै उहां दान होम यज्ञादिकिये होए क्रोडगुणा
अधिक पुण्य वाले होतेहैं ॥२२ ॥ जो शालग्रामकी शिलाका
जल विंदुके समानभी पानकरे सो मुक्तिका भागी पुरुष माता
के स्तनपानकों नहि कर्ताहै ॥ २३ ॥ इसमे विशेषहै॥ वि
ष्णुकेपादोंका जल एक हाथ कर्के जो पानकर्ताहै सो मूढ
पुरुषनरककों जाताहै जितनाकाल चौदां इंद्रहैं ॥ २४ ॥

छिन्नस्तेनमहाभागगर्भवासःसुदारुणः पीतंये
नमहाविष्णोःशालग्रामशिलाजलम् २५ पा
दोदकेनदेवस्यहत्याकोटिंसमंततः शोधयंति
नसंदेहस्तथाशंखोदकेनच २६ स्कांदे प्रा
यश्चित्तेसमुत्पन्नेकिंदानैःकिमुपोषणैः चांद्राय
णैश्चकिंतीर्थैः पीत्वापादोदकंशुचिः २७॥ पा
द्मे क्रियायोगसारे॥ विष्णोः पादोदकंविप्रयः
पिबेद्वैष्णवोत्तमः पातकंतच्छरीरस्थंतत्क्षणा
देवनश्यति॥ २८॥

हेमहाभाग जिस पुरुषने महाविष्णुकी शालग्राम शिलाकास्ना न कराया हुया जल पान कराहै तिसने दारुण गर्भ बास होना काट दियाहै ॥ २५ ॥ और देवताके पादोदक कर्के चारो ओर सें हत्या कोटिकों शोधन कर्ताहै और इसीप्रकार शंखके जल कर्के शोधनकर्ताहै २६ स्कंदपुराणमे कहाहै प्रायश्चित्तके उत्पन्न होएहो दानोंकर्के और निराहार व्रतों कर्के चांद्रायणो कर्के और तीर्थ स्नानोंकर्के क्या प्रयोजनहै क्योंकि विष्णुका चरणामृतपान कर्के हीशुद्धहोजाताहै २७ पद्मपुराणके क्रियायोगसारमे लिखा है हे विप्र जो वैष्णवोत्तम विष्णुका पादोदक पान करे तिसके देहमे जितनेकपाप स्थितहैं सो सारेही तत्क्षणमे नष्ट होजातेहैं ॥ २८ ॥

यथौषधेनदेहस्थंहन्यतेदेहिनोविषं तथैवपा
तकंसर्वंविष्णुपादोदकंहरेत् २९ ॥ विष्णुपा
दोदकंस्पृष्ट्वातत्फलंप्राप्यतेजनैः सप्तद्वीपांम
हींदत्त्वाद्विजेभ्योयत्फलंलभेत् ३० ॥ तत्फलं
लभतेमर्त्योविष्णुपादोदकंस्पृशन् दीपिका
शतदानेनयत्पुण्यंपरिकीर्तितम् ३१ तस्माद
भ्यधिकंपुण्यंलभेत्पादोदकंस्पृशन् बहुनात्र
किमुक्तेनसंक्षेपादुच्यतेमया विष्णुपादोदक
स्पर्शान्मुक्तिमाप्नोतिमानवः ३२ भूयोभूयोपि
विप्रेंद्रसुदृढंकथ्यतेमया पुनर्नलभतेजन्मवि
ष्णुपादोदकंस्पृशन् ३३ ॥

जैसे देहिके देहमे स्थित जो विष सोह जैसे औषधी करकै दूर
होताहै इसीतरह देहिके सारे पापों कों विष्णुका चरणोद
कदूरकर्ताहै ॥ २९ ॥ और विष्णुके पादोदककों स्पर्श करकै
पुरुषोंकों सो फल प्राप्त होताहै जो सप्तद्वीपवाली पृथिवीदा
न करकै होताहै ॥ ३० ॥ विष्णुके पादोदककों स्पर्श कर्ते हो
ए सोपुण्य पुरुषोंकों प्रातहोताहै जोफल सौदीपिका दानकर
ने करकै होताहै परंतु तिससे अधिकपुण्य विष्णुके पादोदक
कों स्पर्शकर्तेहोताहै ॥ ३१ ॥ वहुत इसमे क्याकहनाहै संक्षेप
करकै एहवातकहीदीहै सोक्या वातहै कि विष्णुके पादजल
स्पर्श करनेसैं मानव मुक्तिकों प्राप्तहोताहै ॥ ३२ ॥ हेविप्रेंद्र वा
रंवार मैंने दृढनिश्चयवालीवातकहीदीहै क्याविष्णुके पादोद
ककों स्पर्श करकै फिरजन्मकों नहिलभताहै ॥ ३३ ॥

बृहन्नारदीयेसूतशौनकसंवादेसेतिहासंनारा
यणचरणोदकमाहात्म्यंवर्ण्यते ॥ संगात्स्नेहा
द्भयाल्लोभादज्ञानादपियोनरःविष्णोरुपासनां
कुर्यादक्षयंसुखमश्नुते १ हरिपादोदकंयस्तु
क्षणमात्रंतुधारयेत् सस्नातः सर्वतीर्थेषुहरेः
प्रियतरोभवेत् ॥ २ ॥ अकालमृत्युहरणंसर्व
व्याधिविनाशनं सर्वपापक्षयकरंविष्णोः पा
दोदकंशुभम् ॥ ३ ॥ अत्राप्युदाहरंतीममिति
हासंपुरातनं पठतांशृण्वतांचैवसर्वपापप्रणा
शनम् ॥ ४ ॥

बृहन्नारदीय पुराणमे सूतशौनक संवादमें इतिहासके सहित ना
रायणजीके चरणामृतका माहात्म्य वर्णन करीदाहै ॥ जौनसा
कोई पुरुष सत्संग वश करके और स्नेहसें वा किसीके भयसें
अथवा लोभसें वा विना जाने विष्णुकी उपासना करताहै सो
अक्षय सुखभोगताहै १ ॥ जो हरिके चरणोदककों क्षणमात्र
धारताहै सो सारेतीर्थोंमें स्नात हुया हुया हरिका प्यारा होता
है ॥ २ ॥ विष्णुके पादोंका जल पान करना अकाल मृत्यु
कों हरताहै सारियों व्याधियों का नाशकर्ताहै और सारे पा
पक्षयकर्ताहै ऐसा शुभ माहात्म्य वालाहै ॥ ३ ॥ अब इस च
रणोदक पानमें प्राचीन एककथानक कथन कर्ताहुं कैसाहै प
ढने सुनने वालेयोंके सारे पापक्षय करने वालाहै ॥ ४ ॥

सूतउवाच आसीत्पुराकलियुगेकलिकोनाम
लुब्धकः परदारपरद्रव्यहरणेसततंरतः ५ ॥
परनिंदापरोनित्यंजंतुपीडाकरस्तथा हतवा
न्ब्राह्मणान्गाश्चशतशोथसहस्रशः ६ देवस्व
हरणेनित्यंपरस्वहरणेरतः इत्युक्तःसततंवि
प्राःकीनाशानामधीश्वरः ७ कदाचित्पथिगग
च्छंतमुत्तंकमृषिपुंगवं द्रव्यापहरणंकृत्वाबंध
यामासयत्नतःतदोवाचमहातेजाःकलिकंसमु
निपुंगवः ८ अहोदुःखंमनुष्याणांममताकुलचे
तसां महापापानिकृत्वऽपिपरान्मुष्णंतियत्नतः९

सूतजी कथन करैं भये पूर्व एकसमय कलियुगमे कालिक नाम वाला एक वंधकी होता भया कैसाथा पराईयां स्त्रियां पराये द्रव्य के हरनेमैं सर्वदाकाल रतथा ॥ ५ ॥ और दूसरेकी निंदा करनी जीवोंकों मारना नित्यंप्रति और सैकैडेहजारांगौयां व्राह्मणोकों मारता भया ॥ ६ ॥ और देवता का द्रव्य नित्यं प्रति चुराय लेता पराया धन हरताथा हेविप्राः इस प्रकारका कथन कराहै सो कीनाशोंका अधिपति ॥ ७ ॥ किसी कालमे रस्तेपे जाते हुए श्रेष्ठ उत्तंकऋषिके द्रव्यकोलूट कर फेर यत्नसे तिसकों वांधता भया तद वडे तेज वाला सो उत्तंक ऋषि कलिककों कहताभया ॥ ८ ॥ वडा आश्चर्य है ममता करकैं व्याकुल चित्त वाले मनुष्यों कों वडा कष्टहै जो वडे पाप करकैं दूसरोंकों यत्नसे हरतेंहैं ॥ ९ ॥

अर्जितंतुधनंसर्वंभुंजतेवांधवाःसदास्वयमेकत
मोमूढस्तत्पापफलमश्नुते १० इतिब्रुवाणंतमृ
षिंविमुच्यभयविह्वलः कालिकः प्राहसहसा
क्षमस्वेतिपुनःपुनः ॥ ११ ॥ तत्संगस्यप्रभावे
णहरिसंनिधिमात्रतः गतपापोलुब्धकश्चसोऽ
नुतापीदमब्रवीत् ॥ १२ मयाकृतानिपापानि
महांतिसुवहूनिच तानिसर्वाणिनष्टानिविप्रेंद्र
तवदर्शनात् ॥ १३ ॥

इकठे करे होए धनकों सारेही वांधव सर्वदा काल भोगतेहैं
और आप इकलाहीमूढ पुरुष तिस पापकें फलकोंभोगताहै
१० ॥ इस प्रकार कहतेंहोए तिस ऋषिकोंत्याग करकें भयकर
व्याकुल कालिक वारं वार ऐसे कहता भया क्षमा करो ११ ॥
तिसके संगके प्रभाव करकें और हरिकी संनिधिमात्रसें दूर हो
गए पापजिसके ऐसालुब्धक पश्चात्ताप कर युक्त एह वाक्यक
हताभया ॥ १२ ॥ क्या वाक्यहै सो कहनें लगा हेविप्रेंद्र मैंने
वडे २ वहुत पाप करेहैं परंतु सो सभी तुमारे दर्शनसें नष्ट
हो गए हैं ॥ १३ ॥

अहंवैपापधीर्नित्यंमहापापंसमाचरं कथंमेनि
ष्कृतिर्भूयात्कंयामिशरणंविभो ॥ १४ ॥ पूर्व
जन्मार्जितैःपापैर्लुब्धकत्वमवाप्तवान् अत्रा
पिपापजालानिकृत्वाकांगतिमाप्नुयाम् ॥ १५
अहोममायुः क्षयमेतिशश्वत्पापानियानिसमु
पार्जितानि प्रतिक्रियानैवकृताकदाचिद्गतिश्च
कास्यान्ममजन्मकिंवा १६ अहोविधिःपापरेते
कुलेमांकिंसृष्टवान्दाररतं तुमह्यांकथंनतत्पाप
फलंचभोक्ष्ये कियत्सुजन्मस्वहमुग्रकर्मा १७

निश्चय कर पाप वुद्धिवाला नित्यं प्रति वडे पाप कर्ता भया हे विभो कैसें मेरी पापों सें मुक्ति होवेगी और किसकी शरण कों प्राप्त होआं ॥ १४ ॥ पिछले जन्मके इकठे करे होए पापों करकें लुब्धक जन्म को प्राप्त होता भया अब इहां भी पापोंकें समूह करे हैं आगे किस गतिकों प्राप्त हो आंगा ॥ १५ ॥ अहो क्या वडे आश्चर्य की वातहै आयुमेरी क्षयहोतीहै निरंतरमैनें सर्वदाकाल पापहीइकठेकरेहैं पर उनकीप्रतिक्रिया क्याहटाने का कुछ उपाय नहिकरा नजानेमेरीक्या गति होनीहै और क्या जन्म होनाहै ॥ १६ ॥ वडेखेदकी वातहै ब्रह्माजो है सोमेरेकों पापी कुलमे क्यों उत्पन्न कर्ता भया और सो दाररत मैं उग्रकर्म करने वाला कितने जन्मों मैं उन पापोंकाफल भोगांगा १७ ॥

एवंविनिंदन्नात्मानमात्मनालुब्धकस्तदा संत
तापाग्निसंतप्तः सद्यःपंचत्वमागतः ॥ १८ ॥
उत्तंकः पतितंप्रेक्ष्यलुब्धकंतदयापरः ॥ विष्णु
पादोदकेनैवमभ्यषिंचन्महामतिः ॥ १९ ॥ ह
रिपादोदकस्पर्शाल्लुब्धकोवीतकल्मषः दिव्यं
विमानमारुह्यमुनिमेतदथाब्रवीत् ॥ २० कलि
कउवाच उत्तंकमुनिशार्दूलगुरुस्त्वंममसुव्रत
विमुक्तस्त्वत्प्रसादेनमहापातकसंकटात् ॥ २१
ज्ञानंतउपदेशान्मेसंजातंमुनिसत्तम तेनमेपा
पजालानिविनष्टान्यतिवेगतः ॥ २२ ॥

इसप्रकार तिस समय लोभीपुरुष अपने करके आत्माकी निं
दा कर्ताहुया अंदरके संतापकी अग्निकर तपया हुया शीघ्र पं
चत्व भावकों प्राप्त होगया अर्थात् मृत होगया ॥ १८ ॥ तद
नंतर होकर डिगेहोए लुब्धककों देखकर दया युक्त होएआ हु
या सो महामति उत्तंग तिसकों विष्णु के चरणामृत करकें सिं
चन कर्ता भया ॥ १९ ॥ तो हरिके चरणोदक स्पर्श होनेसें
दूर होगएहें पाप जिसके ऐसा लुब्धक दिव्य विमानके ऊपर
वैठके मुनिकों एह वाक्य कहता भया ॥ २० ॥ कलिक कह
ने लगा हे उत्तंक हे मुनियोंमें श्रेष्ठ तूंमेरा गुरुहैं हेश्रेष्ठ व्रत वा
ले तेरी कृपासें महापापोंके कष्टसें मुक्त होगयाहां ॥ २१ ॥
और हे मुनिसत्तम तेरे उपदेशसें मेरेकों ज्ञानउत्पन्न होएआहे
तिस करकें मेरे पापोंके समह वडे वेगसें नष्ट होगएहैं ॥ २२ ॥

हरिपादोदकंयस्मान्मयित्वंसिक्तवान्मुने प्रा
पितोस्मित्वयातस्मात्तद्विष्णोः परमंपदम् २३
धन्योहंकृतकृत्योऽस्मिगुरुस्त्वंममसुव्रत तस्मा
न्नतोस्मित्वाविद्वन्यत्कृतंतत्क्षमस्वमे ॥ २४ ॥
सूतउवाच इत्युक्त्वादेवकुसुमैर्मुनिश्रेष्ठमवा
किरत् प्रदक्षिणत्रयंकृत्वानमस्कारंचका
रसः ॥ २५ ॥

हेमुने जिस कारणसें मेरेमैं हरिके चरणों का जल तुसी सिंच
न कर्तेभये तिस कारणसें ही हरिके परम पदकों प्राप्त कराहां
॥ २३ ॥ हे सुव्रत तैंने मेरेकों कृतकृत्य कराहै मेरा गुरुहैं हे
विद्वन् तिस कारणसें तुमारेकों नमस्कार कर्ताहां और जो कु
छ मैंने अछा वुरा कराहै सो मेरेकों क्षमा करो ॥ २४ ॥ सूत
जी कहते हैं हे ऋषियो सो लुब्धक कलिक स्वर्गके पुष्पों
कर्के मुनि श्रेष्टके ऊपर वर्षा कर्ता भया औंर तीन प्रदक्षिणा
कर्के फिर नमस्कार कर्ताभया ॥ २५ ॥

ततोविमानमारुह्यसर्वकामसमन्वितं अप्सरो
गणसंकीर्णंप्रपेदेहरिमंदिरम् ॥ २६ ॥ एत
दृष्ट्वाविस्मितोऽभूदुत्तंकस्तपसांनिधिः शि
रस्यंजलिमाधायह्यस्तौषीत्कमलापतिम् २७
तेनस्तुतोमहाविष्णुर्दत्तवान्वरमुत्तमम् ॥ वरे
णतेनोत्तंकोऽपिप्रपेदेपरमंपदम् ॥ २८ इति
हरिपादोदकमाहात्म्यवर्णनम्

तिस सें उपरंत सम्पूर्ण कामनां कर्के भरा हुया जो विमान ति
स पर वैठके अप्सरांगण गंधर्वों कर्के संयुक्त हरिके मंदिर मैं
प्राप्तहोजाता भया ॥ २६ ॥ तो इसतरौंका आश्चर्य देखके वि
स्मय युक्त होएआ हुया तपोंका निधि सो उत्तंक शिरमैं अं
जलि वांधकर क्या हाथ जोडकर कमला पति भगवान् जी
की स्तुति कर्ता भया ॥ २७ ॥ तद तिस कर्के स्तुत कर्के होए
महाविष्णु तिसकों श्रेष्टवर देतेभये जिसवरकर्के उत्तंक भी पर
म पदकों प्राप्तहोजाता भया ॥ २८ ॥ एह हरिचरणोदक
माहात्म्य वर्णन समाप्त भया

भक्तमालायांचरणोदकमाहात्म्यंसेतिहासमा
ह ॥ अथश्रीरंगभक्तेस्तुमाहात्म्यंकथयाम्यह
म् पुष्करात्पश्चिमेग्रामोधौसानाम्नेतिविश्रुतः
॥ १ ॥ तत्रश्रीरंगनामासीद्वैश्योजैनपथेस्थि
तः ॥ तस्यदासेमृतेयातोयमदूतःसएकदा ॥
२ ॥ वणिग्द्वारिसमागत्यदर्शयित्वात्मनोव
पुः उवाचवणिजंपापाद्यमदूतोभवंवणिक् ॥ ३
हरिभक्तिंविनासर्वेसदानरकभाजिनः इदानीं
पश्यप्रत्यक्षेयोऽसौवैश्यवृषोमहान् ॥ ४ ॥

अब भक्त मालामें चरणोदक का माहात्म्य इतिहासके सहित वर्णन करते हैं ॥ अब श्रीरंगकी भक्तिके माहात्म्य कों कहताहुं पुष्करतीर्थके पश्चिम पासें धौसा नामक एक ग्रामहै १ ॥ तिसमें श्रीरंगनाम करकें जैनोंके मत में स्थित वाणियां था तिसके दासके मृतहोगए होए एकदिन यमदूत ॥ २ ॥ वाणियेंके द्वारेमें आकरतिसकों अपनादेह दिखायके वाणिएं कों कहताभयाकि मैं वाणिआं पापसें यमदूत होताभया ३ हे वाणिआं हरिकी भक्तिविना सारेही सर्वदाकाल नरकोंकेभागी हैं हेवैश्य अब प्रत्यक्ष दृष्टांतदेखलै जौनसा एह वडा वैलहै ४

तस्यशृंगेगतश्चाहंस्वर्णकारमिमंपुनः॥ परदार
रतंदुष्टंहत्वानेष्येयमालयम् ॥ ५ इत्युक्तांत
र्दधेदूतस्तत्कालेतत्रसंस्थितं स्वर्णकारंसतुवृषः
शृंगाभ्यांनिजघानह ॥ ६ ॥ इतिदृष्ट्वामहाश्चर्यं
श्रीरंगः स्वमतंतदा त्यक्ताकस्यापिशिष्योऽभू
द्वैष्णवस्यातिभक्तितः ॥ ७ ॥ हरिपूजारतोनि
त्यंहरिनामपरायणः ददावन्नंचपानीयंक्षुत्पिपा
सातुरायसः ॥ ८ ॥ स्वर्णकारस्तुदूतेनहत्वा
नीतोयमालयं पुनरागत्यस्वग्रामेजातःप्रेतो
तिहिंसकः॥ ९

तिस वैलके शृंगमै प्राप्त होएआ हुय, मैं इस परस्त्री गमन क
रने वाले दुष्ट सुनेयारे कों मारके यम पुरीकों लेजावोंगा ५ ॥
ऐसें कह करकें दूत उहां छपगया उसीसमय तहां वैठेहोए सु
नेयारकों सोवैल अपने शृंगां करकें मारदेताभया ॥ ६ ॥ इस
महाश्चर्यकों देखके श्रीरंग उसी समय अपने मतकों त्याग क
र किसी वैष्णव का शिष्य भक्ति पूर्वक होता भया ७ हरिकी
पूजा करनेमैं युक्त होगया और हरिके नाम जपने मैं तत्पर र
हने लगा औरभूखेंप्यासेयांकों अन्नपाणि देनेलगा और अनेक
तरोंके श्रेष्टकर्म करने लगा ॥८ और सो जो स्वर्णकार धर्मरा
जा की पुरीमैं प्राप्त करा उहां पापफल भोगने के वास्ते
अपने ही नगरमैं आके वडीहिंसाकरनें वाला प्रेत हुया ॥९ ॥

वहून्संतापयामासहरिभक्तिविवर्जितान् एक
दास्वर्णकारःसः प्रेतः स्वतनयंरुषा १० दर्श
यामासचात्मानंततोभीतस्ततत्सुतः नकिंचि
न्मन्यतेसाधुःस्मरंस्तंप्रेतमुल्कचम् ॥ ११ प्रत्य
हंचिंतयामासराजन्शुष्कोवभूवसः एकदानि
शितंपुत्रंहंतुंसपुनरागतः ॥ १२ ॥ ततउत्था
यतत्पत्नीप्रार्थयंतीसमागता किमर्थंहंसिभोपु
त्रंवदाभीष्टंकरोमितत् ॥ १३ ॥

तो क्या करने लगा जौनसें हरिकीभक्तिसें रहित हैं ति
नकों वडा संताप दुःख क्लेश देता भया एक दिन सो
इस्वर्णकार क्रोध कर्कें अपने पुत्रकों अपना प्रेतका
रूप दिखावता भया तिससें सो पुत्र भयभीत होगया
॥ १० ॥ तद तिस उल्कच प्रेत कों स्मरण कर्ता हुयाम
नमैं कुछ तिसकों अछा नहि लगता भयातो प्रतिदिन चिंता
कर्ता हुया सो सूक गया चेष्टा दूरहो गई एक दिन ओह
प्रेत पुत्रको मारने वास्ते रातकों आया ११ ॥ तो पुत्र उसका
भयसें करलाया उसका शब्द सुन उसकी माता उस प्रेतकी
स्त्री प्रार्थना कर्ती होई चली आई तिसकों कहनें लगी किस
वास्ते पुत्रकोंमारताहैं जो तेरीइच्छाहै सो कहो मैं करूंगी। १२

इतिश्रुत्वावचस्तस्याः पत्न्याः संपश्यतोहरः
प्रेतःप्रोवाचयेनस्यात्सद्गतिस्तत्कुरुष्वभोः १४
इतिश्रुत्वातुसाप्राहकथंतेसद्गतिर्भवेत् तदाहप्रे
तोहंत्वस्यशरीरेप्राविशाम्यथ १५ त्वंतुश्रीरंग
पूजायाभगवच्चरणामृतं आनीयदेहिमेशीघ्रंत
दास्वर्गंव्रजाम्यहम् १६ इत्युक्तासाकरोत्सर्वं
तदासप्रेतबंधनात् मुक्तोवभूवतत्पुत्रः स्वस्थो
जातस्तदैवहि १७

इह वाक्य पत्नीका श्रवण कर पश्यतो हर जो स्वर्णकार प्रेत कहनेलगा जिसकर्के मेरी सद्गति होवे ऐसाकर १४ इहवचन प्रेतकासुनकर सो कहनेलगी किसतरां तेरी सद्गति होवेगी सो कथनकर तदप्रेत कहनेलगा मैं तो इसवालकके देहमै प्रवेश कर्ता हुं १५ तूं श्रीरंगकी पूजासें भगवान्‌जीकाचरणामृत ल्या कर मेरेकोंदे तदशीघ्र स्वर्गकों चलाजाताहुं १६ इस प्रकारक थनकरी होई उसीतरांसें सभी कुछ कर्ती भई तद सो प्रेतयोनी केबंधनसें मुक्त होताभया और पुत्र उसका उसी कालमें राजी प्रसन्न होजाता भया १७

एवंश्रीरंगभक्तेश्चमाहात्म्यंकथितंमया यः
शृणोतिनरोभक्तयालभतेभक्तिमुत्तमाम् १८
इतिशालग्रामशिलोदकमाहात्म्येश्रीरं
गचरितंसमाप्तम् ॥

इस प्रकार श्रीरंगकी भक्तिका माहात्म्य मैंने कथन कराहै जो इस कथाकों भक्ति कर्के सुनताहै सोभी उत्तमभक्तिकों लभताहै १८ इति श्रीभक्तिमाहात्म्ये भगवच्चरणामृतमहिमवर्णनम् ॥

अथकेशवार्चनेपुष्पमाहात्म्यं तत्रहारीतः तुल
स्यौपंकजेजात्यौकेतक्यौकरवीरकौ शस्तानि
दशपुष्पाणितथारक्तोत्पलानिच १ स्कांदे ॥अ
पराधसहस्राणिह्यपराधशतानिच कमलैकेनदे
वेशयोर्चयेत्कमलापतिम् २ वर्षायुतसहस्रस्य
पापस्यकुरुतेक्षयं पत्रैणैकेनकेतक्याःपूजितोग
रुडध्वजःसहस्रमब्दंसंप्रीतोभवेच्चमधुसूदनः३
सुवर्णकेतकीपुष्पंयोददातिजनार्दने कोटिज
न्मार्जितंपापंदह्यतेगरुडध्वजः ॥ ४ ॥

अब विष्णुकी पूजामें पुष्पचढानेका माहात्म्य लिखतेहैं तिसमें हारीतका वाक्यहै विल्वपत्री तुलसी पंकज कमल मालतीचंवेली केतकी करीर एह दशतरहके पुष्पश्रेष्टहैं और लालरंगके कमलभी श्रेष्टहैं १ स्कंद पुराणमें कहाहै अपराधोंके हजारां और अपराधोंके सैंकडे दूर होतेहैं उसके जो देवतयोंके स्वामी कमला पतिका एक कमलके साथ पूजन कर्ताहै २ और केतकीके एक पत्र कर्के पूजा करेहोंए गरुडध्वजजी दशहजार वर्षके पापोंका क्षय कर्तेहैं ३ और हजार वर्ष प्रसन्न रहतेहैं और सोनेका केतकी पत्र वनाके जो जनार्दनजीकों चढाताहै तिसके क्रोडजन्मके पाप गरुडध्वजजी नष्ट कर्तेहैं ॥ ४ ॥

पुनस्तत्रैव ॥ येर्चयंतिजगन्नाथंकरवीरैःसिता
सितैःचतुर्युगाणिदेवेंद्रःप्रीतोभवतिकेशवः५पा
द्मे मंजरींसहकारस्यकेशवोपरिनारदयेर्पयंति
महाभागागोकोटिफलभागिनः ६ कदंवपुष्प
गंधेनकेशवार्चासुवासिताकोटिजन्मार्जितंपापं
निर्हंतिनिश्चितंमुने ७ पद्मान्यंवुसमुत्थानिर
क्तनालोत्पलेतथा सितोत्पलंचकृष्णस्यदयिता
निसदानृप ॥ ८ ॥

फिर और उसीमैं लिखाहै ॥ जो पुरुष श्वेतरंगके जांश्याम रंगके करीरपुष्पों कर्के जगन्नाथजीकों पूजतेहैं तिनके ऊपरकेश वजी चार युग प्रसन्न रहतेहैं ५ पद्मपुराणमे लिखाहै ॥ हेनारद आम्र वृक्षके पुष्पोंकी मंजरी जौनसें वडेभगवान् केशवजीके ऊपर चढातेहैं सो क्रोडगौयांदान करनेके फलभागी होतेहैं ६ और कदंवके पुष्पोंकी सुगंधि कर्के भगवान्की प्रतिमा सुगंधि वाली करीहै हे मुने तिनके कोटि जन्मोंमैं इकठे करे होए पापोंकों भगवान् दूरकर्तेहैं ७ और जलमैं उत्पन्न होएहोए जो कमल और लाल पत्रों वाले कमल नीले कमल और श्वेत कमल सर्वदा काल कृष्णजीकों प्यारेहैं ॥ ८ ॥

योऽर्चयेत्केतकीपुष्पैः कृष्णंकलिमलापहं पुष्पे
पुष्पेऽश्वमेधस्यफलमिच्छातिभूमिप ॥९॥ स्व
यमाहृत्यपुष्पाणिभिक्षाशीकेशवार्चने यःकरो
तिसराजेंद्रवंशानामुद्धरेच्छतम् ॥१०॥ वृहन्ना
रदीये॥ मनोहरैश्चगंधैश्चपुष्पैश्चापिमनोहरैः
अभ्यर्च्यविष्णुमीशंवा तत्तत्सारूप्यतांव्रजेत्
॥ ११ ॥ पद्मपुराणे पद्मपुष्पेणयोविष्णुंशिवंवा
र्चतिमानवः सयातिविष्णुभवनंकुलत्रयसम
न्वितः ॥ १२ ॥

जो पुरुष कलियुग की मलकों दूर करनेवाले भगवान् जी का केतकीके पुष्पोंकर्कै पूजन करेगा हे भूमिप सो एक २ पुष्पमैं अश्वमेधके फलकी इच्छाकर्ताहै ॥९ ॥ औरजो भिक्षामांगने वाला आप पुष्पोंकों उत्तारकर केशवजीकी पूजा करताहै सो हेराजेंद्र वंशोंके सौकों उद्धारकर्ताहै ॥१०॥ वृहन्नारदीय मैं लिखाहै मनकों हरने वाली सुगंधि कर्कै और मनकों हरनें वाले पुष्पोंकर्कै विष्णुजी अथवा शिवजी कों पूजन कर्कै उनकी २ सारूप्यताकों प्राप्तहोवेगा ॥ ११ ॥ पद्मपुराणमैं लिखा है ॥ पद्मके पुष्प कर्कै जो विष्णुकों पूजताहै औरशिवजीकों सो तीनकुलोंके सहित विष्णुलोक वैकुंठमैं जाताहै ॥ १२ ॥

हरिंचकेतकीपुष्पैःशिवंधत्तूरकैस्तथा सर्वपाप विनिर्मुक्तोवसेद्विष्णुपुरेयुगम् ॥१३॥ हरिंचच म्पकैः पुष्पैरर्कपुष्पैश्चशंकरं समभ्यर्च्यमहा भागतत्तत्सालोकतांव्रजेत्॥ १४ ॥ जातीपुष्पैः शिवंपूज्यवंधूककुसमैर्हरिम् सर्वपापविनिर्मु क्तोमेरुमूर्न्धियुगंवसेत् ॥ १५ ॥ मालतीकुसमै र्विष्णुंरुद्रंपुष्पैर्मनोहरैः शमीपुष्पैश्चराजेंद्रस र्वान्कामानवाप्नुयात् ॥ १६ ॥

और केतकीके पुष्पोंकर्के जो हरिकों पूजतेहै और धतूरेके पुष्पों कर्के शिवजी को पूजतेहै सोसम्पूर्ण पापोंसें मुक्त होए हुए एक युग पर्यंत विष्णु लोकमें वसतेहैं ॥ १३ ॥ हरि विष्णुजी कों चंवे के पुष्पों कर्के और शंकर महादेव जीकों अर्कके पुष्पोंकर्के पूजनकर वडे भाग्य युक्त पुरुष उनकी सारूप्यताकों प्राप्त होताहै ॥ १४ ॥ चंवेलीके पुष्पों कर्के शिवजीकी पूजा कर वंधूक दुडुंज वा गुलदुपहरके पुष्पों कर्के हरिकी पूजाकर संम्पूर्ण पापोंसें निर्मुक्त होएआ हुया एक युग पर्यंत मेरुकें मस्तक पर निवास करेगा ॥ १५ ॥ और मालती कें पुष्पोंकर्के विष्णुकी पूजा कर मनकों हरने वाले पुष्पों कर्के रुद्रजी का पूजन कर अथवा शमी जंडीकें पुष्पों कर्के पूजा कर सम्पूर्ण कामना कों प्राप्त होवेगा ॥ १६ ॥

पाद्मेकार्तिकमाहात्म्ये पद्मैःपद्मालयाभर्त्ताह्यर्चितः पुंडरीकदृक् ददातिवैष्णवसुतान्भक्तिमव्यभिचारिणीं १७स्कांदे अपर्युषितनिश्छिद्रैः पुष्पैर्जंतुविवर्जितैःहयमारोद्भवैर्नित्यंपूजयेन्मधुसूदनं १८ मल्लिकाकुसुमंजातीकुसुमंचविशिष्यते जातीपुष्पसहस्रस्ययोमालांसंप्रयच्छति वैष्णवोपिभवेद्भक्तथातस्यपुण्यफलंशृणु १९ कल्पकोटिसहस्राणि कल्पकोटिशतानिच वसेद्विष्णुपुरेविप्रकृष्णतुल्यपराक्रमः ॥ २० ॥

पद्मपुराणके कार्तिक माहात्म्य मैं कहाहै और कमलके पुष्पों करकैं लक्ष्मीका स्वामी कमलोंकी दृष्टि वाला पूजन कराहुया वैष्णव भक्ति कर युक्त पुत्र देताहै और अनिश्चल भक्ति देताहै ॥ १७ ॥ स्कंदपुराणमैं लिखाहै पूर्व दिनके वासे पुष्प नहो वें और छिद्र नहि तिनमैं होवें और कीट छोटे जीवना होवें ऐसे हयमार गंडीरेके पुष्पों करकैं मधुसूदन जीकों पूजनकरे ॥ १८ ॥ और सभनों पुष्पोंमैं मालती और चमेलीइनके पुष्प वडे श्रेष्टहैं जो पुरुष चंवेली के हजार पुष्पोंकीं माला विष्णुजीकों चढावताहै तिसके पुण्य का फल मेरेसें सुन ॥ १९॥ क्या जो ऐसी माला चढावताहै सो कल्पोंके हजारों सैकडे कोडों वर्ष विष्णुके तुल्यपराक्रम वाला वैकुंठमैं निवास कर्ताहै ॥ २०॥

वर्णानांतुयथाविप्रस्तीर्थानांजाह्नवीयथा सुरा
णांतुयथाविष्णुः पुष्पाणांमालतीतथा ॥ २१ ॥
मालत्यादिवनेष्वेवंयोर्चयेद्गरुडध्वजं जन्मदुः
खजरारोगैर्मुक्तोमुक्तिमवाप्नुयात् २२॥ केतक्यु
द्भूतकुसुमैःपूजयेद्गरुडध्वजं समासहस्रंसुप्री
तोजायतेमधुसूदनः॥ २३ ॥ मल्लिकाकुसुमैर्दे
वंवसंतेगरुडध्वजं योर्चयेत्परयाभक्त्यासया
तिपरमांगतिम् ॥ २४ ॥

चारवर्णोंमें श्रेष्ठ जैसें ब्राह्मणहै और तीर्थोंमें गंगाजी जैसें श्रेष्ठ है और देवतोंमें विष्णुजी जैसें श्रेष्ठहैं इसीतरांसें पुष्पोंमें मालती श्रेष्ठहै ॥ २१ ॥ जोकोई पुरुष मालतीसें आद लेकर फूलोंकी बाडियोंमें गरुडध्वज भगवान् जीका पूजन कर्ताहै सो जन्मदुःख वृद्धावस्था व्याधियां रोग इनोंकर मुक्त होएआहुया मुक्तिकों प्राप्त होताहै ॥ २२॥ केतकीके उत्पन्न होएहुए पुष्पों करके जो गरुडध्वज जीकों पूजताहै तिसपर मधुसूदन भगवान् जी हजारवर्ष प्रसन्न रहते हैं ॥ २३ ॥ और पुरुषवसंत ऋतुमें गरुडध्वज भगवानूजी कों मालतीके पुष्पों कर पूजताहै परम भक्तिके साथ सो परम गति कों प्राप्त होताहै ॥ २४ ॥

सुगंधैर्मल्लिकापुष्पैरर्चयित्वानरोत्तमम् सर्व
पापविनिर्मुक्तोविष्णुलोकेमहीयते ॥ २५ ॥ यः
पुनः पावनैः पुष्पैर्वसंतेगरुडध्वजं अर्चयेत्पर
याभक्त्यासयातिपरमंपदम् ॥ २६ ॥ योवि
ष्णुंचवलापुष्पैःपूजयेत्पापनाशनं सपूतः
परमंस्थानं वैष्णवंव्रजतेध्रुवम् ॥ २७ ॥ अ
गस्त्यकुसुमैर्देवंयेर्चयतिजनार्दनं एतेषांदर्शना
देवनरकाग्निःप्रशाम्यति ॥ २८ ॥ नतत्करो
तिविप्रेंद्रतपसातोषितोहरिः यत्करोतिहृषीके
शोमुनिपुष्पैरलंकृतः ॥ २९ ॥ ??

और सुगंधिवाले मालतीके पुष्पोंकर्के नरोत्तमजी कों पूजनक
के सारेपापोसें रहित होएआ हुया विष्णुलोक मैं महिमा कों प्रा
प्त होता है ॥ २५ ॥ और जोकाई वसंतऋतु मै पवित्र पुष्पों
के साथ परम भक्ति कर्के पूजन कर्ताहैं सो परमपदकों प्राप्तहो
ताहै ॥ २६ ॥ और जोकोई पुरुष पापोंके नाशकरने वाले वि
ष्णुकों वलाके पुष्पों कर्के पूजनकर्ताहे सोपवित्रहुया २ परम
श्रेष्ट जो वैष्णव स्थान तिनकों प्राप्त होताहै निश्चय कर्के ॥२७॥
अगस्त्यके पुष्पों कर्के जो जनार्दन भगवान्‌जीका पूजन कर्ता
है तिसके दर्शन मात्र सें नरकोंकी अग्नि शमन होतीहै ॥ २८ ॥
हेविप्रेंद्र तपकर्के प्रसन्न करे होए हरिनारायण ऐसा कामनहिं
कर्ते हैंन क्या ऐसाफल नाहि देते हैंन जोफल मुनि अगस्त्य के
पुष्पों कर्के पूजाकरे होए फल सिद्ध कर्ते हैंन ॥ २९ ॥ !

मुनिपुष्पार्चनंविष्णोः कार्तिकेपुरुषोत्तम ददा
त्यभीप्सितंकामंशशिसूर्यग्रहोयथा॥३०॥ब
कुलाशोककुसुमैर्येर्चयंतिजगत्पतिं अशोका
स्तेभवंतीहयावत्सोमदिवाकरौ॥३१॥गंधा
ढ्यैर्विविधैर्वन्यैःकुसुमैःश्वेतकोमलैः शक्त्याभ्य
र्च्यहृषीकेशंश्वेतद्वीपेवसेन्नरः ॥३२॥ शुभ्रा
शुभ्रैर्महागंधैःकुसुमैःपंकजैस्तथा अधोक्षजं
समभ्यर्च्यनरोयातिहरेःपदम्॥३३॥

हेपुरुषोत्तम कार्तिक महीने मैं जोकोई पुरुष आगस्त्य पुष्पों
करकें विष्णुका पूजन कर्तेहैं तिनकों वांछित कामना देतेहै जै
सें सूर्य चंद्रमाका ग्रहण देताहै॥३०॥ बकुल अशोकके पु
ष्पों करकें जो जगत्स्वामी का पूजन कर्तेहैं सो इसलोकमैं अ
शोक होतेहैं जितना काल सूर्य चंद्रमा है॥३१॥ और गं
ध करकें युक्त अनेक तरोंके वनके श्वेत कोमल पुष्प करकें यथा
शक्ति हृषीकेशका पूजन कर पुरुष श्वेतद्वीपमैं निवास कर्ताहै
॥३२॥ और श्वेतरंग केवा और किसी रंगके बहुत सुगं
धिवाले पुष्पों करकें अथवा कमलों करकें अधोक्षज भगवान्
जीका पूजनकर पुरुष हरिके पदकों जाताहै ॥३३॥

अभ्यर्च्यकुंदपुष्पैश्चकेशवंकल्मषापहं प्रयाति
भुवनंविष्णोः सिद्धचारणसेवितम् ॥ ३४ अ
शोककुसुमैरम्यैर्जनशोकभयापहं पूजयित्वा
हरिंविष्णोः पदंयातिसनातनम् ३५ तिलक
स्योज्ज्वलैरम्यैःपुष्पैःसंपूज्यकेशवं धूतपापो
निरातंकः कृष्णस्यानुचरोभवेत् ॥ ३६ ॥
मंजरींसहकारस्यकेशवोपरिनारद प्रयच्छति
नरःसत्रकोटिपुण्यफलंलभेत् ॥ ३७ ॥ पुष्पेषु
सुमहत्पुण्यंकोमलेषुचनारद ॥ तुलसीदलसं
श्लिष्टंपवित्रंकेशवार्चने ॥ ३८ ॥

और कुंदके पुष्पों करके पापोंके नाश करने वाले केशवजी
कों पूजन कर सिद्धचारणों करके युक्त जो लोकहै विष्णुभवन
तिसकों जाताहै ॥ ३४ ॥ और लोकों के शोक मोहभय इनके
दूर करने वाले देवता हरिकों रमणीक अशोक पुष्पों करकेंपू
जनकर सनातन विष्णुके लोकमैं जाताहै ॥ ३५ ॥ केशवजी
कों रमणीक तिलक वृक्ष के उज्वल पुष्पों करके पूजन कर धू
तपाप क्याहैं धोते गए पाप जिसके ऐसा दुःखोंसे रहित हो
एआ हुया श्रीकृष्ण जीका अनुचर होताहै ॥३६ ॥ हेनारद आ
म्र वृक्षकी मंजरी जोकोई केशव जीके ऊपर चढाताहै सोक्रो
ड यज्ञकरनेंके पुण्यका जो फल तिसकों लभताहै ॥ ३७ ॥ हे
नारद नारायणजीकें ऊपर कोमल पुष्प चढानेका तों वहुतही
पुण्यहै परंतु तुलसी दलके साथ मिला हुया केशवजीकी पू
जामैं वडा पवित्रहै ॥ ३८ ॥

अगस्त्यकुसुमैर्देवंयर्चयंतिजनार्दनं तेषांतद्दर्शं
नादेवनरकाग्निःप्रशाम्यति ३९ ॥ नतत्करोति
विप्रेंद्रतपसातोषितोहरिः यत्करोतिहृषीकेशो
मुनिपुष्पैरलंकृतः ४० ॥ विहायसर्वपुष्पाणिमु
निपुष्पेणकेशवं कार्तिकेयोर्चयेद्भक्त्यावाजिपे
यफलंलभेत् ४१ ॥ मुनिपुष्पकृतांमालांयःप्र
यच्छतिकेशवे देवादयोपिभक्तिंचकुर्वंतेतस्यशं
कया ४२ ॥

जोपुरुष देवता जनार्दन जीकों अगस्त्यमुनिकेपुष्पों करकेपूजन
कर्तेहैं तिनके दर्शनमेसें सोजोपाप रूप नरकाग्निहै सोशमनहो
तीहै ॥ ३९ ॥ हेविप्रेंद्रतपकर्के प्रसन्न करेहोए हरिसो फलनहि
देतेहैं क्या देतेहैंजो फल अगस्त पुष्पोंके साथ अलंकृत क्या
शृंगार करे होए देतेहैं ४० सारेतरांके पुष्प त्यागकर कार्तिकम
हीनेमैं मुनिअगस्त पुष्पोंकेसाथजो पूजनकर्ताहै केशवभगवान्
जीका सो वाजिमेध यज्ञके फलकों लभताहै ॥ ४१ ॥ औरजो
कोई पुरुष मुनि अगस्त पुष्पोंकी बनीहोईमाला केशवजी कों
देताहै तिसकेभयकी शंका कर्के देवता लोकउसकी भक्तिकर्ते
है ॥ ४२ ॥

सनत्कुमारसंहितायां मालतीकुसुमैःरम्यै किंचिच्छ्वेतैर्मनोहरैः समभ्यर्च्यहृषीकेशंजन्मदुःखाद्विमुच्यते ॥ ४३ ॥ कदंबकुसुमैर्देवमर्चयेन्मधुसूदनं दृष्ट्वाकदंवपुष्पाणिप्रीतोभवतिमाधवः ॥ ४४ ॥ सकृत्कदंवपुष्पेणपूजयेद्धेलयाहरिं सप्तजन्मानिदेवर्षेतस्यलक्ष्मीर्नदुर्लभा ४५ कदंवपुष्पगंधेनकेशवोयेनतोषितः जन्मायुतार्जितंपापंदहतेनात्रसंशयः ॥ ४६ ॥

सनत्कुमार संहिता मैं लिखाहै ॥मनकों हरन वाले किंचित्श्वेत रमणीक मालतीके पुष्पों करकें हृषीकेश जीकों पूजन करकें जन्म मरणके दुःखसें मुक्त होताहै ॥ ४३ ॥ जो पुरुष कदंवके पुष्पों करकें देवता मधुसूदन जीकी पूजा करता है तिसके कदंव पुष्प देखके माधवजी प्रसन्न होतेहैं ॥ ४४ ॥ जो कोई पुरुष एकभी कदंवके पुष्प करकें हेलाके साथ क्या लीलाके साथ पूजनकर्ताहै हेदेवर्षे सात जन्म तिसकों लक्ष्मी दुर्लभ नहिहै ॥ ४५ ॥ और कदंव पुष्पकी गंधि करकें जिसने नारायण प्रसन्न करेहैं सो दसहजार जन्मोंके इकट्ठेकरे पापों कों दग्ध कर्ताहै इसमैं संशय नहिंहै ॥ ४६ ॥

वर्षाकालेतुदेवेशंकदंवकुसुमैर्हरिं येर्चयंतिनते
षांचसंसारेपुनरागमः॥ ४७ पद्मपुराणेक्रिया
योगसारे ॥ सदाचंपकपुष्पेणयोर्चयेत्कमलाप
तिं सगच्छेत्परमंधाममविमुक्तःसर्वपातकैः॥ ४८
यावंतिस्वर्णपुष्पाणिदीयंतेचक्रपाणिनः ताव
द्युगसहस्राणिस्थीयंतेविष्णुमंदिरे ॥४९ ॥ मे
रुतुल्यसुवर्णानिदत्वाभवतियत्फलं एकेनस्वर्ण
पुष्पेणहरिंसंपूज्यतत्फलम् ॥ ५० ॥

जो कोई वर्षा ऋतुमैं कदंवके पुष्पों कर्के देवेश हरिका पूज न कर्तेहैं तिनका संसारमैं फिर आगम नाहिं होताहै क्या. जन्म नाहिं होताहै ॥ ४७ ॥ पद्म पुराणके क्रियायोगसार मैं लिखा है जो पुरुष सर्वदा काल चंवेके पुष्पों कर्के कमलापतिकों पूजतेहैं सो सारे पापोंसें मुक्त होएआ हुआ परम धामकों जाताहै ॥ ४८ ॥ जितने स्वर्णके पुष्प चक्रपाणि भगवान् जीके ऊपर दान करीदेहैं उतने हजार युग विष्णुके मंदिर मैं स्थित होतेहै ॥ ४९ ॥ सुमेरु पर्वतके तुल्य सुवर्णका दान कर्के जो फल होताहै सो फल एक सुवर्णके पुष्प साथ हरि का पूजन कर्के होताहै ॥ ५० ॥

फलंचंपकपुष्पस्यब्रवीम्यहमशेषतः आकर्णा
यद्विजश्रेष्ठसेतिहासमनुत्तमम् ५१ सुवर्णोना
मभूपालोवलवान्सर्वशास्त्रवित् आर्यावर्तेषुस
र्वेषुवभूवप्रभुरुत्तमः॥५२ राज्यश्रियाविद्यया
चतपसाचसभूपतिः अतिप्रमत्तोविप्रर्षेसदापा
परतोऽभवत् ॥ ५३ पाषंडमंत्रिणांवाक्यैर्विना
दोषैरपिद्विज धनलोभात्तिनराज्ञादंडयंतवहवो
जनाः ॥ ५४ ॥

चंबेके पुष्पचढानेका माहात्म्य संपूर्णतासें कहताहुं हेद्विजश्रेष्ठ
तिसमैं एक बडा उत्तम इतिहास श्रवणकर ॥ ५१ ॥ सुवर्ण
नाम कर्के एकसारे शास्त्रों के जानन वाला वलवान् परा
क्रमी राजा सारेआर्यावर्त देशमैं उत्तम होताभया ॥ ५२ ॥
सोराजा राज्यलक्ष्मीकर्कें विद्या कर्के तपकर्कें हेविप्रर्षे वडाम
स्तहोएआ हुया सर्वदा काल पाप कर्ममैं रत होताभया ॥५३
हेद्विज सो पाषंडिजो मंत्रिये तिनकी शिक्षा कर्कें औरधनकेलो
भतें अपराधके विनाही वहुतलोक दंड युक्त करीदे होए ५४

अन्यायोपार्जितंवित्तंगीतवाद्यादिभिर्नृपः सम
स्तंनाशयामासयज्ञदानविवर्जितः ५५ नज्ञा
तिपालनंचक्रेनदेवद्विजपूजनं नचपावकसंतु
ष्टिंराजापापविमोहितः ॥ ५६ ॥ नचकारातिं
थेःपूजांजहारगुरुयोषितां पपौचमदिरांनित्यं
सभूपः पापमोहितः ॥ ५७ ॥ कृतानितेनपा
पानियानियान्यविवेकिना अपिवर्षशतैः श
क्ताः संख्यातुंतानितानिकः ॥ ५८ ॥

और अन्यायकर्या अनीतिकर्के इकट्ठाकियाहुया जो धन तिसकों गायन वाद्य नृत्यादिइनकर्के यज्ञदानादियेंसें विनासारे उसधनकों नष्टकर्ताभया ५५ नातो उहराजा जातिवालेयोंका पालन कर्ताभया औरना उसनेदेवता ब्राह्मण पूजनकरे और पापोंके साथ मोहित होएहुएने अग्निभी प्रसन्न नहिकरी क्या हवनादि नहिकरे ॥ ५६ ॥ और ना तिसनें अतिथियोंका पूजन करा और सुंदरगुरु अपने कीस्त्रीकों हरलेनाभया और सो भूपपाप कर मोहित होएआहुया नित्यंप्रति मदिराकें पान कर्ताभया ॥ ५७ ॥ हेद्विज बिनाविचार वाले तिसने जोनसें जिनने २ क पापकरेहैं निश्चयकर्के तिनकी संख्या करनें को सौबर्ष कर्के भी समर्थ नहिंहो सकताहै ॥ ५८ ॥

एकदासमहीपालःकामेनपरिमोहितः जगा
मवेश्यानिलयंनिशीथेभूरितारके ॥ ५९ ॥
तमायांततंतोदृष्ट्वाभूपालमुजूज्वलाह्वया स
हसोत्थायापर्यंकाच्चक्रेतत्पादवंदनम् ६० प्र
क्षाल्यतत्पादयुगंभृंगारसलिलैश्चसा मंचे
न्निवेशयामासदोर्भ्यामालिंग्यतंनृपं ॥ ६१ ॥
तत्प्रेमामृतधाराभिः सिक्तोऽसौपृथिवीपतिः
तस्मिन्सुष्वापपर्यंकेतयासहकुतूहली ॥ ६२ ॥

एकदिन सो महीपाल राजा कामदेव करमोहित होएआ हुया वहुत हैं तारे जिनमैं ऐसे अर्धरात्रकेसमय वेश्याके घरमैं चला जाता भया ॥ ५९ ॥ तिसआउते राजाकों देखकर तिससें उपरंत अपने पलंघ सें शीघ्र उठकर सो उजूज्वल वेश्या तिसके पादवंदना कर्ती भई ॥ ६० ॥ फिर इससें उपरंत गंगासागरके जलोंकर्कें दोनों पादकमल धोयकर वाहुयों के साथ आलिंगन कर तिसराजाकों मंचक्या पलंघके ऊपर विठायलेती भई ६१ तद तिसमय तिसके प्रेमरूपी अमृतकीधारांकर्कें सिंचितहोएआ हुयाकुतूहल वाला क्या वडी इच्छावाला तिसवेश्याके उसपलंघपर शयन कर्ता भया ६२

ततः सागणिकाप्रीत्याहसंतीनवयौवना ददौ
चंपकपुष्पाणांतस्मैभूमिभुजेस्त्रजम् ॥ ६३ ॥
पुष्पमाल्यात्पुष्पमेकं तस्मात्पततिहस्तगात्प
पातधरणीपृष्ठेगंधव्याप्तदिगंतरम् ॥ ६४ ॥
तच्च्युतंकुसुमंदृष्ट्वासराजात्यंतसंभ्रमात् न
मोनारायणायेतिजगादोंकारपूर्वकम् ॥ ६५ ॥
नारायणायेतिवाक्येनसर्वाणिपातकानिच स्व
र्णपुष्पप्रदानेनतस्यनष्टानिभूपतेः ॥ ६६ ॥

तिससें उपरंत नवीन युवावस्था वाली सो गणिका हास्य कर्ती २ वडी प्रीतिसें तिसराजाके तांई अतिसुंदर चंबेके पुष्पोंकी माला देती भई ॥ ६३ तद तिस राजाके हाथमें तें मालाका एकपुष्प सुगंधिकर युक्तजो उहांकी पृथिवी तिसपर डिगपडता भया ॥ ६४ सो राजा वडे संभ्रम सें तिससें डिगहोए पुष्पकों देखकर ओंनमोनाराणाय ऐसें उच्चारण कर्ता भया ॥ ६५ तद ओंनमोनारायणाय ऐसें वाक्यके कहने करकें और चंबेका पुष्प दान करने करकें तिस भूपालके सारे पापनष्ट हो गए ॥ ६६ ॥

ग्रामिणोऽप्यस्यसर्वेपि समागम्यातिदुर्नयं त
स्यामेवनिशायांतेजघ्नुर्वेश्यागृहेस्थितम् ॥ ६७
नेतुंतमथभूपालंसर्वपातकिनांवरं किंकरान्प्रे
षयामास क्रुद्धोवैवस्वतोद्भुतम् ॥ ६८ ॥ तेना
ज्ञप्तास्ततोदूताःपाशमुद्गरपाणयः अतिवेगा
त्समायाताः क्रोधसंरक्तलोचनाः ॥ ६९ ॥
तंवद्ध्वाचर्मपाशेनज्वलज्ज्वलनलोचनाः उद्य
मंचक्रिरेगंतुंयमदूतायमालयं ॥ ७० ॥

और उधरसें दुष्टनीति वाले दुखदाई राजाकों उसीके नगर वासी लोक वेश्याके घरमें आये होए राजाकों जानकर सारे ही इकठे होके वेश्याके घरमैं बैठे होए कोंही उसी रातमैं मार देतेभये ॥ ६७ ॥ तद पापियों मैं श्रेष्ट तिस भूपालकों ल्याउने के वास्ते क्रोधकों प्राप्तहोएआ हुया सूर्यका पुत्र धर्मराज वडेभय के करनेवाले दूतोंकों भेजता भया ॥ ६८ ॥ तिसनें आज्ञाकरे होए दूत तिससें उपरंत पाश मुद्गर हाथोंमैं लेकेक्रोधकर लाल नेत्र जिनके ऐसे सोवडे वेगसें आय प्राप्त भये ॥ ६९ ॥ तोअग्नि की न्याईं वलतेहैं नेत्र जिनके ऐसे चर्मकी फांसीके साथ वांधकर यमालय मैं जाने कों उद्यम करतेभये क्या तियार होते भये ॥ ७० ॥

ततोनारायणप्रेष्याः शंखचक्रगदाधराः आ
जग्मुर्गरुडारूढास्तंनेतुंपृथिवीपतिम् ॥ ७१
॥ पाशेनपाशितंदृष्ट्वातंनृपंविष्णुकिंकराः ज
घ्नुश्चक्रैर्गदाभिश्चयमदूतान्रुषापथि ॥ ७२ ॥
तंत्यक्त्वात्यंतसंत्रस्तायमदूताःप्रदुद्रुवुः वि
ष्णुदूतगदाचक्रप्रहारशतजर्जराः ॥ ७३ ॥
अथतंपृथिवीपालंविष्णुदूतामहावलाः पीत
कौशेयवासोभिः स्वर्णालंकारभूषिताः ॥ ७४

तिससें उपरंत विष्णु भगवान् जीकेदूत शंखचक्र गदा पद्म धारण करणे वाले गरुडके ऊपर चढेहोए तिस पृथिवीपतिके ले जानेकों ओहभी आयजाते भये ७१ उस समय विष्णुके किंकर फांसीके साथ वंधेहोए तिस राजाकों देखकर वडेक्रोधकर्के मार्ग के वीचही यमदूतोंकों चक्र गदा शस्त्रों कर्के मारते भये ॥ ७२ ॥ तों यमके दूत अत्यंत त्रास कर युक्त तिसकों त्याग कर विष्णु के दूतोंके गदाचक्र शस्त्रोंके प्रहारकर जर्जरीभूत क्या छिन्न भिन्न अंगों वाले दौड जाते भये ॥ ७३ ॥ इससें उपरंत महावली विष्णुके दूत पीले पट्टके वस्त्रोंवाले स्वर्णके अलंकार भूषणों करके युक्त तिस राजाकों लेजातेभये ॥ ७४ ॥

स्तूयमानोमुनिगणैर्वेदवेदांगपारगैः विष्णुदू
तैः परिवृतोहरेः सालोक्यमाययौ ॥ ७५ ॥
अथोत्थायस्वयंविष्णुश्चतुर्भिर्दीर्घवाहुभिः त
मालिंगितवान्भूपंप्रोक्तवांश्च द्विजोत्तम ७६ ॥
भगवानुवाच ॥ नृपतेकुशलंब्रूहिसर्वपुण्यवतां
वर किमस्त्यसाध्यंभवतातदाज्ञापयसांप्रतं
॥ ७७ ॥ ॐनमोनारायणायेतिवारैकमपियो
वदेत् नित्यंतस्यानुपाल्योहंसमेभ्रातासमेपि
ता ॥ ७८ ॥

तो उहां वेदवेदांग शास्त्रके पारकों जानण वाले मुनि लोकों केसमूह कर्के स्तुत करा हुया विष्णु दूतोंके साथ परिवारिया हुया विष्णुको सालोक्यमुक्ति क्याहै तुल्य रूपता तिसकों प्राप्तहोताभया ७५ इससें उपरंत जद उहां प्राप्तभया तद आप विष्णुजी वडीयें लंवीये चारों वाहोंके साथ तिस राजाकों आलिंगन कर्तेभये क्या गलेमैं मिलावते भये हे द्विजोत्तम और एह वाक्य कहते भये ७६ ॥ क्या भगवानूजी कहनेलगे हे सारे पुण्यवालेयोंमैं श्रेष्ट राजनू तेरेकों कुशलहै क्या राजी प्रसन्नहै ना और तेरेकों कोई कार्य असाध्यहै क्या नाहिं भी सिद्ध होने बालाहै सो मेरेकों आज्ञाकर ७७ ॐनमोनारायणाय ऐसें जो पुरुष एक वारभी कहे तिसका नित्यंप्रति पालक हां उौर सोमेरा भ्राताहै अरसोई मेरा पिताहै ॥ ७८ ॥

नारायणायेतिनाम कदाचिद्यः स्मरेन्नरः सा
धयाम्यखिलंतस्यपितुः पुत्रइवोत्तमः ७९ ॥
मद्भक्तोसिनृपश्रेष्ठतस्मान्निजमनोरथं प्रकाश
यद्रुतंभ्रातः किंनदास्यामितेधुना ॥ ८० ॥ रा
जोवाच सर्वमेवदयासिंधोत्वयादत्तंनसंशयः
पापिनापिमयाप्राप्तं तवस्थानंसुदुर्लभम् ८१
व्यासउवाच तस्यानेनतुवाक्येनप्रसन्नः कम
लापतिः स्नेहान्निवेशयामासभूपालंतंनिजा
सने ॥ ८२ ॥

ॐनमोनारायणाय एह नाम एक वारभी जो कदीं पुरुष स्म
रण करे तद तिसके सारे कार्य साधन कर्ताहुं जैसें पिताके का
र्य उत्तम पुत्र साधन कर्ताहै ॥ ७९ ॥ हेराजेयोंमैं श्रेष्ट तूंमेरा
भक्तहैं इस कारणसें अपने मनका मनोरथ क्या अभिप्राय शी
घ्र प्रगट कर हे भ्रातः सो तेरा कार्य क्या नहिं देवूंगा ना दे
वूंगा ८० भगवान जीके मुखसें इतना वचन सुनतेही राजा क
हन लगा हेदया के समुद्र सभी कुछतुमारा दिया हुयाहै इसमैं
कुछसंशय नाहिहै क्योंकी वडे पाप करने वाले मैने एह दुर्ल
भ स्थान प्राप्त होएआहै इसीमैं सभी कुछआयगया ८१ ॥
इतनी कथा सुनायकर फिर व्यासेदवजी वोले हेमुने तिसरा
जाकें इस वाक्य कर्के कमलापति भगवान् प्रसन्न होएके व
डे स्नेह प्रीतिसें तिस राजाकों अपने कमलासन पर विठाय
लेते भये ॥ ८२ ॥

ततः सुवर्णालंकारैर्विश्वकर्माविनिर्मितैः चकरा
डंबनंतस्यस्वयमेवदयापरः ॥ ८३ ॥ अथना
नाविधैर्भक्ष्यैर्देवानामपिदुर्लभैः तोषितःसम
हीपालोविष्णुनाशत्रुजिष्णुना ॥ ८४ ॥ एवं
प्रतिदिनंतस्थौसराजाविष्णुमंदिरे मन्वंतरस
हस्राणि द्वितीयइवकेशवः ॥८५ ॥ अथपुण्या
वसानेतुपुनरागत्यमेदिनीं जातिस्मरोमहा
भागः सार्वभौमोवभूवसः ॥ ८६ ॥

तिससें उपरंत विश्व कर्मा कर्के वनाए होए स्वर्णके रत्नोंकर जडित भूषणों कर तिस राजाका आप दयामैं तत्पर होए हुऐ भगवान्जी शृंगार कर्त्तेभये ८३ फिर देवता लोकों कों जो दुर्लभ अनेक प्रकारोंके भक्ष्य भोज्यहैंन तिनों कर्के शत्रुयोंकों जीतने वाले विष्णुनें सो राजा प्रसन्न करा ८४ इस प्रकारकेआदर सन्मानपूर्वक रोजकेराजामन्वंतरोंकेहजारां दूसरे केंशव जीकी न्याई ही विष्णुके मंदिर वैकुंठमैं स्थित होताभया ॥ ८५ ॥ इससें उपरंत उस पुण्य फलके अंतमैं फिर पृथिवी लोकमैं आयकर सो महाभाग पूर्व जन्म जिसकों स्मरण और सार्वभौम क्या चक्रवर्ती राजा होता भया ८६ ॥

नववर्षसहस्राणिनववर्षशतानिच प्रजानांपा
लनंचक्रेसराजाधर्मतत्परः ॥ ८७ पूजयामा
ससततंभक्त्यापरमयाहरिं चारुचंपकपुष्पैश्च
नैवेद्यैर्विविधैश्चसः ॥ ८८ ॥ आयुःशेषंसभूपा
लोमरणंजाह्नवीजले समासाद्ययौमोक्षंप्र
सादाच्चक्रपाणिनः ॥ ८९ ॥ व्यासउवाच ॥वि
प्रचंपकपुष्पस्यप्रभावोयंप्रकीर्तितः चंपकैर्ह
रिमभ्यर्च्यमुक्ताःस्युःपापिनोपिच ॥ ९० ॥

तो सो राजा धर्ममें तत्पर होए हुया नौहजारनौंसेवर्ष प्रजाका पालन कर्ताभया ८७ और परमभक्ति करके सर्वदाकाल हरिकों पूजता भया सुंदर चंबेके पुष्पों करके और अनेक तरोंके नैवेद्यों करके ८८ जद तिसकी आयुपूर्ण होजाती भई तद गंगा जीके किनारे जायकर मृत्युकों प्राप्त होकर चक्रपाणि भगवान् जीके प्रसाद कृपासें मोक्षकों प्राप्त होताभया ॥ ८९ ॥ इतनी कथा सुनाय कर फिर व्यासदेवजी कहने लगे हेंविप्रऋषे चंबेके पुष्प चढानेका प्रभाव कथन कराहै जिस चंबेके पुष्पों करके हरिका पूजन कर पापि पुरुषभी मुक्त होतेहैं ॥ १० ॥

स्फुटंचंपकपुष्पेणपूजितोभगवान्हरिः अचिरे

णैवविप्रर्षेददात्यभिमतंफलम् ९१ येयजंति

परात्मानमिच्छयावाप्यानेच्छया तेप्रयांतिपरं

धामविमुक्ताः सर्वपातकैः ॥९२॥ हरौप्रसन्ने

दुरितीनकोपिरुष्टेचतस्मिन्सुकृतीनकोपि यतः

सराजाकृतपातकोपिजगाममोक्षंकृपयामुरारेः

॥ ९३ ॥

प्रगट जे वातहै की चंवेके पुष्पों कर्के पूजा करे होए हरि हेवि
प्रर्षे थोडे कालकर्के ही अभिमत फल क्या वांछित फल देते
हैं ॥ ९१ ॥ जो पुरुष इच्छा कर्के वा विना इच्छासें परा
त्मा हरि कों पूजतेहैं सो सारे पापों कर्के मुक्त होए हुए परम
धामकों जातेहैं ॥ ९२॥ ऐसे ओह भगवान् हरि हैंन. जिनके प्र
सन्न होएदे पापी कोई नहिहै और जिनके क्रोधी होए हुए
पुण्यवान्कोई नहिहै देखो जिनकी कृपासे पापकरने वाला सो
राजामोक्षमार्गेकों प्राप्त होताभया ॥ ९३ ॥

विश्वार्णवंनिम्नमिमंतितीर्षुर्दिव्यैस्तुगंधैश्चंपकजैः प्रसूनैः नारायणंपद्मदलायताक्षंमर्त्योंययौविप्रविहायपापम्॥ १४ ॥ इतिश्रीपद्मपुराणेक्रियायोगसारेपुष्पार्पणमहिमवर्णनम्

ऐसे प्रभाव वाले तिनकों जान कर बडे डूंगे संसार समुद्र कों तरने की इच्छावाला दिव्य सुगंधिवाले चंबेके पुष्पों कर्के पुरुष पद्मपत्रकी न्यांई विशाल नेत्रों वाले भगवान जीका पूजन कर हे विप्र पापो कों त्यागके नारायणकी सालोक्यताकों प्राप्त होताहै १४ एह पद्मपुराण के क्रियायोगसारमैं भगवानूजीके ऊपर पुष्प चडानेका माहात्म्य वर्णन होचुका ॥

अथविष्णूपरितुलसीदलार्पणे माहात्म्यंव
र्ण्यते पाद्मेदेवदूतविकुंडलसंवादे ॥ आरोप्य
तुलसींवैश्यसंपूज्यत्तद्दलैर्हरिम्‌ वसंतिमोदमा
नास्तेयत्रदेवश्चतुर्भुजः ॥१॥ प्रथमतो तुलसी
वर्णनम्‌ जैमिनिंप्रतिव्यासवाक्यम्‌ इंद्राद्यैर्दै
वतैः सर्वैस्तुलसीभगवत्यसौ संसेव्यासर्वदा
विप्रचतुर्वर्गफलप्रदा ॥ २ ॥ स्वर्गेमर्त्येचपाता
लेतुलसीदुर्लभामता चतुर्वर्गफलप्रेप्सुस्तस्यां
भक्तिंकरोत्यसौ ॥ ३ ॥

अवविष्णु जीके ऊपर तुलसीदलचढानेकी महिमा वर्णनकर्ते
हैं ॥ पद्मपुराणमैं देवदूतविकुंडलके संवादकर्के॥हेवैश्य जोपु
रुष घरमैं तुलसी लगाकर तिसके दलोंकेसाथ हरिका पूजनक
र्कै प्रसन्न मन वाले तहां निवासकर्तेहैं जहां देवता चतुर्भुजजी
निवासकर्तेहैं ॥ १ ॥ प्रथम तुलसी के वर्णनमैं जैमिनिकेप्रति
व्यास देवजीकावाक्यहै ॥ हेविप्र सर्वदाकाल चार वर्गफलदे
नेवाली एहभगवती तुलसीसो इंद्रादिदेवतेयोंने सेवीदीहय
॥ २ कैसीतुलसीहै स्वर्ग मर्त्य पाताल इनोंतीनों लोकोंमैं वडी
दुर्लभहै औरजोकोई चार वर्ग धर्मअर्थ काम मोक्ष इनकीइ
च्छावाला इस तुलसीमैं भक्तिकरे ॥ ३

यत्रैकस्तुलसीवृक्षस्तिष्ठति द्विजसत्तम तत्रैव
त्रिदशाः सर्वेब्रह्मविष्णुमहेश्वराः ॥ ४ ॥ केश
वः पत्रमध्येचपत्राग्रेचप्रजापतिः पत्रांतेचाशि
वस्तिष्ठेत्तुलस्याः सर्वदैवहि ॥ ५ ॥ लक्ष्मीःस
रस्वतीचैवगायत्रीचंडिकातथा शचीचान्यादेव
पत्न्यस्तत्पत्रेषुवसंतिहि ॥ ६ ॥ इंद्राग्नीशम
नश्चैवनिर्ऋतिर्वरुणस्तथा पवनश्चकुवेरश्च
तच्छाखायांवसंत्यमी ॥ ७ ॥

हे द्विजसत्तम जहांमैं एकतुलसीका वृक्षलगा हुयाहै तहांमैंही ब्र ह्मा विष्णु शिव इत्यादि सभदेवता निवासकर्तेहैं ॥४॥ और कैसाहै एह तुलसीवृक्ष जिसके पत्रके मध्यमैं केशव विष्णुजी निवास कर्तेहैं और पत्रकेअग्रमैं प्रजापति ब्रह्मा निवास कर्ताहै और पत्रके अंतमें सदा शिवजी रहतेहैं ५ ॥ और लक्ष्मी सरस्वती गायत्री चंडी औरइंद्राणी और जो शक्तियांहैं देवतें यों कीयां स्त्रियां सो सभी तिसके पत्रोंमैं निवास कर्तीयांहैं ६ और इंद्र अग्नि शमनक्या धर्म राज निर्ऋति वरुण और पवन कुवेर एह सभी दिशों के पालक तिसकी शाखामैं निवास कर्तेहैं ७ ॥

आदित्याद्याग्रहाःसर्वेविश्वेदेवाश्चसर्वदा व
सवोमुनयश्चैवतथादेवर्षयोऽखिलाः ॥८॥ वि
द्याधराश्चगंधर्वाः सिद्धाश्चाप्सरसस्तथा तुल
सीमूलमासाद्यसर्वदानिवसंतिहि ॥ ९ ॥ गं
गाचयमुनाचैवनर्मदाचसरस्वती गोदावरीचंद्र
भागास्तथान्याः सरितोऽखिलाः ॥१० ॥ को
टिब्रह्मांडमध्येतुयानितीर्थानिभूतले तुलसीम
लमाश्रित्यतान्येवनिवसंतिवै ॥ ११ ॥

आदित्यादि सारेही नौ ग्रह और विश्वेदेव भी सर्वदा काल और आठ वसु मुनि देवर्षि सारेही ॥ ८ ॥ विद्याधर गंधर्व सिद्ध अप्सरा इत्यादि सारेही तुलसीकी छायामैं आश्रित होके निवास कर्तेहैं ॥ ९ ॥ और गंगा यमुना सरस्वती नर्मदा गोदावरी चंद्रभागा तैसेही और सारियां नदियां भी ॥ १० ॥ और क्रोड ब्रह्मांडके मध्यमैं और पृथिवी तलमैं जितनेक तीर्थ हैं सोसारे तुलसीके मूल कों आश्रित होके निवास कर्तेहैं ॥ ११ ॥

सर्वदेवमयीदेवीतुलसीविष्णुवल्लभा यत्रतिष्ठ
तितत्रैवतिष्ठंतिसर्वदेवताः ॥ १२ ॥ पाद्मे पुन
स्तत्रैव तुलस्यारोपणमहिमा ॥ तावद्वर्षसह
स्राणियावद्बीजदलानिच वसंतिवैष्णवेलोकेतु
लसींरोपयंतिये ॥ १३ ॥ रोपणात्पालनात्से
काद्दर्शनात्स्पर्शनादपि तुलसीदहतेपापंवा
ङ्मनःकायकर्मजम् ॥१४ नपश्यंतियमंवैश्य
तुलसीवनरोपणात् सर्वपापहरंसर्वकामदंतुल
सीदलम् ॥ १५ ॥

सारे देवतों के रूप वाली देवी तुलसी विष्णुकी प्यारी जहां स्थित रहतीहैं तहांही सारेही देवता निवास कर्ते हैं ॥ १२ ॥ अब पद्मपुराणमें तुलसी लगाने की माहिमा लि ॥ जितनेक तुल सी के पत्र और बीज होतेहैं उतने हजार वर्ष तुलसी लगानें वा ले विष्णु लोकमैं निवास कर्तेहैं ॥ १३ ॥ तुलसी कों लगाने सें और पालना करनें सें और सिंचन करनेसें और दर्शनसें इ सके स्पर्शसें इतने कर्म करने सें तुलसी मन वाणी देह केकर होए पाप दग्धकर्तीहै १४ और तुलसीका वन लगानेसें मृत हो कर पुरुष यमकों नाहिं देखता है सारे पापों के हरणे वाला और संपूर्ण कामनां के देनेवाला तुलसीका दलहै ॥ १५ ॥

तुलसीकाननंवैश्यगृहेयस्मिंस्तुतिष्ठति तद्गृ
हंतीर्थभूतंहिनोयांतियमकिंकराः ॥ १६ ॥ वि
ष्णुपूजनसंसक्तस्तुलसींयस्तुरोपयेत् युगायु
तमथैकंतुरोपकोमोदतेदिवि ॥ १७॥ आम्रा
णांतुसहस्रेणपिप्पलानांशतेनच यत्फलंतुत
दैकेनतुलसीविटपेनतु १८ ॥ पाद्मेकार्त्तिकमा
हात्म्ये ॥ यावच्छाखाप्रशाखाभिर्बीजपुष्पदलै
र्मुने रोपितातुलसीपुंभिर्वर्धतेवसुधातले॥१९

हे वैश्य जिसके घरमैं तुलसी का वन स्थितहै सो घर तीर्थ रू
पहै तहां यमके किंकर दूत नाहिं आवतेहैं १६ ॥ विष्णु भग
वान् जीकी पूजा करने वालाजो पुरुष अपने घरमैं तुलसी
कों लगावताहै सो पुरुष युगों के अयुत एक लाखवर्ष स्वर्ग
मैं आनंद भोगताहै ॥ १७ आम्रोंके एक हजारवृक्ष लगाने
कर्कै और पिप्पलोंके सैंकडे लगाने कर्कै होताहै सो फल ए
क तुलसी का वृक्ष लगाने कर्कै होताहै ॥ १८ ॥ पद्म पुरा
ण के कार्तिक महात्म्यमेंलि ॥ ० जितनीयां कशाखां कर्कै
और प्रशाखां कर्कै और पुष्पदलों कर्कै हेमुने पुरुषोंने लगाईं
होईं तुलसी पृथिवीतल मैं उसकीसंतान वसुधा तल मैं वधतीहै
॥ १९ ॥

तेषांवंशेतुयेजातायेभविष्यंतियेगताः आक
ल्पयुगसाहस्त्रंतेषांवासोहरेर्गृहे २० ॥ अथतु
लस्याःसेकमहिमावर्ण्यते ॥ तुलसींसिंचये
द्यस्तुअल्पोदकमात्रकैः तुलस्याःशृणुराजेंद्रत
स्यपुण्यमनंतकम् । २१ । पाद्मेक्रियायोगसा
रे वैशाखेऽक्षतधाराभिरद्भिर्यस्तुलसींजनः से
चयेत्सोऽश्वमेधस्यफलमाप्नोतिनित्यशः ॥२२
अथतुलस्यारक्षणेमाहात्म्यंवर्ण्यते क्रियायो
गसारे तृणानितुलसीमूलात्यावंत्यवहतानिवै
तावतीब्रह्महत्यांवैछिनत्त्येवनसंशयः॥ २३ ॥

और तुलसी लगाने वालेके वंशमैं जो जन्मे होएहैं औरम
र गएहैं और जोनसें जन्मेंगे तिनका निवास कल्प पर्यंत यु
गों के हजारां हरिके मंदिरमैं होताहै ॥ २० ॥ अब तुलसी
कों सिंचन करनेकी महिमालि ० ॥ जो पुरुष थोडेभी जल
करकें तुलसी कों सिंचन कर्ताहै क्या जलदान कर्ताहै हेरा
जेंद्र तुलसी कों जलसिंचन करने का अनंत फल श्रवण कर
॥ २१ ॥ पद्म पुराणके क्रियायोग सारमैं लि ० ॥ वैशाख म
हीनेमैं अक्षत धारा करकें जो पुरुष सेचन कर्ताहै सो पुरुष नि
त्यंप्रति अश्वमेध के फलकों प्राप्त होताहै ॥ २२ ॥ अथ तुल
सी की रक्षा करनेका माहात्म्य लि ० पद्म पुराणके क्रियायो
ग सारमैं जितनेक तृण घास तुलसीके मूल देशसें दूरकर्ताहै
उतनीयांही ब्रह्महत्या छेदन कर्ताहै इसमैं संशय नहिहै २३

छिंदंतितृणजालानितुलसीमूलजानिये स्वदे
हस्थब्रह्महत्यांछिंदंतिसहसाहिते ॥ २४ ॥
कंटकावरणंचापिद्वातिंकाष्ठःकरोतियः तुल
स्याः शृणुराजेंद्रतस्यपुण्यफलंमहत् ॥ २५
यावद्दिनानिसंतिष्ठेत्काष्ठकावरणंनृप कुलत्रय
युतःसोपितिष्ठेद्ब्रह्मपदेयुगम् ॥ २६ ॥ प्रा
कारकल्पकोयस्तुतुलस्यामनुजेश्वर कुल
त्रयेणसंयुक्तोविष्णोः सायुज्यमाप्नुयात् २७

जो पुरुष तुलसीके मूल देशमैं जन्म होए तृण घासके स
मूह तिनकों छेदन करैहैं सो पुरुष अपने देहमैं स्थितजो ब्रह्म
हत्याहैं तिनकों शीघ्र छेदतेहैं ॥ २४ ॥ और जो पुरुष कंटे
योंका आवरण वा काष्टका आवरण क्या गोलाकार तिसके
चारो और जो तुलसीकी रक्षाके लिये करैहैं हेराजेंद्र तिस पुण्य
का वडाफल श्रवणकर ॥ २५ ॥ हेनृप तुलसीके चारों पासें
काष्ठका वरण जितने दिन रहताहै उतना काल पर्यंत पुत्रस्त्री
इनके युक्त ब्रह्माके पदमैं स्थितरहताहै २६ हेमनुजेश्वर तुलसी
की रक्षाके लिये जो प्राकारक्या कोट बनातेहैं सो तीन कुलों
के सहित विष्णुकी सायुज्य मुक्तिकों प्राप्त होतेहैं ॥ २७ ॥

निदाघसमयेतुलस्याउपरि छत्रादिकरणेनम
हिमावर्ण्यते ॥ पाद्मे ॥ चंद्रातपंवाछत्रंवात
स्यैयस्तुप्रयच्छति विशेषतोनिदाघेषु समुक्तः
सर्वपातकैः ॥ २८॥ अन्यजीवेभ्यस्तुलस्याः
रक्षणे माहात्म्यंवर्ण्यते ॥ क्रियायोगसारे ॥
गोभ्योजोष्ट्रखरेभ्यश्चमाहिषेभ्यश्चरक्षति शि
शुभ्यस्तुलसींयस्तुतंरक्षेत्केशवः स्वयम् ॥
२९ ॥ तुलस्यधः संमार्जनादिमहिमा वर्ण्य
ते गोमयैस्तुलसीमूलेयः कुर्यादनुलेपनं संमा
र्जनंचविप्रर्षेतस्यपुण्यफलंशृणु ॥ ३० ॥

गर्मीके दिनोंमें तुलसीके ऊपर छत्तरी लगानेकी महिमा वर्ण
न कर्तेहैं पद्म पुराणमें लिखाहै ॥ जो पुरुष चांदनीकी निवृत्ति
के वास्ते वा सूर्यकी धूप निवृत्तिके वास्ते छतरी लगातेहैं और
विशेष करके ग्रीष्म ऋतुमें जो तिसकेताईं देतेहैं सो सम्पूर्ण पा
पोंकरके मुक्तहोतेहैं ॥ २८ अब गौयां महिषियांसें आद लेकर
पशुयोंसें रक्षा करनेकी महिमा लि॰ क्रियायोगसारमें ॥ गौ
यांसें बकरियांसें ऊंटोंसें गधेयोंसें और महिषियोंसें और बा
लकोंसें जो तुलसी की रक्षाकर्तेहैं तिनकी रक्षा केशवजी आ
पकर्तेहैं ॥ २९ अब तुलसी केनीचे सोतना लेपन लगाना इ
सकी महिमालि॰ ॥ जोपुरुष तुलसी के मूलमें गोहेके साथ
सुंदर लेपन लगाते हैं और हेविप्रर्षे नीचे सें शोधन कर्ते हैं
तिनके पुण्यका फल श्रवण कर ॥ ३० ॥

रजांसितत्रयावंतिदूरीभूतानिजैमिने तावत्क
ल्पसहस्राणिमोदतेविष्णुनासह ॥ ३१ ॥ द
र्शनमाहिमा पाद्मे प्रभातेतुलसींपश्येद्भक्तिमा
न्योनरोत्तमः सविष्णुदर्शनस्यैवंफलंप्राप्नोति
चाक्षयम् ३२ पूजनमाहिमा पाद्मे दूर्वाभिरक्ष
तैः पुष्पैर्नैवेद्यैस्तुलसींशुभाम् समाराध्यनरो
भक्त्याविष्णुपूजाफलंलभेत् ३३ येनार्चिता
भगवतीतुलसीकदाचिन्नैवेद्यपुष्पवरधूपघृतप्र
दीपैः धर्मार्थकामामृतदापवित्राकिंतस्यविष्णु
चरणापचितिप्रयोगैः ॥ ३४ ॥

हेजैमिने तुलसीके नीचेसें जितनीक रज धूलि दूरहोईहै उत
नेहीहजारां कल्प विष्णुके साथ आनंद भोगताहै ॥३१॥ अब
तुलसीके दर्शनकी महिमा लिखतेहैं पद्मपुराणमे कहाहै जौ
नसा भक्तिवाला पुरुष प्रातः काल तुलसीकों देखताहै सो वि
ष्णुके दर्शन करनेके अक्षय फलकों प्राप्त होताहै ॥ ३२ ॥ अ
ब तुलसी की पूजाका माहात्म्य पद्मपुराणमें लि० ॥ दूर्वा अ
क्षत पुष्पों करकें नैवेद्यों करकें पुरुष भक्तिके साथ शुभतुलसीका
आराधन करकें विष्णुकी पूजाकरनेके फलकों लभताहै ॥ ३३
और जिसने भगवती तुलसी कदाचित् श्रेष्टनैवेद्य पुष्प धूप
घृतके दीपों करकें पूजन करीहै धर्म अर्थ काम मोक्ष इनचार
पदार्थोंके देनेवाली तिसकों विष्णुके चरणोंकी पूजा करकें क्या
प्रयोजनहै ॥ ३४ ॥

स्थानेषुदोषरहितेषुसुरौघसेव्यायेरोपयंतीतुल
सींहरितुष्टिकर्त्रीं तुष्टोहरिस्त्रिजगता मधिपोमु
रारिस्तेभ्योददातिपरमंपदमाशुविप्र ३५ ॥
तुलसीसमीपेपितृयज्ञादिकरणे माहिमावर्ण्यते
पाद्मे यज्ञंव्रतंचपितृपूजनमच्युतार्चादानंयद
न्यदपिकर्मशुभंमनुष्याः कुर्वंतिदोषरहितेतुल
सीतलेच तान्यक्षयानिसकलानिभवंतिनूनं
३६ स्कांदे तुलसीकाननच्छाया यत्रयत्रभवे
द्द्विज तत्रश्राद्धंप्रकर्तव्यंपितॄणांप्रीतिहेत
वे ॥ ३७ ॥

और देवतेयोंके समूह कर्के सेवन करी होई तुलसी कों दोष रहित स्थानोंमैं जौनसे पुरुष तुलसी कों लगातेहैं हरिकों प्रसन्न करनें वाली हेविप्र तीनलोकोंके अधिपति जो नारायण बिष्णुसो प्रसन्न मनवाले होए हुए तिनके तांई शीघ्र ही परम पद देतेहैं ॥ ३५ ॥ अब तुलसीके पास श्राद्धादिकरनेकी महिमा लि॰ पद्मपुराणमैं हेमुने जोकोई मनुष्य दोष रहित तुलसीके तल नीचे यज्ञव्रत दान पितरों का पूजन विष्णुकी पूजा और जोकुछ शुभकर्म कर्तेहैं सो सारेही निश्चय कर्के अक्षय फलवाले होजातेहैं ॥ ३६ ॥ स्कंदमैं लिखाहै हेविप्र तुलसीके वृक्षों की छायाजहां २ होवे तहां मैं पितरोंकी तृप्तके कारण श्राद्ध करणा चाहिए ॥ ३७ ॥ ?

पितृपिंडार्चनंश्राद्धेयैः कृतंतुलसीदलैः तर्पि
ताःपितरेस्त्यंतयावच्चंद्रार्कतारकाः ॥ ३८ ॥
तुलसीमृत्तिकायत्रकाष्ठंपत्रंचवेश्मनि तिष्ठति
मुनिशार्दूलनदूरेवैष्णवंपदम् ॥ ३९ ॥ अभि
न्नपत्रांहरितांहृद्यांमंजरिसंयुतां क्षीरोदार्णवसं
भूतांतुलसींदापयेद्धरेः ४० नारायणोपरितुल
सीदलार्पणेमहिमा पाद्मे देवदूतविकुंडल
संवादे ॥ तावद्गर्जंतिरत्नानिकौस्तुभादीनिभू
तले यावन्नप्राप्यतेकृष्णेतुलसीकृष्णमंजरी
॥ ४१ ॥

और जिन पुरुषोंने तुलसी दलोंके साथ श्राद्धमैं पितरोंके पिं
डका पूजनकरा तिन पुरुषोंने अत्यंत कर्के जव तक चंद्रमा सूर्य
तारेहैं उतना काल तृप्त करेहैं ॥ ३८ ॥ हेमुनियोंमैं श्रेष्ठ तुल
सी की मृत्तिका काष्ठ पत्र जिसघरमैंहैं तिनकों वैष्णव पददूर
नहिहै ॥ ३९ ॥ नहि किसी प्रकार कर्के भी भेदे होए
हरे रंगके पत्रों वालि मनोहर मिंजरोंके सहित क्षीर समुद्रसें
उत्पन्न होइं हुई तुलसीकों हरिके तांई देवे क्या ऊपर चढावें
४० ॥ नारायणजीके ऊपर तुलसी चढानेकी महिमा देव दूत
विकुंडल के संवाद कर्के पद्म पुराणमैं सें लि० ॥ पृथिवीमें
कौस्तुभादिक मणियां उतनाही काल गर्जनाकर्तीहैं जितनाका
ल कृष्णजीकों तुलसी दल मंजरी नहि प्राप्तहोंई ॥ ४१ ॥

तुलसीगौरकृष्णाख्यातयाभ्यर्च्यजनार्दनं न
रोयातितनुंत्यक्त्वा श्रीविष्णोःशाश्वतींगतिम् ॥
४२ ॥ पाद्मे वृंदावासुदेवोपाख्याने सत्यं
प्रीतिकरंविष्णोः कोपस्तस्यतुतामसः भाव
द्वयंहरौजातंतत्तद्वर्णद्वयंह्यभूत् ॥ ४३ ॥ श्या
मापितुलसीविष्णोः प्रियागौरीविशेषतः वि
ष्णुरहस्ये यत्फलंसर्वतीर्थेषुसर्वपत्रेषुयत्फलं
तुलसीदलेनदेवर्षेप्राप्यतेकेशवार्चनात् ४४ ॥
स्कांदे किंकरिष्यतिसंरुष्टोयमोपिसहकिंकरैः
दलैस्तुलस्यादेवेशःपूजितोयेनदुःखहा ४५ ॥

श्यामा तुलसी और गौर तुलसी तिसके साथ जनार्दनजीकों पूजन कर्के पुरुष इस देहकों त्यागकर विष्णुकी शाश्वत गतिकों प्राप्त होताहैं ॥ ४२ ॥ पद्म पुराणके वृंदा वासुदेवजीके उपाख्यान में लि०॥ विष्णुका सत्य प्रीतिकरने वालाहै कोपतिसका तमोगुणहै एहदोभाव हरिमैं उत्पन्न होएतो सोई २ दो वर्ण रंगभीहोगए ॥ ४३ ॥ श्यामा तुलसी भी विष्णुकी प्यारी है गौरी भी प्यारीहै विशेष कर्के ॥ विष्णुरहस्यमैं लि० ॥ हेदेवर्षे जो फल सारेतीर्थोंमैं स्नान कर्के होताहै और जो फल सभतरांके फल पत्र चढाने कर्के होताहै सो फल एकतुलसीके दलसाथ केशवजीकी पूजासैं होताहै ॥ ४४ ॥ स्कांदमैं विशेष वाक्य लिखाहै ॥ क्या जिसने दुःख दूर करने वाले देवेश हरि तुलसीके दलों कर्के पूजेहैंन तिसकों अपने दूतोंके साथ क्रोधी होएआ हुया यम भी क्या करेगा ॥ ४५॥

मणिकांचनपुष्पाणितथामुक्तामयानिच तुलसी
दलमात्रस्यकलांनार्हंतिषोडशीं ॥ ४६ ॥ तुल
सीमंजरीभिश्चकुर्याद्धरिहरार्चनं नसगर्भगृहं
यातिमुक्तिभागीभवेन्नरः ॥ ४७ ॥ पुराणांतरे
लिंगमभ्यर्चितंदृष्ट्वाप्रतिमांकेशवस्यहि तुल
सीपत्रनिकरैर्मुच्यतेब्रह्महत्यया ॥ ४८ ॥ गारु
डे ॥तन्मूलमृत्तिकांचांगेकृत्वास्नातिदिनेदिने द
शाश्वमेधावभृथस्नानजंलभतेफलम् ॥ ४९ ॥

मणियां कांचनके पुष्प और मोतियों कर्के जडित स्वर्णके पुष्प तुलसी दलमात्र की सोलहमी कलाकों नहि प्राप्त हो सकतेहैं ४६ ॥ और तुलसीकीयां मिंजरां कर्के हरि हर जीका पूजन कर्ताहै सो गर्भवास मैं नहि जाताहै क्या मुक्ति का भागी पुरुष हो जाताहै ॥ ४७ ॥ पुराणांतरमैं लि० ॥ तुलसी के पत्रसमूहों कर्के पूजनकरा हुया शिव लिंग का और केशव जीकी प्रतिमा का दर्शन कर्के ब्रह्महत्या सें मुक्तहोताहै ॥ ४८ ॥ गरुड पुराण मैं लि० ॥ तुलसी के मूलकी मृत्तिका अंगोंमैं लगाकर प्रति दिन जो स्नान कर्ताहै सो दशाश्वमेध मैं स्नान करने के फलकों लभताहै ॥ ४९ ॥

तुलसीदलजांमालामेकादश्यांविशेषतः मु
च्यतेसर्वपापेभ्योयद्यपिब्रह्महाभवेत् ॥ ५० ॥
श्रीभगवद्वाक्यं॥तुलसीपत्रमादाययः करोतिम
मार्चनं नपुनर्योनिमायातिमुक्तिभागीभवेत्तुसः
॥ ५१ ॥ स्कांदे ॥ तुलसीगंधमादाययत्रगच्छ
तिमारुतः विदिशश्चदिशःपूताः भूतग्रामश्चतु
र्विधः ॥ ५२ ॥ योर्चयेद्धरिपादाब्जं तुलस्याः
कोमलैः दलैः नतस्यपुनरावृत्तिर्ब्रह्मलोकात्क
थंचन ॥ ५३ ॥

तुलसीके दलोंकी वनाई होई माला विशेष करकें एकादशी के दिनमैं श्रीपतिको चढातेहैं सो सभनोंपापों सें मुक्त होतेहैं जेकर ब्रह्महत्यावाले भीहोवें तदभी मुक्त होजातेहैं ॥ ५० श्रीभगवान जीका वचन लि० जो कोई तुलसीका पत्र ले करकें मेरी पूजा कर्ता है सो फिर योनि क्या गर्भवास मैं नहि आवताहै सो मुक्ति काभागी होताहै ॥ ५१ स्कंदमैं लि० तुलसीकी सुगंधि लेके वायुजहां कों चलताहै तहां कीयां दिशां विदिशां भूतग्राम चारप्रकारके पवित्र होजातेहैं ॥ ५२ ॥ और जो पुरुष तुलसी के कोमल दलों करकें हरिके चरण कमलों कों पूजताहै तिसकी ब्रह्मलोक मैं कदीं भी पुनरावृत्तिनहि होतीहै क्या उोह परत कर नाहि आवताहै ॥ ५३ ॥

पूज्यमानाचतुलसीयस्यवेश्मनितिष्ठति तत्रै
वसर्वश्रेयांसिवर्धंतेहरहर्द्विज ॥ ५४ ॥ पुष्क
रादीनितीर्थानिगंगाद्याःसरितस्तथा वासुदेवा
दयोदेवा वसंतितुलसीदले ॥ ५५ पाद्मे तु
लसीदलपत्राणिये यच्छतिजनार्दने कार्त्तिकेस
कलंवत्सपापंजन्मायुतंहरेत् ॥ ५६ ॥दृष्टास्पृ
ष्टाथवाध्यातार्कीर्तितानमितानुता रोपितासेचि
तानित्यंपूजितातुलसी शुभा ॥ ५७ ॥ नव
धातुलसीभक्तिंयेकुर्वंतिदिनेदिने युगकोटिस
हस्राणितन्वंतिसुकृतंमुने ॥ ५८ ॥

और हेद्विज पूज्यमान तुलसी जिसके वेश्ममैं क्या घरमैं स्थित है तहांमैं दिन प्रति दिन कल्याणां वधातियांहै ॥ ५४ ॥ तुलसी के दलमैं पुष्करादि तीर्थ गंगादिक नादियां वासुदेव जीसैं आद लेकर संपूर्ण देवता निवास कर्तेहैं ॥ ५५ ॥ पाद्ममैं लिखाहै जो पुरुष तुलसी दल पत्र जनार्दन भगवानजी पर चढावताहै कार्तिक महीनेमैं सारेहि हेवत्स तिसके दश हजार जन्मके पाप दूर होतेहैं ५६ ॥ तुलसी का प्रातः काल दर्शन करना उसके साथस्पर्शकरना तुलसीकाध्यान करना अरकीर्तन करी होई नमस्कार करीहोई अपनेघरमैं और सिंचनकरी होई और नित्यं प्रतिशुभ दायक पूजन करीहोई ५७ नौ प्रकार की भक्ति दिन २मैं जोकर्तेहैं सो युगों के क्रोडां हजारा पुण्य कों विस्तार कर्तेहैं ॥ ५८ ॥

प्रसंगाल्लक्षतुलसीदलार्पणेमाहात्म्यमाह स्कं
दपुराणे तुलसीदललक्षेणयोर्चयेद्द्वारकापतिं
जन्मायुतसहस्त्रस्यपापस्यकुरुतेक्षयम् ॥ ५९॥
पाद्मे तुलसीलक्षपत्रेणकार्त्तिकेयोर्चयेद्धरिम् प
त्रेपत्रेमुनिश्रेष्ठमौक्तिकंलभतेफलं ॥ ६० ॥ तु
लसीदललक्षेण पूजयेत्कमलापतिं लक्षैक
वाजिमेधस्यफलंप्राप्नोतिमानवः ॥ ६१ ॥

अब प्रसंग वशसें तुलसी की लक्षावलि चढाने का माहात्म्य कहतेहैं स्कंद पुराणमें। लाख तुलसी दलके साथ जो द्वारका के स्वामि कृष्ण जीकों पूजतेहैं सो दश हजार जन्मोंके इकठे करेहोए पापोंका क्षय कर्तेहैं ॥ ५९ ॥ पद्म पुराणमें लि० जो पुरुष कार्तिक महीने मैं लक्ष तुलसीके पत्रों कर्के हरिकों पूजतेहैं सो पुरुष एक २ पत्रमैं मोति चढाने के फलकों लभते हैं ॥ ६० ॥ और जो पुरुष कमलापतिकों तुलसी दलों के लक्ष कर्के पूजन कर्तेहैं सो मानव लक्ष अश्वमेधके फलकों प्राप्त होतेहैं ॥ ६१ ॥

पाद्मेकार्त्तिकमाहात्म्ये पृथुनारदसंवादेनेतिहा
समवतारयति ॥ पृथुरुवाच आराधयंतिसर्वे
पिविष्णुंभक्तार्तिनाशनं यज्ञैर्दानैर्व्रतैस्तीर्थैस्तु
लसीवनसेवनैः ॥ १ ॥ विष्णुप्रीतिकरंतेषांवि
ष्णुसान्निध्यकारणं यत्कृत्वैतानिचीर्णानिसर्वा
ण्यपिभवंतिहि ॥ २ ॥ तद्ब्रूहिसर्वंमेविज्ञसर्वशा
स्त्रार्थवित्प्रभो ३ नारदउवाच साधुपृष्टंत्वयाता
तशृणुष्वैकाग्रमानसः इतिहासकथांदिव्यां
कथ्यमानांपुराभवाम् ॥ ४ ॥

अब तुलसी चढानेका माहात्म्य पद्मपुराणके कार्तिक माहात्म्य मैं पृथुनारदके संवाद करकैं कथन करतेहैं ॥ पृथुराजा नारदजी केप्रति कथन कर्ताभया हेऋषे भक्तोंकी पीडा नाश करने वाले विष्णुजीकों यज्ञदान व्रततीर्थ स्नानादि तुलसीके वनकी सेवाक कैं सारेही आराधन करतेहै ॥ १ और विष्णुकी प्रीति करने वाले और विष्णुकी सान्निध्यताके कारण जो व्रतदानादिसारे हिजिसएक कर्मकों करकैं तिन सभनोंके करनेका फलहोता है ॥ २ ॥ हेप्रभो सभनों शास्त्रोंके अर्थजानने वाले हेविज्ञएह सभी मेरे प्रति कहो ॥ ३ ॥ इतना वाक्य श्रवण करकैं नारदजी कथन करतेभये हेतात वडी अछी वात पूछीहै अवएकाग्र मनवा ला होके श्रवणकर इसबातमैं पूर्व होई हुई दिव्यकथा कथन करी होई श्रवण कर ॥ ४ ॥

कांचीपुर्य्यांपुराचौलश्चक्रवर्तीनृपोभवत् यस्य
नाम्नैवतद्देशाश्चौलाःस्फीताःकिलाभवन् ॥ ५
यस्मिञ्छासतिभूचक्रेनदरिद्रोनदुःखितः पाप
वुद्धिः सरुग्वापिनैवकाश्चिदभून्नरः ६ ॥ यस्या
प्यनंतयज्ञस्यताम्रपर्ण्यास्तटावुभौ सुवर्णयूप
शोभाढ्यावास्तांचक्ररथोपमौ ॥ ७ ॥ सकदा
चिदगाद्राजाह्यनंतशयनंमुने यत्रासौजगतां
नाथोयोगनिद्रामुपासते ॥ ८ ॥

पूर्वं एकसमयकांचीपुरीमैं चौलनाम कर्के चक्रबर्ती राजाहोता
भया जिसके नामकर्के उोह देशभी चौलनामकर्के प्रसिद्धहोतेभ
ये ॥ ५ जिसराजाके भूचक्र कों शासना कर्तेहोए दरिद्री और
दुखी कोईनहि होताभया और पाप वुद्धि वाला अर रोगीभी
कोईनहि होताभया ॥ ६ ॥ जिसअनंत यज्ञके ताम्रपर्णी के दो
नौंकिनारे चक्ररथकी उपमा वाले सुवर्णके यूपोंकी शोभाकर
युक्त होतेभये ॥ ७ ॥ हेमुने सोराजा एकसमय अनंतशयन जी
के जाताभया जहां एह भगवान् जगतके स्वामि योगनिद्रा
कर्तें हैं ॥ ८ ॥

तत्र श्रीरमणंदेवंसंपूज्यविधिवन्नृपः माणि
मुक्ताफलैर्दिव्यैः स्वर्णपुष्पैश्चशोभनैः ॥ ९ ॥
प्रणम्यदंडवद्भूमावुपविष्टः सतत्रवै तावद्ब्राह्म
णमायांतमपश्यद्देवसान्निधौ ॥ १० ॥ देवार्चना
र्थमायातंतुलस्युदकपाणिनं स्वपुरीवासिनंत
त्रविष्णुदासाह्वयंद्विजम् ॥ ११ ॥ तत्राभ्यर्च्यस
देवर्षिर्देवदेवंजनार्दनम् विष्णुसूक्तेनसंस्नाप्य
तुलसीमंजरैर्जलैः ॥ १२ ॥ तुलसीपूजनात्तस्य
रत्नपूजातिरस्कृता आच्छादितांसमालोक्य
राजाक्रुद्धोऽब्रवीद्वचः ॥ १३ ॥

तहां श्रीरमण देवताजी कों शास्त्रोक्तविधिसें सो राजा शो भायमान स्वर्ण के पुष्प मणियां मोति दिव्य भूषणों के साथ पूजा कर्के ॥ ९ ॥ दंडवत् भूमिमैं प्रणाम कर्के तहां पासही बैठ जाता भया इतने मैं एक ब्राह्मण कों सामग्री हाथमैं लिये होए कों राजा देखता भया विष्णुजीके पासमैं ॥ १० ॥ देवता की पूजा करने कों आया तुलसी जलका कमंडलु हाथमैं लिये होए अपनी पुरीमैं ही निवास करने वाले विष्णुदास कों देखता भया ॥ ११ ॥ तहां सो ब्राह्मण देवतेयों के देवता जनार्दन जीकों विष्णुसूक्तके साथ स्नान कराके फिर तुलसीकीयां जोमिंजरां तिनकेसाथ शृंगार कर्ता भया ॥ १२ ॥ परंतु तुलसी की पूजा सें रत्नों की पूजाका शृंगार आच्छादित होगयातो क्रोध कर राजा कहता भया ॥ १३ ॥

राजोवाच ॥ सुवर्णमणिमुक्तादिशोभाढ्यार्चा कृतामया विष्णुदासकथंसेयमाच्छन्नातुलसी दलैः ॥ १४ ॥ विष्णुभक्तिंनजानासिवराकोसि मतोमम यस्त्वमामतिशोभाढ्यांपूजयाच्छाद यस्यहो ॥ १५॥ इतितद्वचनंश्रुत्वासक्रोधःसद्वि जोत्तमः राज्ञःगौरवमुल्लंघ्यजगादवचनंतदा ॥ १६ ॥ विष्णुदासउवाच ॥ राजन्भक्तिंनजा नासिगर्वितोसिनृपश्रिया किंचिद्विष्णुव्रतंस म्यकृत्वयाचीर्णंवदस्वतत् ॥ १७ ॥

राजा बोला हेद्विज सुवर्ण मणियां पुष्पादियों के साथ शोभायुक्त मैंनेपूजा करी होई थी सो तैंने तुलसी दलों के साथआच्छादित करी है क्या ढक दीहै ॥ १४ ॥ निर्धनहैं और विष्णुकी भक्ति नाहिं जानताहैं कैसी होतीहैं किसतरां जो इस अतिशोभाकर युक्तकों पूजाके साथ ढकादियाहै ॥ १५ ॥ ऐसा तिसका वचन सुनकर क्रोधके सहित ब्राह्मण राजा की वडेयाई कों भी उलंघन कर वाक्य कहता भया तिस समय॥ १६ ॥ विष्णुदास बोला हेराजन् तूंराज्य लक्ष्मी करके मस्तहैं भक्तिकों नाहिंजानता हैं अच्छा जेकर तैंने कोंई पीछे विष्णुव्रत कराहैं तद कथन कर १७

नारदउवाच ॥ तद्ब्राह्मणवचःश्रुत्वाप्रहस्यसनृ
पोत्तमः विष्णुदासंततोगर्वादुवाचवचनंद्विजं
१८ ॥ इत्थंचेद्वदसिविप्रविष्णुभक्त्यातिगर्वि
तः भक्तिस्तेक्रियतेकेनदरिद्रेणाधनेनच १९
यज्ञदानादिकंचैवविष्णुतुष्टिकरंस्मृतम् ना
पिदेवालयंविप्रकृतंपूर्वंत्वयाक्वचित् २० ॥ ई
दृशस्यापितेगर्वएषस्तिष्ठतिभक्तिजः तच्छृण्वं
तुवचोमेद्यसर्वेप्येतेद्विजोत्तमाः २१ ॥

नारदजी कथन कर्तेहैं हेराजन् सो नृपोत्तम चौल राजा तिसब्रा
ह्मणका बचन सुनके हास्य कर तिससें उपरंत विष्णुदास ब्रा
ह्मण कों गर्वसें वाक्य कहता भया १८ ॥ हेविप्र बिष्णुकी भ
क्ति कर्के बडा गर्वित हैं जोतूं ऐसे कहता हैं परंतु तैंने निर्ध
न दरिद्रि ने क्या भक्ति करणी हे १९ ॥ विष्णुकी प्रसन्न
ता करने वाले यज्ञदाना दि कर्म कहे हैन हेविप्र कहीं तैंने
अब तक देवता का मंदिर नहि वनाया हैं २० ॥ इस तरां
के दरिद्र भावतें भी तेरेकों भक्तिसें गर्व वना हुया हैं हेद्वि
जोत्तमाः सारे हो तुम मेरा वचन सुनो- २१ ॥

साक्षात्कारमहंविष्णोरेषवाशुगमिष्यति ततः
सर्वेपिपश्यंतुभक्तिंममतवापिहि २२ ॥ इत्यु
क्त्वासनृपोगच्छन्निजंराजगृहंनृप आरेभेवैष्णवं
सत्रंकृत्वाचार्यंतुमुद्गलम् २३ ॥ ऋषिसंघस
माघुष्टंवह्वृचंवहुदक्षिणम् यद्ब्रह्मकृतंपूर्वंगया
क्षेत्रेसमृद्धिमत् २४ ॥ विंष्णुदासोपितत्रैवत
स्थौदेवालयेव्रती पंचैतान्नियमान्कृत्वाविष्णु
तुष्टिकरान्सदा २५ ॥

साक्षात्कार विष्णु के एह ब्राह्मण जाता है वामैं जाताहुं एह सारे ब्राह्मण मेरी भक्ति कों और इस की भक्ति कों देखें २२ ॥ हेराजन् ऐसा कहके सो राजा अपने घरों मैं चला गया तहां जाके मुद्गलजी कों आचार्य वनाय कर वैष्णव यज्ञ का आरंभ कर्ता भया २३ ॥ कैसा यज्ञ है ऋषियों के समूह कर्के युक्त अर वह्वृच और वहुतहैं दक्षिणा जिसमैं फिर कैसा हैं जैसें गया क्षेत्रमैं समृद्धि वाला पूर्व समय ब्रह्मा ने किया तिस की न्यांईहै २४ और सो विष्णुदास विष्णु व्रत धारण कर्के तिस मंदिर मैं ही स्थित होजाता भया क्या कर्के विष्णु की प्रसन्नता करने वाले पांच नियम धारण कर्के २५ ॥

माघोर्जयोर्व्रतंसम्यक्कुलसीवनपालनं एकाद
शीव्रतंजप्यंद्वादशाक्षरविद्यया २६ उपचारैः
षोडशभिर्गीतवादित्रमंगलैः नित्यंविष्णोस्त
थापूजांव्रतान्येतानिसोकरोत् २७ नित्यंचसं
स्मरन्विष्णुंगच्छन्भुंजन्स्वपन्नपिसर्वभूतस्थितं
विष्णुमपश्यत्समदर्शनः २८ ॥ कदाचिद्वि
ष्णुदासोथकृत्वानित्याविधिंनृप पाकंचाप्यक
रोत्तावद्दहरत्कोप्यलक्षितः २९ ॥

और माघ महीने के और कार्तिक महीने के व्रत तुलसी
के वन का पालन एकादशी का व्रत और द्वादशाक्षर बि
द्याका जप २६ ॥ षोडशोपचार पूजन विष्णु पदोंका गाय
न वाजे वजानें मंगल कृत्य करने विष्णु की पूजा इत्या दि
नियम सो कर्त्ता भया २७ ॥ और नित्यं प्रति विष्णु का च
लते फिरते बैठे भोजन कर्त्ते शयन करे होए स्मरण कर्ते
रहना और सारे जीवोंमैं हरिको देखना अर हरिमें सभजीव
देखने इसतरां का समदर्शी होताभया २८ हेंनृप एकदिनवि
ष्णु दास नित्य विधि कों कर्के भोजन वना वता भया इतने
मैं अलिक्षत होके कोई भोजन कों हरता भया २९ ॥

तमदृष्ट्वाप्यसौपाकंपुनरेवाकरोन्नहि सायंका
लार्चनस्यासौव्रतभंगभयादिव ३० ॥ द्वितीये
ह्नितत: पाकंकृत्वायावत्सविष्णवे उपहार्थ्या
र्पणंकर्त्तुंगत:कोप्यहरत्पुन: ३१ ॥ एवंसप्त
दिनंतस्यपाकंकोप्यहरन्नृप तत:सविस्मय:सो
थमनस्येवंव्यचारयत् ३२ ॥ अहोनित्यंस
मभ्येत्यपाकंकोहरतेमम क्षेत्रसंन्यासिन:स्था
नंनत्याज्यंममसर्वथा ३३ ॥

तद आकर देखने लगा तो भोजन नहि देखा. तो फिरसायं
काल पूजाके भंग होने के भयसें नहि वना वता भया ३० ॥
दूसरे फिर दिन उसीसमय भोजन वनायके पूजाके नैवेद्यके लि
ये ठाकुर जी कों लेने गया तद फिर अलक्ष्य रूप होके कि
सीनें हरलिया ३१ हेराजन् इसी तरां कोई सात दिन पर्यंत
भोजन तिसका हरलिये जाता भया तद सो विस्मय कर युक्त
मनमैं ऐसा विचार कर्ता भया ३२ ॥ वडा आश्चर्यहै कौन आ
के नित्यं प्रति भोजन चुराके लेजाताहै संन्यासियों का एह क्षेत्र
है मेरेकों त्यागना भी नहि चाहिए ॥ ३३

पुनःपाकंविधायान्नंभुज्यतेयदिवामया सायंका
लार्चनंविष्णोःपरित्याज्यंकथंमया ३४ मया
पाकंविधायैवंभोक्तव्यंचकथंभवेत् अनिवेद्यह
रौसर्वैर्वैष्णवैर्नतुभुज्यते ३५ उपोषितोहंचकथं
तिष्ठाम्यत्रव्रतेस्थितः अद्यसंरक्षणंसम्यक्पाक
स्यात्रकरोम्यहम् ॥ ३६॥ इतिपाकंविधायासौ
तदैवालक्षितः स्थितः तावद्ददर्शपुरुषं पाका
न्नहरणेस्थितम् ॥ ३७ ॥ क्षुत्क्षामंदीनवदनम
स्थिचर्मावशेषितं तमालोक्यद्विजाग्र्योभू
त्कृपयान्वितमानसः ॥ ३८ ॥

जेकर फिर भोजन वनाके भोजन कर्ताहुं तद विष्णु भगवानकी पूजा सायकाल समयकी किसतरां त्यागनीहै ३४ ॥ और जे कर ऐसेही पाक वनाके विष्णुकों नैवेद्य लगाये विना कैसें खाणा है सो वैष्णवो ने नहि खाणा योग्यहै ॥ ३५ ॥ और उपोषित कया विना भोजन खाये व्रतमैं स्थित होएआ हुया कैसें स्थित होआंगा अछा आज भोजनकी रक्षा करूंगा ॥ ३६ ॥ ऐसानिश्चय कर्के भोजन वनाया और छिपकर्के स्थित होगया तद इतनेमैं भोजन चुराने मैं युक्त होए हुए एक पुरुष कों देखता भया ॥ ३७ ॥ कैसा पुरुष क्षुधा कर्के कृश दीन मुखवाला अस्थियां चर्ममात्र शेष रहाहुया ऐसे तिसकों देखकर सोब्राह्मण कृपा युक्त होता भया ॥ ३८ ॥

विलोक्यान्नहरं विप्रस्तिष्ठतिष्ठेति चाब्रवीत् कथं भवान्नीरूक्षं घृतमेतद्गृहाण भो ३९ इत्थं ब्रुवाणं विप्राग्र्यमायांतं स विलोक्य च भीत्या वेगाद्धावत्समूर्छितः स पपात ह ४० विभीतं मूर्छितं दृष्ट्वा पुरुषं स द्विजोत्तमः वेगादभ्येत्य कृपया स्ववस्त्रांतैरवीजयत् ४१ अथोत्थितं तमेवासौ विष्णुदासोऽव्यलोकयत् साक्षान्नारायणं देवं शंखचक्रगदाधरम्॥ ४२ ॥

भोजन चुराने वाले ब्राह्मणकों देखके कहता भया खडा हो२ कैंसे रूक्ष भोजन करेंगा घृतभीलेजा ॥ ३९ इसप्रकारके वचन कहते होए विप्राग्र्य श्रेष्ट ब्राह्मणकों और अपने पीछे आवते होएकों देखकर वडेतिसके भयसें वेगकर दौडता २ सो पुरुष मूर्छित होकें गिड पडताभया ४० तो सो ब्राह्मण भयकर्के युक्त अर मूर्छाकों प्राप्तहोएहुएको देखकर वडेंवेगसें तिसके पासप्राप्त होकर कृपा कर्के वस्त्रके अंतसाथ वीजन कर्ताभया क्या झोलताभया ॥ ४१ ॥ तो इससें उपरंत चैंतन्यता कों प्राप्तहोनेसें उपरंत ऊढखडें होए हुए तिसकों देखता भया क्या शंख चक्र गदा पद्म के धारण करने वाले साक्षात् नारायण जी कों देखता भया ॥ ४२ ॥

पीतांबरंचतुर्वाहुंश्रीवत्सांककिरीटिनं अतसी
पुष्पसंकाशंकौस्तुभोरः स्थितंविभुम् ॥ ४३ ॥
तंदृष्ट्वासात्त्विकैर्भावैरावृतोद्विजसत्तमः स्तोतुं
चापिनमस्कर्त्तुंतदालंनवभूवसः ॥ ४४ ॥ अथ
शक्रादयोदेवास्तथैवाभ्याययुस्तदा गंधर्वाप्स
रसश्चापिजगुश्चननृतुस्तदा ॥ ४५ ॥ विमान
शतसंकीर्णंदेवर्षिगणसंकुलं गीतवादित्रनिर्घो
षस्थानंतच्चाद्भुतंह्यभूत् ॥ ४६ ॥

फिर कैसे हैन पीले वस्त्र जिनके चार भुजों कर युक्त श्रीवत्स के चिह्न वाले किरीट मुकुट धारण कराहुया और अलसी के पुष्पकी न्यांई शोभा जिनकी और कौस्तुभ मणि है हृदयमैं स्थित जिनके ऐसे विभुकों ॥ ४३ ॥ देखके द्विज सत्तम सात्विक भावों करके युक्त होता भया और स्तुति करने कों नमस्कार करने कों तिस समयसमर्थ नाहिं होता भया ॥४४ इतने मैं शक्रादिक देवता उहां मैंही सारे चले आवते भये और गंधर्व अप्सरां एहसभ गायन कर्ते भये और नृत्य कर्ते भये ४५ और सोस्थान सैकडे विमानों कर भरगया अर देवर्षियों करके युक्तहोता भया और गायनके वाजयों के शब्द होते भये ऐसा स्थान तिस समैं अद्भुत रूपवाला होता भया ४६ ॥

ततोविष्णुःसमालिंग्यस्वभक्तंसात्त्विकव्रतं सा
रूप्यमात्मनोदत्त्वानयद्वैकुंठमंदिरं ४७ विमा
नवरसंस्थानंगच्छंतंविष्णुनासह दीक्षितश्चौ
लनृपतिर्विष्णुदासंविलोक्यच ॥ ४८ ॥ स्वगु
रुंमुद्गलंवेगादाहूयेत्थंवचोब्रवीत् चौलउवाच ॥
यत्स्पर्धया.मयाचेदंयज्ञदानादिकंकृतं सविष्णु
रूपधृग्विप्रो यातिवैकुंठमंदिरम् ॥ ४९ ॥ दी
क्षितेनमयासम्यक्सत्रेऽस्मिन्वैष्णवंकृतं हुतम
ग्नौकृताविप्रादानाद्यैः पूर्णमानसाः ॥ ५० ॥

तिससें उपरंत विष्णु भगवान् सात्विक व्रतों वाले अपने भक्त कों आलिंगन कर क्या गलके साथ मिलाय के अपनी सारूप्य मुक्तिकों देकर वैकुंठ मंदिरमैं लेजाते भये ॥ ४७ ॥ उससमय श्रेष्ट विमानमैं स्थित विष्णु भगवानूजी के साथ जाते होएकों देख कर दीक्षा मैं वैठा हुया चौलराजा वडी शीघ्रतासें अपने गुरु मुद्गलजी कों वुलाय कर इसप्रकार वचन कहता भया ४८ ॥ चौलराजा कहताभया हेगुरो जिसकी स्पर्धा कर इसप्रकारके यज्ञदानादि करेहैं सो व्राह्मण विष्णुकारूप धारे होए वैकुंठ मंदिरमैं जाताहै ॥ ४९ ॥ और दीक्षित होए मैने क्या यज्ञमें बैठे होए मैंने वैष्णव कर्मकियाहै अग्नि मैं हवन करेहैं और दानादिकर्के व्राह्मणोंके मनोरथ पूर्ण करेहैं ५०

नैवाद्यापिसमेदेवःप्रसन्नोजायतेध्रुवं भक्त्यैवत
स्यविप्रस्यसाक्षात्कारंददौहरिः ॥ ५१ ॥ त
स्माद्दानैश्वयज्ञैश्चनैवविष्णुःप्रसीदतिभक्तिरेव
परंतस्यनिदानंदर्शनेविभोः॥५२॥ नारदउवा
च ॥ इत्युक्त्वाभागिनेयस्यचाभ्यषिंचन्नृपासने
आवाल्याद्दीक्षितोयज्ञेह्यपुत्रत्वमगाद्यतः ५३
तस्मादद्यापितद्देशेसदाराज्यांशभागिनः यज्ञ
वाटयांततोभ्येत्यवह्नि कुंडाग्रतःस्थितः ॥ ५४
त्रिरुच्चैर्याजहारासौविष्णुंसंवोधयन्निव वि
ष्णोभक्तिंस्थिरांदेहिमनोवाक्कायकर्मभिः ५५

और सो देवता आज तक मेरेपरप्रसन्न भी नहिहोए और तिसब्रा
ह्मणकिभक्ति कर्के तिसकों साक्षात्कर देतेभये नारायणजी ५१ ति
सकारणसें जानलियाहै कियज्ञदान ब्रतोंकर्के विष्णु प्रसन्न नहि
होताहै तिस भगवान् के दर्शनमें भक्तिही कारणहै॥५२॥ नारद
जी कहतेहैं हेराजन् इसप्रकारकथन कर्के सोराजा अपनी भगि
नीके पुत्रकों राज्यासन मै अभिषेक कर्ताभया क्याराज्य तिलक
तिसकों दताभेया क्योंकि वाल्यावस्थासें लेके यज्ञमें दीक्षित
था इसकारणसें तिसके संतान नहिंथी ॥५३ ॥ और तिसका
रणसें आज तकर उसदेश मैं भागिनेयही राज्यांश के भागीहै
उससें उपरंतराजा यज्ञवाटिमैं प्राप्त होकरहवन कुंडके आगे स्थि
तहोके ५४ तीनवार ऊंचे विष्णुकों वुलावता हुयाकहताभया
हेविष्णो मन वाणी कर्म कर्के अपनी स्थिर भक्तिदे औरमहि
मांगताहूं ॥ ५५ ॥

इत्युक्त्वासोपतद्वह्नौसर्वेषामेवपश्यतां मुद्गल
स्तुतदाक्रोधाच्छिखामुत्पाटयत्स्वकाम् ५६ ॥
ततस्त्वद्यापितद्गोत्रेमौद्गलाश्चाशिखाभवन् ता
वदाविर्भवद्विष्णुःकुंडाग्रेभक्तवत्सलः ॥ ५७ ॥
तमालिंग्यविमानाग्र्यं समारोहयदच्युतः ॥
ततोदत्त्वात्मसारूप्यंवैकुंठमनयद्विभुः ॥ ५८ ॥
योविष्णुदासः सतुपुण्यशीलो यश्चौलभूपः
ससुशीलनामा एतावुभौतत्समरूपभाजौ
द्वास्थौकृतौतेनरमाप्रियेण ॥ ५९ ॥ इतिश्रीप
द्मपुराणेकार्तिकमाहात्म्येविष्णुदासचौलोपा
ख्यानेतुलसीमहिमवर्णनम् ॥

ऐसा कहके सभनों केदेखते२सोराजा अग्निमें डिग पडता भया और मुद्गल ऋषि उससमय क्रोधसें अपनी शिखा पुटता भया ५६ तिससें उपरंत आजतकर मुद्गल गोत्रके अशिख होतेभये इतने मेंकुंडके आगेविष्णु भगवानूजी प्रगट होतेभये ५७ और भक्तवत्स ल तिसकों आलिंगन करके विमान पर विठाय लेतेभये औरअप नी सारूप्य मुक्ति देकर विभु परमेश्वरजी वैकुंठमें ले जातेभये ५८ उहां जाके जो विष्णुदास था सोपुण्यशील हुया और जोचो लराजाथासोशील नामा द्वारपालहुया एहदोनं परमेश्वरके समा नरूपवाले होतेभये औरमाप्रियभगवानूजीनेदोनो द्वारपालवनाए ५९ एह पद्मपुराणके कार्तिक माहात्म्यमें विष्णुदास और चोर राजाके उपाख्यानमें तुलसीकीमहिमाका वर्णनसमाप्तहुयाहै ॥

अथविष्णोरुपरिदूर्वार्पणमाहात्म्यम् ॥ वि
ष्णुरहस्ये दूर्वांकुरंहरेर्यस्तुपूजाकालेप्रयच्छति
पूजाफलंशतगुणंसम्यगाप्नोतिमानवः ॥ १ ॥
स्कांदे गृहदूर्वामयैःपुष्पैःतथाकाशकुशो
द्भवैः भूधरंसमलंकृत्यविष्णुलोकंव्रजेन्नरः
॥ २ अथविल्वार्पणमहिमा ॥ सकृदभ्यर्च्यगो
विंदंविल्वपत्रेणमानवः भक्तिभागीनिरातं
कःकृष्णस्यानुचरोभवेत् ॥ १॥ स्कंदपुराणे
विल्वपत्रेणयःकृष्णंकार्त्तिकेकलिनाशने पूज
येत्तुमहाभक्त्यामुक्तिस्तस्यमयोदिता ॥२

अव विष्णुके ऊपर दूर्वा चढाने का माहात्म्य लि० विष्णुरह
स्यमैं ॥ हरिनारायण जी की पूजा के समय जो दूर्वा चढाव
ताहै सो मानव पूजासैं सौ गुणा अधिक फलकों प्राप्त होताहै
१ ॥ स्कंदमैं लि० घरकीयां दूर्वा कर्के और पुष्पों कर्कै उौर
काई कुशा कर्के गिरिधारीकों अलंकार कर विष्णुके लोकमैं
जाताहै ॥२ अव विल्वपत्र चढाने की महिमा लि० ॥ एकवा
र विल्व पत्रके साथ गोविंदजी का पूजन कर्के दःखोंसें रहित
होएआ हुया कृष्णजीका अनुचर होताहै १ स्कंदमैं लि० पा
पोंके नाश करने वाले कार्ति० महीने विल्वपत्र के साथ महा
भक्ति कर्कै मेरी पूजा करे सो मुक्तिका भागी होताहै ॥ २॥

नरसिंहपुराणे नरसिंहंचयोभक्त्याविल्वपत्रै
रखंडितैः सर्वपापविनिर्मुक्तःसर्वभूषणभूषितः
कांचनेनविमानेनविष्णुलोकेमहीयते ॥ १ ॥
अथशमीपत्रार्पणमाहात्म्यम् शमीपत्रैश्चयेदेवं
पूजयंत्यसुरद्विषं यममार्गमहाघोरंतैनिस्तीर्णं
तैस्तुनारद ॥ १ ॥ अथधात्रीफलपुष्पैर्वि
ष्णवर्चनमहिमा स्कांदे धात्रीवृक्षप्रसूनैश्चयो
र्चयेच्चक्रचिह्नितं पुष्पेपुष्पेश्वमेधस्यफलं प्राप्नो
तिनारद १ धात्रीपत्रैर्नवीनैश्चकोमलैर्हरिम
र्चयेत् यमलोकेमहाघोरेनवसंतिमहामुने २

नरसिंह पुराणमैं लि०॥नरसिंह जीकों अखंड विल्व पत्रों करकें जो भक्तिके साथ पूजन कर्ताहै सो सारे पापों करकें रहित संपूर्ण भूषणों करकें भूषित कांचन के विमान करकें विष्णुलोक मैं महिमा कों प्राप्तहोताहै ॥ १ ॥ अब विष्णुके ऊपर जंडीके पत्र चढाने की महिमा लि०॥ जो पुरुष असुरों के द्वेषी देवताकों जंडीके पत्रोंके साथ पूजतेहैं हेनारद तिनोंने महाघोर यम मार्ग तरलियाहै ॥ १॥ अब आमलीके फल पुष्पोंके साथ विष्णु पूजाकी महिमा लि० ॥ आमली वृक्षके पुष्पोंकरकें जो चक्रके चिह्न वाले भगवान्‌जी का पूजन कर्ताहै हेनारद सो पुरुष एक २ पुष्पमैं अश्वमेधके फलकों प्राप्त होताहै १ और नवीन आमलीकें फलों करकें हरिकों पूजतेहैं हेमहामुने सो यमलोक मैं नहि निवास कर्तेहैं ॥ २ ॥

अथधूपमाहात्म्यं वामनपुराणे स्नानकालेतुदेवस्यअगुरुंदहतेनरः प्रविष्टनासिकारंध्रेपापंजन्मायुतंव्रजेत् ॥ १ ॥ नारसिंहे महिषाख्यंगुग्गुलंयआज्ययुक्तंसशर्करं धूपंददातिराजेंद्रनरसिंहायभक्तिमान् ॥ २ ॥ सधूपितःसदातुष्टःसर्वपापविवर्जितः अप्सरोगणयुक्तेनविमानेनविराजते वायुलोकंसमासाद्यविष्णुलोकेमहीयते ॥ ३ कृष्णागुरुसमुत्थेनधूपेनश्रीधरालयं धूपयेद्वैष्णवोयस्तुसमुक्तोनरकार्णवात् ४

अब धूपका माहात्म्य वामन पुराणसें लि० ॥ देवता विष्णुके स्नान करने के समय जो नर अगरकों दग्ध कर्ताहै और उस अगर धूपके नासिका रंध्रमें प्रवेश करे होए दश हजार जन्मोंके पाप दूर होतेहैं ॥ १ ॥ नारसिंहमें लि० ॥ महिष नामा धूप गुगलकों घृत शर्करा युक्त हेराजेंद्र जो भक्तिमान् पुरुष नरसिंह जीकों धुखावता है २ सो धूपित करे होए सर्वदाकाल प्रसन्न सारे पापों कर्के रहित अप्सरोंके गणों कर्के युक्त विमानमें विराज मान होताहै ॥ और वायु लोकमें प्राप्त होकर विष्णुलोकमें महिमाकों प्राप्त होताहै ॥ ३ और काले अगरके बने होए धूप कर्के श्रीधर जीकें मंदिरकों धूप देताहै क्या सुगंधि युक्त कर्ताहै जो वैष्णव सो नरक समुद्रसें मुक्त होताहै ॥ ४ ॥

क्रियायोगसारे यस्तुधूपांद्विजश्रेष्ठचंदनागुरुवासितं दद्यान्मुरारयेयस्तुद्रुतंसिद्ध्यंतिवांछितम्॥ ५ ॥ धूपंयोयच्छतिविप्रहरयेघृतवासितम् सगच्छेद्विष्णुभवनंविमुक्तःसर्वपातकैः ॥ ६ ॥ नारायणाययोधूपंदद्याद्गुग्गुलवासितं सयातिपरमंधामयत्सुरैरपिदुर्लभम् ७ ॥ पाद्मे यो ददातिहरेर्धूपंसकर्पूरंसकेसरं युक्तंमृगमदेनापिसगच्छेद्वैष्णवंपदम् ॥ ८ ॥

क्रियायोगसार मैं लि० ॥ हेद्विजश्रेष्ठ चंदन अगुरु कर्के वासित युक्त धूपकों मुरारि के तांई धूपित कर्ताहै तिसके वांछित शीघ्र सिद्ध होतेहैं ॥ ५ ॥ हेविप्र घृतके साथ वासित धूपकों हरिके तांई देताहै सो सारे पापोंकों कर्के मुक्त होएआ हुया विष्णु लोकमैं जाता है ॥ ६ ॥ और जो पुरुष नारायण के तांई गुग्गलका धूप देताहै सो परम धामकों जाताहै जोन सा धाम देवतयों कों भी दुर्लभहै ॥ ७ पद्मपुराणमैं लि० ॥ जो पुरुष हरिके तांई केशरके सहित धूप देताहै अर कस्तूरी के सहित सो पुरुष वैष्णव पद मैं जाताहै॥ ८ ॥

स्कंदपुराणे कृष्णागुरुंचधूपंचधूपयेत्केशवाग्र
तःसवैष्णवोनरोज्ञेयोविमुक्तोनरकार्णवात् ९
पाद्मेपातालखंडेगुग्गुलंघृतसंयुक्तंदद्यात्कृष्णा
यभक्तिमान्युक्तंसुगंधद्रव्येणसगच्छेद्धरिमंदि
रम् १० ॥ अथविष्णोर्नैवेद्यभक्षणेमाहात्म्यं
गारुडे पादोदकंपिबेन्नित्यंनैवेद्यंभक्षयेद्धरेः
शेषाश्चमस्तकेधार्याइति वेदानुशासनं उच्छि
ष्टमवशिष्टंचभक्तानांभोजनद्वयमिति ॥ १ ॥

स्कंधपुराणमैं लि०जोकाला अगर और धूप केशवजीके आगे
धूपितकर्ताहै सो वैष्णवपुरुष नरकसमुद्रोंसे मुक्त होएआ हुया
जानना ॥ ९ ॥ पाताल खंडमैं लि० गुग्गलका धूप कृष्णजीं
के तांई जो भक्तिमान् पुरुष घृतसंयुक्त और सुगंधि
द्रव्यके सहित देताहै सो हरिके मंदिरमैं जाताहै ॥ १० ॥
अव विष्णुके नैवेद्य भक्षणका माहात्म्य लि०॥ गरुडमैं कहाहै
हरिके पादोंका जल और नैवेद्य नित्यं प्रति भक्षण करे और
जो वाकी हाथमैं लगा हुया रह जावे सो मस्तक मैं धारणकरे
एह वेदकी आज्ञाहै और जो उच्छिष्टहै विष्णुका और जो
बाकी रिहा हुया एह दोनों भक्तोंके भोजन कहेहै ॥ १ ॥

हलायुधेस्कंदपुराणे नैवेद्यशेषतुलसीविमिश्रं विशेषतःपादजलेनसिक्तं योश्नातिनित्यंपुरतोमुरारेःप्राप्नोतियज्ञायुतकोटिपुण्यम् २ ब्रह्मांडे षड्भिर्मासोपवासैश्चयत्फलंपरिकीर्त्तितं विष्णोर्नैवेद्यसिक्तान्नंभुंजतांतत्फलंभवेत् ॥३॥ विष्णुधर्मोत्तरे मुकुंदाशितशेषंतुयोहिभुंक्तेदिनेदिने सिक्तेसिक्तेलभेत्पुण्यंचांद्रायणशताधिकम् ॥ ४ ॥

हलायुधमें लि०स्कंदपु०से०॥ नैवेद्यका जो शेषहै तुलसी के साथमिला हुया और विशेषकर्के चरणामृत कर्के युक्त जो नित्यंप्रति भोजन कर्ता है सो यज्ञों के अयुत कोटि पुण्यको प्राप्तहोताहै २ ब्रह्मांडमें लि० छे महीनेयोंके उपवास व्रतों कर्के जो पुण्यकहाहै सो चरणामृत कर्के सिंचित विष्णुके नैवेद्यभक्षणमें फलकहाहै ॥ ३ ॥ विष्णुधर्मोत्तरमें लि० मुकुंदजी के भोजन शेष को जोनित्यंप्रति भोजन कर्ताहै सोसिंचन करे होए मैंसो सें भीअधिक चांद्रायणका फल लभता है ॥ ४ ॥

नारदसंहितायां गौरींप्रति शिववाक्यं अग्निष्टो
मसहस्रैस्तुवाजिपेयशतैरपि यत्फलंलभतेदे
विविष्णोर्नैवेद्यभक्षणात् ॥ ५ ॥ क्रियायोग
सारे देहस्थजातिपापानिब्रह्महत्यायुतान्यपि
भुंजतो हरिनैवेद्यंदासीचवशगाभवेत् ॥६॥ भु
क्तिर्मुक्तिस्सुरश्रेष्ठदैवतैरपिदुर्लभा संपूज्यकम
लाकांतं किंचिन्नैवेद्यमात्तियः ॥ ७ ॥

नारद संहितामें लि० गौरिकें प्रति शिवजी का वचनहै ॥ हजा
रं अग्निष्टोमों कर्के सैकडे वाजिपेयों यज्ञों कर्के हेदेवि जो पुण्य
होताहै सो विष्णुके नैवेद्यभक्षणसें होता है ५ क्रियायोगसारमें
लि० हरिकानैवेद्य खाने वालोका देह आयुतब्रह्महत्या कर्के युक्त
भी पापोंकोंत्यागता है और दासीवशीभूतहोतीहै ६ हेसुरश्रेष्ठ भु
क्तिमुक्ति देवतेयोंने भी वडी दुर्लभहै परंतु कमलाकांतजी कों पू
जन कर्के थोडा जो नैवेद्य भक्षण कर्ताहै तिसकों थोडे चिर का
ल कर्के विष्णुजी अपने तनुके प्रति लेजातेहैं ॥ ७ ॥

अचिरेणैवतंविष्णुर्नयतेस्वांतनुंप्रति नैवेद्यस्य
महाविष्णोर्गुणांकिंकथयाम्यहम् ८ यद्भुंजतो
केशवोपिस्यादधीनोद्विजोत्तम इति ९॥ स्कां
दे भुक्ताकेशवनैवेद्यंकोटियज्ञफलंलभेत् ब्रह्मचा
रीगृहस्थश्ववानप्रस्थोयतिस्तथा विष्णोर्नैवे
द्यभोक्तास्यान्नात्रकार्याविचारणा ॥ १० ॥
सेतिहासं विष्णोर्नैवेद्यभक्षणमाहात्म्यं पद्म
पुराणे जैमिनिंप्रतिव्यासवाक्यम्

हेद्विजोत्तम महा विष्णुके नैवेद्यके क्या गुणकहीं जिसके भोजन
करतेहोए केशवजी अधीन होतेहैं ९ स्कंदमैं कहाहै केशवजीके
नैवेद्यकों भोजन करके क्रोड यज्ञका फललभताहै इसबिष्णु के
नैवेद्यकों ब्रह्मचारी गृहस्थी वानप्रस्थी संन्यासी एहसभ
भक्षणकरण वाले होवें इसमैं विचार नहिहै ॥ १०
इति हासके सहित विष्णुके नैवेद्य भक्षण का माहात्म्य पद्म
पुराणमैं लि॰ जैमिनीके प्रति व्यासदेवजी का वाक्यहै

व्यासउवाच अत्रतेकथयिष्यामिसेतिहासंपुरा
तनं विष्णोर्नैवेद्यमाहात्म्यंसर्वपापप्रणाशनम्
१ सेतिहासंपुनर्वच्मिशृणुविप्रसमाहितः पुरा
सीत्सुजनिर्नामब्राह्मणःशुद्धवंशजः२ शांतोदां
तोदयायुक्तोदेवब्राह्मणपूजकः हरिपूजापरश्चै
वहरिस्मरणतत्परः ३ याचकक्लेशविध्वंसीस
त्यवादीजितेंद्रियःप्रातःस्नायीनिजाचारग्राही
हिंसाविवर्जितः ४

व्यासदेवजी कथन करतेहैं हेऋषेइसमैं तेरेकों पुरातन इतिहास कथन कर्ताहुं कैसामाहात्म्यहै जिसमे सारे पापोंके नाशकरने वाला विष्णुके नैवेद्यभक्षणका माहात्म्यहै ॥ १ हे विप्र साव धान मनवालाहोकेतूं श्रवणकर इतिहास फिरतेरेकों कहताहुं पूर्व एक समय शुद्धवंशमैं उत्पन्न होएआ हुया सुजनि नाम करकें ब्राह्मणहोताभया २ कैसाकी शांतदांतमनवाला दया कर कें युक्त देवता ब्राह्मणोंका पूजक और हरिकी पूजाकरणेमैं त त्पर और हरिका स्मरण करनेवाला ३ ॥ फिरकैसा ओह ब्रा ह्मण याचनाकरने वालेयोंके जो क्लेशहै क्या दरिद्रता तिसकों दानदें २ कर दूरकरनेवाला और सत्यवादी और इंद्रियांजीत यांहोईयां जिसने और प्राताकाल स्नान करना अपने आचार धर्ममैं प्रवृत्त और हिंसा क्रोधकरके रहित ॥ ४ ॥

एकादशीव्रतरतोज्ञातिपूजापरायणः कदाचि
त्सद्विजश्रेष्ठःस्वप्नेचक्षतकेशवम् ५ श्यामं
विकचपद्माक्षंस्मेरास्यंपीतवाससं स्वर्णकुंडल
मंजीरकिरीटोज्वलविग्रहं ६ कौस्तुभोद्भासि
तोरस्कंवनमालाविभूषितं चतुर्बाहुंशंखचक्रग
दापद्मधरंप्रभुम् ७ समस्तलक्षणैर्युक्तंस्वर्णय
ज्ञोपवीतकं संप्राप्यदर्शनंस्वप्नेसविप्रोजग
तीपतेः कृतांजलिस्तमस्तौषीद्रोमांचिततनु
र्मुदा ॥ ८ ॥

और एकादशीके व्रतकरनेमैं तत्पर और जाति वांधवों का पालनकरना इसमैं युक्त ऐसा सो द्विज श्रेष्ठ एकसमय स्वप्नमैं केशवजीकों देखता भया ५ कैसे केशवजीकों जो श्याम मनोहर वर्ण वाले विकसित कमलपत्रोंकी न्यांई नेत्रजिनके और मंदहासयुक्त मुख जिनका और पीले वस्त्र जिनके फिरकैसेहैं स्वर्णके कुंडल मंजीरभूषण किरीट मुकुट इनके साथ उज्जलदेह जिनका ६ और कौस्तुभमणिकर्कै प्रकासितहै हृदय जिनका और वनमाला कर्कै भूषित चार भुजों वाले शंख चक्र गदा पद्म इनकों धारण वाले प्रभुहैं ॥७॥ फिर कैसेहैं सारे सुंदर लक्षणों कर्कै युक्तस्वर्णके यज्ञोपवीत वाले ऐसैं तिनकों प्राप्त होकर सो ब्राह्मण रोंम जिसके देहमैं खडे होगये ऐसा सोहाथ जोडकर जगतके पतिविष्णु जीको स्तुत कर्ताभया ॥८॥

सुजनिरुवाच तुभ्यंनमोस्तुजगतः सकलस्य भर्त्रेसल्लोकशोकभयरोगविनाशनाय नारायणायकमलाहृदयप्रियाय धर्मार्थकामपरमामृतदायनित्यम् ॥ ९ ॥ पापानिदेवसकलानिमयाकृतानिमत्तेनमोहवृतयासततंमुरारे तस्माद्बिभेमिजगदंबुनिधेर्गभीरान्मामुद्धरस्वनिजभक्तगतिप्रदाय ॥ १० ॥ जानामियद्यपिहरेदुरितंमनुष्योऽयंमोहमाशुलभतेभुविकैटभारे पापंतथापिचमुदासततंकरोतितस्मान्नकोप्यहमिवास्तिजनोविमूढः ॥ ११ ॥

सुजनि ब्राह्मण कहता भया॥सारे जगत के पोषण करने वाले तुमारे तांई नमस्कार होवेकैसे तुमहो श्रेष्ठ लोकांके शोक मोह भय रोग इनके बिनाश करने वाले हो फिर कैसेंके तांई नारायणजीके तांई और कमला क्या लक्ष्मीके हृदयके प्यारे और नित्यं प्राते धर्म अर्थ कामपरम अमृत क्या मोक्ष इनकों नित्यं प्रतिदेनेवाले ९ हेदेव मुरारे निरंतर मैंनें मोह वृत्तिकर सभतरां के पाप करेहैं हेभगवन् तिस संसार रूपी गंभीर गहरे समुद्रसें डरताहों अपनेभक्तोंकों गति देनेवाले तिससें मेरा उद्धार कर ॥ १० हेहरे जेकर पापोंकों जानताभीहों तदभी मनुष्य जोहे हेकैटभारे सो शीघ्र मोहकों लभताहै अर पृथिवीमैं तदभी पाप कर्ताहै वडे हर्षयुक्त तदभी मेरे जैसा दूसरा कोई मूर्ख नाहिंहै ११

दास्यामिससितंदेवंततःपास्यसिनिश्चितं कथ
मन्नमहंभोक्ष्येगोविंदेस्मिन्बुभुक्षिते ॥ १७ ॥
इतिनिश्चित्यशिष्येसरात्रौत्यक्ताशनोदकःमा
त्रानिशंप्रार्थ्यमानोबुभुजेनैवकिंचन ॥ १८ ॥
अथप्रभातेचोत्थायस्नात्वासंमार्ज्यमंदिरं प
योदुग्ध्वाप्रतिष्ठाप्यपुनःस्नात्वासमाहितः ॥
॥ १९ ॥ ससितंदुग्धमादायपिबेतिमुहुरब्रवी
त् नपपौप्रतिमातत्रमनस्येवमचिंतयत् २० ॥
नस्नानंकृतमेतेननकृतंदंतधावनं स्नापयित्वां
भसावस्त्रंपरिधायाग्रतः स्थितः ॥ २१ ॥

और दूध काढकर पकायके उसमैं खंड मिलाय कर देऊंगा तद निश्चयकर पीलऐंगे परंतु इनके भूखे होएमैं कैसे अन्न भोजन करूं १७ ऐसा निश्चय करा अर अन्न जल कुछ नहि खाया पीया और माताने वहुतसी प्रार्थना भी करी तद भी भूषा प्यासा ही सोय रहा ॥ १८ ॥ रातके वीत जानेसें उपरंत उठकर आप मंदिर कों पवित्र करा गौका दूध चोयकर पकाया भांडेमैं पायकर फिर स्नान करा सावधान मनवाला ॥ १९ ॥ खंड पायके दूधमैं उनके पास ल्याके वारं वार कहने लगा अब दूध पीओ जद फिरभी प्रतिमानैं दुग्ध नहिपिया तो फिर ऐसा चिंतन कर्ताभया ॥ २० ॥ की इनोंने स्नान नहि कराहै फिर उनकों स्नान कराया वस्त्र पहराए आगे स्थित होके कहन लगा ॥ २१ ॥

पयोगृहीत्वापाणिभ्यामुवाचप्रणयान्वितः म
यापिनैवभुक्तंभोदिनमेकंसमत्यगात् ॥ २२
॥ अतःपिवमहाराजपयइत्यब्रवीन्मुहुः नप
पौप्रतिमादुग्धंज्ञात्वैतत्सरुरोदह ॥ २३ ॥
अथतत्रतुगोविंदप्रतिमानेत्रयुग्मतः अपश्य
च्चास्रुधारांवैदृष्ट्वावालोप्यभाषत ॥ २४ ॥
किंरोदिषिपिवस्येतन्नोचेदत्रैवजीवितं त्यक्ष्या
मिपश्यतस्तेद्यसत्यमेतन्नसंशयः ॥ २५ ॥

हाथों करकै दूधको ग्रहणकर नम्रताके युक्त कहने लगा हेभग
वन् एक दिन वीत गयाहै मैनेभी कुछनहि खायाहै ॥२२॥ हे
महाराज इस कारणसें आप इस दूधको पानकरो जद फिरभी
नाहि पान करा तद एह वात जानी उसने की अव नहिही पान
कर्ती तद रोने लगा ॥२३॥ इससें उतंत प्रतिमा के दोनो ने
त्रोसें अश्रुपात चलने लगे तो उनकों देख कर वोला ॥२४॥
वालक कहने लगा रोदन कर्तेहो और इसकों नहि पीतेंहो
अच्छा मै अपना जीवन इसी जगामैं त्यागूंगा देखते २ तुमारें
इसमैं कुछ झूठ नहिहैं सत्य कहता हुं ॥ २५ ॥

इत्युक्त्वातन्मुखेदुग्धंयोजयामासहृष्टवत् प्रति
माप्यपिवद्दुग्धमित्याश्चर्यंतरंमहत् ॥२६॥
पिवंतींतांपुनः प्राहनामदेवोतिहार्षितः सर्वंपि
वसिगोविंदमदर्थंनैवरक्षसि ॥ २७ ॥ तव
पीतावशिष्टंतुमातामहसमर्पितं वुद्धंचार्पितम
स्माभिरतोविज्ञापयाम्यहम् ॥ २८ ॥ इति
श्रुत्वाथसामूर्तिःसस्मितादुग्धमत्यजत् गृही
त्वातत्करेहृष्टोनामदेवोवुभुक्षितः ॥ २९ ॥

ऐसा कहकर्के फिर प्रसन्न मन वाला दुग्धका पात्र उनकेमुख मैं जोडता भया तदप्रतिमा तिस दुग्धकों पान करनें लगीएह आश्चर्यहै ॥ २६ ॥ जददूध पिया कर्तीथी तिसकों हार्षित हुया २ नामदेव कहने लगा हे गोविंद साराही दूध पीजातेहो मेरे निमित्त कुछ नहि रखतेहो ॥ २७ ॥ क्योंकी तुमारें पीनेसें शेषरहा हुया जो होगा सो अपने नानेकों दिखाउं गा तद सो सत्य मानेगा इस वास्ते तुमारी प्रार्थना कर्ताहुं ॥२८॥ इस प्रकारका वचन सुनके तिसका सों मूर्ति मंदहास्यकर्ती २ दुग्ध कों त्याग देती भई तिसकों हाथमैं लेकर प्रसन्न चित्त वाला भूषा हुया तिसकों पान करलेता भया ॥ २९ ॥

वुभुजेमातृदत्तंयद्गृहेभोज्यादिकंस्थितं केचि
दाश्चर्यमेवेतिश्रुत्वाश्रद्दधिरेनहि ॥ ३० ॥ के
चिद्वदंतिसत्यंस्याद्भगवान्भक्तवत्सलः केचिदा
गत्यसुमतिंपप्रच्छुरिदमादरात् ॥ ३१ ॥ इत्ये
तद्भक्तिमाहात्म्यंनामदेवस्यकीर्तितम् ॥

और घरमैं जो भोज्यादिक स्थितथा सो माताने दिया तिस कों भोजन कर्ता भया इसवातकों सुन कर कईक लोक आश्चर्य मानते भये और श्रवण कर्के निश्चय नहि कर्ते भये कीएह वात सत्य हय ॥ ३० ॥ और कोई कहैंकि भगवानजी कों भक्त प्यारेहैं भक्तोंकी इच्छा पूर्ण कर्तेहैं एह वात सत्यहै और कितनेक लोक आय २ कर वडे हर्ष आदर प्यारसें सुमति कों एह वात पूछते भये की एह वात कैसें हय ३१ एह इतनीकथा नामदेव की भक्तिकी कहीहै नैवेद्यकी महिमाहै ॥

अथकेशवोपरिव्यजनकरणमहिमवर्णनं कू
र्मपुराणे अनुलिप्यजगन्नाथंतालवृंतेनवीजये
त् ॥ वायुलोकमवाप्नोतिपुरुषस्तेनकर्मणा
॥ १ ॥ पाद्मेक्रियायोगसारे ॥ मयूरपिच्छव्य
जनैर्निदाघेपूजितोहरिः ददात्यभिमतंसर्वम
चिरेणैवसत्तम ॥ २ ॥ तालवृंतकवातेनपवि
त्रांवरवायुना यैर्ग्रीष्मेवीजितोविष्णुस्तेसर्वेस्व
र्गगामिनः ॥ ३ ॥

अब केशव भगवान् जीकों पंखा झोलने की महिमा कहतेहैं कूर्म पुराणमैं ॥ जो पुरुष जगन्नाथ जीकों गंधादियों कर लेप कर्के पक्खे के साथ वीजन करे क्या झोलै तदसो पुरुष तिस कर्मके प्रभाव कर्के वायु लोकमैं प्राप्त होताहै ॥ १ ॥ पद्म पुराणके क्रियायोगसार मैं लि० हेसत्तम गरमी के दिनोंमैं मयूरके पिच्छकें साथ क्या मोरछडके साथ पूजे होए नारायण थोडे कालकरके ही अभिमत कामना देतेहैं २ और तालवृंतकी वायु कर्के क्या पंखेके साथ और वस्त्रकी वायु कर्केजो ग्रीष्म ऋतुमैं वीजन कर्तेहैं क्या झोलतेहैं सो सारेही स्वर्गके गामीहोतेहैं ॥ ३ ॥

अथचामरमाहात्म्यंकूर्मपुराणे चामरैर्वीजयेद्य
स्तुदेवदेवंजनार्दनम् तिलप्रस्थप्रदानस्यफलं
प्राप्नोत्यसंशयम् १ दद्याद्देवायचामरंमणिदंड
विभूषितं हेमरूप्यादिकंदंडंतस्यपुण्यफलंशृ
णु ॥ २ ॥ चामरव्यग्रहस्ताग्र दिव्यस्त्रीप
रिवारितः महाभोगविमानस्थश्चिरंदेवपुरेव
सेत् ॥ ३ ॥

अव भगवान् जीकों चौरी करने की माहिमालि० कूर्म पुरा
णमें कहाहै जो पुरुष देवदेव जनार्दनजीकों चौरी कर्ताहै सो
प्रस्थ प्रमाण तिलोंके दानकरनेके फलकों प्राप्तहोताहै ॥१॥ औ
र जोकोई पुरुष मणियोंके साथ शोभायमान दंडवालि अथ
वा सोने चांदीके दंडवालि चौरी विष्णु कों देताहै तिसके पु
ण्यकाफलश्रवणकर ॥ २ ॥ क्याफल होताहै चौरियां जिनके
हाथमें झोलनेमें तत्पर हाथों के अग्रभाग जिनके ऐसियों दि
व्यस्त्रियों कर परिवारेया हुया महाभोगोंकर युक्त विमानपर च
ढ कर्के देवपुरीमें जायकर चिरकाल निवास कर्ताहै ॥ ३ ॥

अथदर्पणमाहात्म्यं कूर्मपुराणे ॥ दर्पणस्यप्रदानेनरूपवान्दर्पवान्भवेत् दर्शयित्वातथातंचनाभागस्त्वथजायते ॥ १ ॥

अबभगवानजी कों सीसा दिखानेका माहात्म्य लिखतेहैं कूर्म पुराणमैं कहाहै भगवानूजी कों सीसे के दिखाने कर्के सुंदर रूपवान् दर्पित अहंकार वाला होताहै और उनकों सीसा दिखाने कर्के अभागी नहिहोताहे ॥ १

अथनृत्यगीतादिमहिमवर्णनं विष्णुधर्मोत्तरे॥
ततः प्रमुदितैर्भक्तैस्तालवीणादिभूषितैः कार
येद्गीतनृत्यादिकुर्याच्चानंदयनूजनम् ॥ १ ॥ वि
सृज्यलज्जांयेऽधीतेनृत्यतेगायतेपिच कुलकोटि
समायुक्तोलभतेमामकंपदम् २ ॥ योनृत्यति
प्रहृष्टात्माभक्तिभावैरनेकधा सनिर्दहतिपापा
निमन्वंतरकृतान्यपि ॥३॥ नारदः नृत्यतांश्री
पतेर्गेहेतालिकावादनैर्भृशं उड्डीयंतेशरीरस्थाः
सर्वेपातकपक्षिणः ॥ ४ ॥

अब विष्णुके आगे नृत्यगीतकी महिमा लिखतेहैं विष्णुधर्मोत्तरमैं कहाहै ॥ भगवानूजीकी आर्ति कर्के पीछे प्रसन्न मन वाले भक्तोंने ताल वीणादियोंकर्के भूषितोंने गीत नृत्य करना योग्यहै आनंदके उत्पन्न करने वाला ॥१ ॥ और जो पुरुष लज्जाका त्याग कर्के गायन कर्ताहै और नृत्य कर्ताहै सोक्रोड कुल कर्के युक्त मेरे पदकों प्राप्त होताहै २ जो पुरुष प्रसन्न चित्त अनेकतरों केभक्तिभाव कर्के विष्णुके आगे नृत्य कर्ताहै सो सेकडे मन्वंतरों केकरेहोए पापोंकों दग्धकर्ता है ॥ ३ ॥ नारदजी कथन कर्तेहैं अतिशय कर्के ताडियां वजा कर श्रीपतिके मंदिरमै नृत्यकरने वाले पुरुषोंके शरीरमैं स्थित जोपापहैं सो पक्षिरूप होकर्के उडजातेहैं ॥ ४ ॥

कृष्णंसंतोषयेद्यस्तुसुगीतैर्मधुरस्वनैः सामवेद
फलंप्राप्यमोदतेविष्णुसन्निधौ ॥ ५ ॥ नारदी
ये विष्णोर्नृत्यंचगीतंचनटनंचविशेषतः ब्रह्म
न्ब्राह्मणजातीनांकर्तव्यंनित्यकर्मवत् ॥ ६ ॥वा
राहे ब्राह्मणोवासुदेवार्थेगायमानोनिशंपरं न
ववर्षसहस्राणिकुवेरभवनेवसेदिति॥ ७ ॥स्कां
देगीतंवाद्यंचनृत्यंचहास्यंविष्णुकथांमुने यःक
रोतिसपुण्यात्मात्रैलोक्येपरिसंस्थितः ॥ ८ ॥

और जोकोई मधुरस्वरोंवाले सुंदरगीतों करके कृष्णजीकों प्रस
न्न कर्तेहैं सो सामवेदका पाठ करनेके फलकों प्राप्तहो करकै वि
ष्णुके समीप आनन्द भोगतेहैं ॥ ५ ॥ नारदीयमै कहाहै हे ब्र
ह्मन् ब्राह्मण जाति वालेयोंकों विष्णुके आगे नाचना गायन
करना नाट्य करणा विशेष कर नित्यकर्मोंकी न्यांई करना यो
ग्यहै ६ वाराहमैं कहाहै ब्राह्मण जाति वाला वासुदेव जीके नि
मित्त वारंवार उत्कृष्ट गायन कर्ताहै सो नौहजारवर्ष कुवेरके भवन
अलका पुरीमैं निवास कर्ताहै ॥ ७ ॥ स्कंदमैं कहाहै हेमुनेगा
यन करणा वाजे वजाने नृत्य करना हांसी करणी विष्णुकी
कथा श्रवण करणी इतने काम विष्णुके निमित्त जो कर्ताहै
सो पुण्यवान् त्रिलोकी के ऊपर स्थितहै ८ ॥

क्रियायोगसारे विष्णोरायतनेयस्तुभक्तियुक्तः प्रनृत्यति सयातिब्राह्मणश्रेष्ठतद्विष्णोः परमं पदम् ॥ ९ ॥ यस्तुगायतिगीतानिभक्त्यानारायणाग्रतः सनृपत्वमवाप्नोतिगंधर्वाणांपुरेस्थितः ॥ १० ॥ पाद्मे वीणावेणुरवोत्थेन योगीतेनप्रभुंहरिं श्रावयेत्परयाभक्त्यासयातिपरियोग्यताम् ॥ ११ ॥ वल्लकीनिनदंशब्दं यः करोतिहरेर्विभोः पुरस्ताद्यद्विजश्रेष्ठसयातिहरिमंदिरम् ॥ १२ ॥

क्रिया योगसार में लिखाहै विष्णुके मंदिरमें भक्तिके युक्त जो नृत्य कर्ताहै हे ब्राह्मण श्रेष्ठ तिसविष्णुके परम पदको प्राप्त होताहै ॥ ९ ॥ जोपुरुष नारायणजी के अग्रमें गीत गायन कर्ताहै सो गंधर्वोंके पुरमें स्थित होएआ हुया राज्यभावको प्राप्त होताहै १० पद्मपुराणमें लिखाहै वीणा वेणुके शब्द कर्के उत्पन्न होए हुए गीतकर्के परम भक्तिके साथ हरि प्रभुको श्रवण करातेहैं सो तिस परमेश्वरकी योग्यताको प्राप्त होतेहैं ॥ ११ ॥ जोपुरुष विभु हरिके आगे वीणाका शब्दकर्तेहैं सो हरिके भक्तोंके आगे विष्णुके मंदिरमें जातेहैं ॥ १२ ॥

मृदंगवाद्येनयुतंनर्त्तनंयःकरोतिवै पुरस्ताद्वासु देवस्यसभवेद्विष्णुवल्लभः ॥ १३ ॥ वृहन्नारदीये ॥ देवतायतनेयस्तुभक्तियुक्तः प्रनृत्यति गीतानिगायतियदातत्फलंश्रृणुभूपते ॥ १४ ॥गंधर्वराजतांरागान्नृत्याद्रुद्रगणेशताम् प्राप्नोत्यष्टकुलैर्युक्तआकल्पंमोक्षभाङ्नरः ॥ १५ ॥ नरसिंहपुराणे गीतवाद्यादिकंनाट्यंशंखतूर्यादिनिः स्वनम् यःकारयतिवैविष्णोःसयातिसदनंहरेः ॥ १६ ॥

और जो कोई पुरुष मृदंग वाजे कर्के भगवान् जीके आगे नृत्य कर्तेहैं सो वासुदेवजीके आगे विष्णुके प्यारे होतेहैं ॥१३ वृहन्नारदीयमैं कहाहै देवताके मंदिरमैंभक्ति कर्के युक्तजो पुरुष नृत्यकर्ताहै और जद गीतगायन कर्ताहै तिसका फल श्रवण कर ॥ १४ ॥ राग गायन करनेसें गंधर्वोंकी राजताकों प्राप्त होताहै और नृत्य करनेसें रुद्रगणोंका ईशता कों प्राप्त होताहै और आठ कुलों कर्के युक्त कल्प पर्यंत मोक्षका भागी होताहै १५ ॥ नरसिंह पुराणमैं कहाहै गाना वाजे वजानें नाचना शंखादि वाजेयोंके शब्द करने अथवा करावताहै विष्णुके आगे सो हरिके लोकमैं जाताहै ॥ १६ ॥

पर्वकालेविशेषेणकामगःकामरूपवान् सुसं
गीतविदैश्चैवसेव्यमानोऽप्सरोगणैः ॥ १७ ॥
महार्हमणिचित्रेणविमानेनविराजितः स्वर्गा
त्स्वर्गमनुप्राप्यविष्णुलोकेमहीयते ॥१८॥ अ
थगीतनृत्यप्रसंगादितिहासमाह पुनर्भूयःप्रव
क्ष्यामिभक्तेर्माहात्म्यमुत्तमं यच्छ्रुत्वाजायते
भक्तिर्वासुदेवेमहात्मनि॥ १९ ॥ जगन्नाथपुरी
प्रांतेदेशेचैवोत्कलाभिधे विंदुविल्वइतिख्या
तोग्रामोब्राह्मणसंकुलः ॥ २० ॥

पर्व के समय विशेष कर्के कामग होताहै और कामदेव के रूपकी न्यांई होताहै और संगीत के जानन वाले और अप्सरों के समूहों कर्के सेवित होताहैं ॥ १७॥ और वडे मोलकीयां मणियों के चित्रों वाले विमान पर विराजमान होएआ हुया स्वर्गसें स्वर्ग कों प्राप्त होकर विष्णु के लोंकमैं महिमा कों प्राप्त होताहै ॥ १८ ॥ अब गीत नृत्य के प्रसंगमैं इतिहास कहते हैं ॥ अब फेर भुक्तिका उत्तम माहात्म्य कहताहुं जिसकों श्रवण कर्के वासु देव महात्मा मैं भक्ति होतीहै ॥ १९ ॥ जगन्नाथ पुरी के समीप उत्कल नामा देशमैं विंदुविल्वनामक ब्राह्मणों का भरा हुया ग्रामथा ॥ २०

तत्रोत्कलोद्विजोजातोजयदेवइतिश्रुतः विद्या
भ्यासरत शांतःपुरुषोत्तमपूजकः २१ अथतत्रै
वविप्रोन्योदेवशर्मेतिविश्रुतः अनपत्योवभूवा
सौजगन्नाथमुपागतः २२ नमस्कृत्यहरिंमूर्ध्ना
स्वीचकारकृतांजलिः यदिमेसंततिर्नाथत्वत्प्र
सादाद्भविष्यति ॥ २३ ॥ अपत्यंप्रथमंतुभ्य
मर्पयिष्याम्यसंशयम् प्रतिश्रुत्यमनस्येवंसया
तिनिजमंदिरम् ॥ २४ ॥

तिसमैं उत्कल जातीका ब्राह्मण जयदेव नामक विद्याका अभ्या
सी शांत रूपी पुरुषोत्तम जीका पूजन करने वाला निवास
कर्ताथा ॥ २१ ॥ उसीमैं और एक देवशर्मा नामक ब्राह्मण
निवास कर्ताथा सो ब्राह्मण अनपत्य क्या संतानसें रहितथा
सो एक दिन जगन्नाथ पुरीमैं आय प्राप्त भया ॥ २२ ॥ तहां
मंदिरमैं शिर कर्के हरिकों प्रणाम कर हाथ जोडके स्वीकार
कर्ता भया क्या सुखन कर्ता भया क्या हेनाथ तुमारी कृपा
कर्के मेरेघर संतान होवेगी ॥ २३ ॥ तद पहली संतान तुमारे
कों अर्पण करूंगा इसमैं संशय नहि है ऐसे प्रतिज्ञा कर्के
अपने घरमैं चला आया ॥ २४ ॥

ततः कालेनकियताकन्यैका प्रथमाजनि ततः
पुत्रानलभतसाधुवृत्तान्मनोहरान् ॥ २५ ॥
ततः समनसाऽस्मृत्वासपत्नीकोद्विजोत्तमःक
न्यांगृहीत्वाहर्षेण जगन्नाथमुपागतः॥ २६॥
नमस्कृत्यजगन्नाथंदेवशर्माब्रवीद्वचः देवदेवज
गन्नाथप्रसादःफलितोमम ॥ २७ ॥ प्रथमा
तनयाजातापुत्रास्तुतदनंतरं अतः प्रतिश्रुतां
कन्यांददामिप्रतिगृह्यताम्॥ २८ ॥

तिससें उपरंत कितने क समय करके प्रथम तिसके घर एक कन्या जन्मी तिससें उपरंत फिर श्रेष्ठ वर्तन वाले सुंदर पुत्र जन्मते भये ॥ २५ ॥ तद कितने चिर काल पीछे पत्नीके सहित सो द्विजोत्तम मनमें तिस प्रतिश्रुत सुखन कों स्मरण करके दूसरें दिन वडे हर्ष कर युक्त कन्याकों लेकर जगन्नाथ जीकेमंदिरमें आया ॥२६ ॥ जगन्नाथ जीके आगेनमस्कार करके देव शर्मा कहन लगा हेदेवतयों के देवता जगतूके स्वामी भगवान्जी तुमारा प्रसाद मेरेकों फलितहुयाहैं क्या मेरे मनका मनोरथ सिद्ध हुयाहै तुमारी कृपासें ॥२७॥ परंतु एक बातहै पहले कन्या जन्मी फिर उपरंत पुत्रहुए इसकारण सेंमैंतुमारे कों प्रथमसंतान सुखन करी होइ कन्याहै सो देताहुं इसकों तुम ग्रहण करो ॥ २८ ॥

इत्युक्त्वातांकरेणासौगृहीत्वातांप्रदर्श्यच पूजके
भ्योथवृत्तान्तमादितोव्याजहारसः ॥ २९ ॥
ततोवहिः समागत्यसोवतस्थौद्विजःक्वचित् रा
त्रौतस्यचैविप्रस्यपूजकस्यजगत्प्रभुः ॥ ३०॥
स्वप्नेसकथयामासजगन्नाथोद्भुतंवचः देवशर्म
न्प्रसन्नोस्मिस्वीकृतातेसुतामया ॥ ३१ ॥परं
नुजयदेवायदेह्येनांमत्प्रियोह्यसौ अहमेवस
विद्धिनात्रकार्याविचारणा ३२ ॥

ऐसैं कथन कर हाथसैं कन्याकौं पकड कर तिनकौं दिखायके और पुजारियौं कौं उसके चढाने का वृत्तांत आदसैं लेकर सुना देताभया ॥२९ फिर तिस मंदिरसैं बाहर आनकर कहींस्थानां तरमैं बैठ जाताभया क्या उहां निवास कर्ताभया ऐसे दिनबीतग या रात पडी जद शयन करा तिसने तो उसकौं स्वप्नमैं और पु जारियौंकौं स्वप्नमैं जगत्प्रभु कहते भये ॥३०॥ जगन्नाथजी क हनेलगे अद्भुत वाणी ककैं हेदेवशर्मन् तेरी कन्या मैं ग्रहण कर लई ॥ ३१ ॥ मेराप्यारा जयदेव नामा भक्तहै और मेराही सो रूपहै इसमैं कुछ विचार नहिहै सो एहकन्या उसकौं जा कें दान करदे मैं तेरे पर प्रसन्नहां ३२

पूजकोप्येवमेवाथस्वप्नंदृष्ट्वाप्रबोधितः देवश
र्मासमागत्यस्वप्नंप्रोवाचहर्षितः ॥ ३३ ॥ श्रु
त्वेदंदेवशर्मापिस्वप्नंसत्यममन्यत पूजकंतंन
मस्कृत्यगृहीत्वातनयांनिजाम् ३४ ॥ जगाम
जयदेवस्यसन्निधौहृष्टमानसः तंतूपर्णकुटीम
ध्येग्रामाद्बाहिरवैक्षत ॥ ३५ ॥ दरिद्रंनिरपेक्षंच
शास्त्रंपश्यंतमादरात् मनसानुजगन्नाथंध्यायं
तंमुदिताननम् ॥ ३६ ॥

और इसी तरां का स्वप्न पुजारीयों कों हुयाकी तुम उस ब्राह्मण कों जाके कहो की एह अपनी कन्या जयदेवकों दानकरदे ऐसे देखकर पुजारी उठखडा हुया और उस ब्राह्मणके पास जाके हर्ष युक्त पुजारी ब्राह्मण स्वप्नका वृत्तांत कहने लगा ॥ ३३ ॥ ऐसा स्वप्न तिसका सुनके देवशर्मा सत्य मानता भया फिर तिस पुजारीकों नमस्कार करी कंन्याकों साथ लेकर उहांसें चलता भया ३४ चलता २ प्रसन्न मन वाला जयदेवके पास चला गया तो क्या देखताहै शहरसें बाहर निरंतर स्थानमैं पत्रोंकी कुटियाके मध्यमैं बैठे हुए तिसकों देखताभया ॥ ३५ ॥ कैसा जयदेव है दरिद्री इच्छाकिसी वस्तूकी नहिजिसकों और आदरसें शास्त्रकों देखताहै और प्रसन्न हास्य युक्त मुख जिसका मनकर्कें जगन्नाथजी कों ध्यानकर रहाहै ॥ ३६ ॥

प्रणम्यजयदेवंतंदेवशर्माब्रवीद्वचःइयंमेतनया
ब्राह्मनूजगन्नाथाज्ञयामय ३७नाम्नापद्मा
तीतुभ्यंदीयतेनुगृहाणतां इत्युक्तोजयदेवस्तमु
वाचमधुरंवचः॥४८॥अहंनकन्यादानस्यपा
त्रंदीनोनिकेतनः ममापिनजिघृक्षाहितांकिमि
दंभाषसेवृथा॥ ४९ ॥ जगन्नाथाज्ञयेत्युक्त्वाय
न्मांवंचयसिस्फुटं कुतएवंमतिभ्रंशोगच्छग
च्छयथासुखम् ॥ ४० ॥

ऐसे जयदेवकों नमस्कार कर देवशर्मा कहने लगा हे ब्राह्मणों
मेंश्रेष्ट एहमेरी कन्याहै जगन्नाथ जीकी आज्ञा कर्के मैने ३७
पद्मावती नामकर्के तुमकों देनीहै इसकों आप ग्रहण करो इस
प्रकार जब ब्राह्मणने जयदेवकों कहा तब जयदेव मधुरवाणी क
र्के कहताभया ४८ हेद्विजमैं कन्यादान लेने का पात्र नहि हां
क्योंकी दरिद्रीहां घरवाहर मेरा नहिहै और मेरेकों गृहस्थकी इ
च्छाभी नहिहै क्यों वृथा वातां कर्ताहैं ॥ ३९ ॥ जोतूं जगन्नाथजी
की आज्ञा ऐसे कहकर्के मेरेकों ठगताहैं कहां सेंतेरी वुद्धिमारी
गई चलाजा २ जहां सें आयाहैं ॥ ४२ ॥

आनीयपूजकंतन्तुविशर्मातियत्नतःनिवेदया
मासमुहुस्तांचनस्वीचकारसः ॥ ४३ ॥ ततः
स्वतनयांतत्रस्थापयित्वा द्विजोब्रवीत् अयंतुते
पतिः पुत्रित्वयापूज्यश्चसर्वदा ॥ ४४ ॥ पति
सेवापरानारीसुखमक्षयमश्नुते इत्युक्तातादेव
शर्मायर्योपत्न्यासहाश्रमम् ॥ ४५ ॥ सापिक
न्यास्थितातत्रजयदेवस्यसन्निधौ जयदेवस्तु
तांप्राहगतौतौपितरौतव ॥ ४६ ॥

ऐसे जब तिसने कहा तब तिस पुजारि कों यत्नसें साथ ल्याय कर स्वप्नका वृत्तांत निवेदन कर्ता भया तबभी उह जयदेव नहि स्वीकार कर्ताभया ॥ ४३ ॥ तब सो ब्राह्मण अपनी कन्या कों तिसके पास कुटियासें बाहर बिठायकर कहने लगा हेपुत्रि ए हतेरा पतिहै तैंने इसकी आज्ञामें सर्वदा कालवर्तना एही तेरे कों पूजा कें योग्यहै ॥४४॥ क्योंको पतिकी सेवामें रहने वाली नारी अक्षय सुख भोगतीहै इसप्रकार की शिक्षा तिसकों दे कर्के अपनीस्त्रीके सहित आश्रमकों चलाआया ॥ ४५ ॥ सो कन्या तिनके आये होएपीछे तहां जयदेव के पास बैठी रही तो जयदेव तिसको कहने लगा तेरे मातापिता तो चले गएहैं तूक्यों इकल्ली इहां बैठीहैं ॥ ४६ ॥

त्वांविहायत्वमप्येकाकथंस्थास्यसिकानने अ
थपद्मावतीप्राहभगवन् किंब्रवीषिभो: ४७ ॥
सुतातुपितृदेयावैसमांतुभ्यंददौपिता अतस्त
वाहंत्वंचेन्नामतिभक्तामनागसम् ४८ ॥ त्य
क्ष्यसीत्यत्रकिंकुर्यांनाहमेकात्वयिस्थिते पद्मा
वतीवचः श्रुत्वाजयदेवोप्यचिंतयत् ॥ ४९ अ
नयासत्यमुक्तंहित्यागेदोषोमहान्मम तस्मा
दस्याःपितुर्गृहंगत्वाहमनयासह ॥ ५० ॥

ओह तो तेरेको छोड गयेहैं तूकैसे इकल्ली वनमें रहेगी इतना वचन कहनेसें उपरंत पद्मावती कहने लगी आप क्या कहते हो ॥ ४७ ॥ कन्या माता पिताने दान करीदीहै सो तो मेरेको तुमारे प्रति देगएहैं अब तुम मेरे पति हो मैंतुमारी भक्ति करने वाली दासीहुं ॥ ४८ ॥ निरपराध मेरेको आप त्यागदेओगे त द क्या करोंगी और तुमारे पास होनेसें इकल्ली नहिहां ऐसा सार्थरू वाक्य पद्मावतीका सुनकर जयदेवचिंतन करनें लगा ॥ ४९ ॥इसने तो सत्य कहाहै त्यागनेमैं अबमेरेको भी वडा दोष है अब इसकारणतें इसके साथ इसके पिताके घरमैं जाकर वेदविधिसें व्याह करल्याताहुं ५० ॥

इमांप्रतिग्रहीष्यामिविधिनानात्रसंशयः इति
निश्चित्यमनसाजयदेवउवाचताम् ॥ ५१ ॥ ए
ह्यागच्छत्वयासार्धंगच्छामित्वत्पितुर्गृहं वि
धिनातत्रतेपाणिंग्रहीष्यामिनसंशयः ५२ इ
त्येवंवचनंश्रुत्वाप्राहपद्मावतीपुनः त्वदाज्ञाक
रणंधर्म इत्येवंमांपिताब्रवीत् ॥ ५३ ॥ अतःप्र
सादोथमहानित्युक्त्वाग्रेस्थिताभवत् जयदेव
स्तयासार्धंदेवशर्मगृहंगतः ॥ ५४ ॥

इसकों वेदकी विधि कर्के ग्रहण करूंगा इसमें कुछ संशय न
हिहै इस तरां मनमें निश्चय कर्के जयदेव तिसकों कहता भया
॥ ५१ ॥ इधरआ अर मैं तेरे साथ तेरे पिताके घर चल
ताहुं उहां वेदकी रीतिसें तेरा पाणि ग्रहण करूंगा ५२ इसप्र
कार का वचन श्रवण कर्के पद्मावती फिर कहने लगी तुमा
री आज्ञा माननी एही वचन पिता मेरे कों कह गयाथा ॥ ५३
इस कारण सें महा प्रसाद है क्या तुमारी कृपा ऐसा कहके
आगे चल पडती भई जयदेव भी तिसके साथ देवशर्मा के
घरमें चला गया ॥ ५४ ॥

तमुक्त्वागद्गदंसर्वंप्रतिगृह्ययथाविधि पद्मावती
तेनसार्धमाजगामनिजगृहम् ५५ उभौतौदंप
तीतत्रएकप्राणौबभूवतुः नृत्यंतौचापिगायंतौ
श्रीकृष्णार्चनतत्परौ ॥ ५६ ॥ एकदाजयदेव
स्तुमनस्येवमचिंतयत् स्वयंकृतेनगीतेनतोष
यिष्याम्यहंहरिम् ॥५७॥ इतिनिश्चित्यनिर्मा
यगीतगोविंदनामकं ॥ गायंस्तुदेवदेवाग्रेप
त्न्यासहननर्तह ॥ ५८ ॥

तिसकों गद्गद वाणी कर्के कथन कर वेद विधि कर्के ग्रहण
कर फिर पद्मा वती तिसके साथ अपने घरमैं चली आई
॥ ५५ ॥ सोदोनो स्त्री पुरुष प्रीति कर्के एक प्राण होते भयेनृ
त्य करना गायन करना श्रीकृष्णजी की पूजामैं तत्पर होते भ
ये ॥ ५६ ॥ एक दिन जयदेव मनमैं ऐसा चिंतन कर्ता भया
की अपने बनाये होए गीत कर्के हरिकों प्रसन्न करूंगा ५७
ऐसा निश्चय कर्के गीतगोविंद नामक ग्रंथ बना कर उसकों
गायन कर्ता २ देवताके आगे पत्नीके साथ नृत्यकर्ता भया
॥ ५८ ॥

एवंनित्य व्रतंतस्यतत्रैकस्मिन्दिनेपुनः निवंध
रासचरितेश्रीकृष्णोराधिकांप्रति ५९ शिर
स्याधेहिमेपादमित्यर्थककरंहृदि समायातंन
तद्दातुंशशाकेश्वरतांस्मरन् ॥ ६० अन्यदन्वेष
माणोपिनलेभेताद्दशंपदम् संस्थाप्यपुस्तकं
स्नातुंजगामान्यद्विचिंतयन् ॥ ६१ ॥ तावज्जय
देवरूपेणकृष्णस्तत्रसमागतः पद्मावतीमुवा
चाथपुस्तकंदेहीमेप्रिये ॥ ६२ ॥

ऐसा नित्यका व्रतथा तिसका तहां एक दिनमैं गायन वनोत २ रास चरित के निवंधमैं श्रीकृष्णजी का वचन राधिकाके प्रति जद उसने मान करा हुयाथा उससमय । ५९ । हेराधे प्राणेश्वरि मेरे शिर पर पाद रख और अपराध क्षमा कर इस अर्थ के करने वाला पद हृदयमैं आया तो श्रीकृष्ण जीकी ईश्वरता स्मरण कर्ता हुया उहपद नहि देता भया ॥ ६० ॥ उसके जैसा और पाद ढूंडने लगा तोऐसा पद नहि मिला तद पुस्तककों छोड कर पद चिंतन कर्ता २ स्नान करने कों चला गया ॥ ६१ ॥ उसके गयें होये पीछे जयदेव का रूप धारण कर कृष्णजी आयके पद्मावतीकों कहणे लगे हेप्रिये मेरा पुस्तक दे ॥ ६२ ॥

पद्मावतीसमानीयददौतत्पुस्तकंद्रुतं गृही
त्वापुस्तकंतत्रजयदेवेनयत्कृतम् ६३मनसात
ल्लिलेखासौजयदेवस्वरूपधृक् पुनरुत्थायस
स्नातुंजगामातित्वरान्वितः ६४ कंचित्का
लमतीत्याथजयदेवः समागतः देवानभ्यर्च्य
भुक्त्वाचगृहीत्वापुस्तकंपुनः६५मनसाकल्पितं
पादंलिखितुंचसमुद्यतः ददर्शतत्रतत्पादंना
लिखद्यदयंपुरा ॥ ६६ ॥

इतना वचन सुन पद्मावती शीघ्र पुस्तक कों ल्याय कर तिस कों देदेती भयी तद जयदेव नेजो मन कर्के कल्पना करा हुया पदथा सो जयदेव का रूप धारे होए भगवानजी लिखते भये फिर पुस्तक उठा य के तिसकों दिया स्नान करनेकों चले गए ॥ ६४ ॥ फिर कितनाक काल व्यतीत हुया तो जय देव भीआया देवताकी पूजा करी भोजन खाय कर पीछे फिर पुस्तक कों लैकर लिखने लगे ॥ ६५ ॥ वो मनकर्के और कल्पना करा हुया पद लिखने लगा तोक्या देखताहै उसमें जौनसा पद पहले नहि लिखा था सो उहां लिखाहुया देखा ॥ ६६ ॥

अन्येनलिखितंज्ञात्वाप्राहपद्मावतींप्रियां अ
यिकेनेदमालेखिजानासित्वंशुचिस्मिते॥६७॥
नाहमेतत्पदंपूर्वमलिखंनाक्षरंमम इतिश्रुत्वा
वचस्तस्यप्राहपद्मावतीप्रिया ॥६८ ॥ नाथ
कोयंभ्रमस्तेऽद्ययद्येवंभाषसेवचः स्नातुंगतस्तु
तत्कालेपुनरागत्यसत्वरम् ॥ ६९ ॥ गृही
त्वापुस्तकंमत्तोलिखित्वात्वंपुनर्गतः स्नातुमेवं
नजानामिकोन्यस्त्वत्तोत्रलेखकः ॥ ७०॥

और किसी कर्के लिखाहुया जानकर प्यारी अपनी स्त्री पद्मा
वती कों कहने लगा हे शुचिस्मिते एहकिसने लिखाहै तूं जान
तीहै ॥ ६७ ॥ क्यों की एह पद पहलें मैंनेनहि लिखाथा और
मरे अक्षरभी नहिंहैं एहवचन सुनकर पद्मावती कहनेलगी॥६८
हेनाथ एहतुमारे कों क्या भ्रम हों एआहै जो तुम ऐसे कहते
हो जद स्नान करने कों आप गएथे तत्कालही फिर परत कर
आके ॥ ६९ ॥ शीघ्र मेरेसें पुस्तक लेकर कुछ लिखाथा फिर
चले गएहों स्नान करने कों ऐसामैं जानतीहां और तुमारे विना
कौनहै लिखने वाला ॥ ७० ॥

इतिश्रुत्वाप्रियावाक्यं जयदेवोऽतिविस्मितः अ
हर्निशंतमेवार्थंचिंतयन्नालभत्सुखम् ॥ ७१ ॥
तदातस्मिन्रात्रिशेषेस्वप्ने श्रीपुरुषोत्तमः उ
वाचजयदेवंतुसुस्वप्नंमुमुदेभृशम् ॥ ७२ ॥
स्वपत्नींसुभगांमेने श्रीपुरुषोत्तमदर्शनात् त
दारभ्यातिभक्त्यावैपत्न्यासहहरिंभजन् ॥७३
गायन्वैगीतगोविंदंनृत्यन्वैकेशवाग्रतः निर्मा
यगीतगोविंदंतोषयामासकेशवम् ॥ ७४ ॥

एह अपनी प्रियाका वाक्य श्रवणकर जयदेव वडे विस्मयकों प्राप्तहोएआ हुया दिनरात उसी वात कों चिंनत कर्ता हुया सुखनहि किसी समयभी लभताभया ॥७१॥ तद तिस समय रात्रिके पहर शेषमैं स्वप्नमैं आयकर श्रीपुरुषोत्तमजी जयदेवको कहते भये तद सुंदर स्वप्न देखकर अतिशयकरके प्रसन्नहोता भया ७२ ॥ और श्रीपुरुषोत्तमजी के दर्शनसें अपनी स्त्रीकों वडी भाग्यवान् मानता भया तिसदिनसें लेकर वडी भक्ति करके पत्नीके साथ हरिका भजन कर्ता भया ॥ ७३ ॥ और गीतगोविंदकों गायन कर्ता हुया नारायणके आगे नाचता हुया गीतगोबिंद ग्रंथकों समाप्तकर केशव भगवान्जी कों प्रसन्न कर्ता भया ॥ ७४ ॥

निवेद्यकृतकृत्योभूज्जयदेवोमहामनाः ७५इति
भक्तमालायांभगवद्भक्तिमाहात्म्ये जयदेवचरि
तं समाप्तम् ॥

और तिस पुस्तक कों भगवानजी के आगे निवेदन कर सो।
महामन वाला जय देव अपने आपमैं कृतकृत्य होता भया
७५ ॥ एह भक्तमाला ग्रंथके भगवानकी भक्तिके माहात्म्यमें
जयदेवका चरित्र समाप्त हुआ



अथविष्णुपूजायां रामनामोच्चारणमाहिम व
र्णनं नारसिंहे हिरण्यकशिपुंप्रतिप्रह्लादवा
क्यम् रामनामभवरोगभेषजंरामनामजपतां
कुतोभयं पश्यतातममदेहसंस्थित:पावकोपि
सलिलायतेधुना ॥ १ तदुक्तंदानरत्नाकरे प्रा
यश्चित्तसहस्राणिकृत्वाव्रतशतानिच कलौग
च्छंतिपापानिनविष्णो:स्मरणंविना ॥ २ ॥
पाद्मे देवदूतविकुंडलसंवादे । पश्यंतिवैष्णवा:
यत्रसत्यंसत्यंमयोदितं प्राहास्मान्यमुनाभ्रा
तासादरंहिपुन:पुन: ॥ ३ ॥

अब विष्णुकी पूजामैं रामनाम उच्चारण करनेकी महिमालिख
तेहैं नरसिंहपुराणमैं हिरण्यकशिपुकेप्रति प्रह्लादका वाक्य है हे
तातरामनाम संसार रूपी बंधनोंका औषधहै और रामनामजपने
वालयोंकों किसीसेंभी भय नाहिहै देख रामनामके प्रभाव कर्के
मेरेदेहमे अग्निलगाहुया अवशीतल जलकीन्यांई आवरण कर
रहाहै ॥ १ ॥ सोई कहाहै दानरत्नाकर ग्रंथमैं प्रायश्चित्तोंके ह
जारां व्रतोंके सैकडे कर्केभी कलियुगमैं पाप विष्णुके स्मरण
विना नहि दूरहोतेहैं २ ॥ पद्मपुराणमैं कहाहै देवदूत विकुंडलके
संवाद कर्के कहाहै दूतकहताहै हमारे प्रति यमुनाका भ्राताधर्म
राज कहता भया वारंवार आदर युक्त मैने तुमारेको सत्यकहाहै
जहां वैष्णव रहतेहोवें जहांदेखतेहोवें तहांतुमने नहि जाना ३

भवद्भिर्वैष्णवास्त्याज्यानतेस्युर्ममगोचराः ये
स्मरंतिसकृदूताःप्रसंगेनापिकेशवम् ४ दुरा
चारोदुष्कुलोपिसदापापरतोपिवा भवद्भिःस
र्वथात्याज्योविष्णुंचेद्भजतेनरः ५ गोविंदेतिज
पन्योहिम्रियेतयदिकुत्रचित् सनरोनयमंपश्ये
त्तंनचेक्षामहेवयम् ६ बहुनोक्तेनकिंवैश्यकर्त
व्यंपापभीरुणा स्मरणंवासुदेवस्यसर्वपापहरं
हरेः ७ तपस्तप्त्वानरोघोरमरण्येनियतेंद्रियः
यत्फलंसमवाप्नोतितच्छ्रुत्वागरुडध्वजम् ८

और वैष्णवोंको त्यागदेना उोहमेरे अधीन नहिहै सो वैष्णव कौनसे हैं जो प्रसंग करकेभी केशव जीका स्मरण कर्तेहैं ४ ॥ और दुराचारी भी पुरुष होवे और खोटे कुलमें जन्मा हुया सदा काल पाप कर्ममें रत होए जेकर विष्णुजीको भजताहोवे सो सर्वदाकाल तुमने त्याग देना ॥ ५ ॥ और जोकोई पुरुष गोविंद २ ऐसे जपता होए जेकर सो कहीं भी मृतहोजावे सोनरयमराजको नहिदेखताहै और तिसको हम नहि देखतेहैं ६ ॥ हे वैश्य इसमें बहुत क्या कहनाहै परंतु पापोंसें भय करने वालेने सारेपापोंके हरने वाले हरि वासुदेव कास्मरण करने योग्यहै ॥ ७ ॥ नर जो मनुष्यहै सो इंद्रियांजीत कर घोर बनके मध्यमें तप करके जिस फलको प्राप्त होताहै सो फल गरुड ध्वज भगवान जीका नाम सुनने सें प्राप्त होताहै ॥ ८ ॥

पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिचता
निसर्वाण्यवाप्नोतिविष्णोर्नामानुकीर्तनात् । ९
तत्रैवप्रल्हादवाक्यं नगंगानगयासेतुर्नकाशी
नचपुष्करं जिव्हाग्रेवर्ततेयस्यहरिरित्यक्षरद्व
यम् । १० ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्व
णः अधीतास्तेनयेनोक्तंहरिरित्यक्षरद्वयम् ११
अश्वमेधादिभिर्यज्ञैर्नरमेधैः सदक्षिणैः यजितं
तेनयेनोक्तंहरिरित्यक्षरद्वयम् १२ गवांकोटि
सहस्राणिकन्यानामयुतानिच दत्तानितेनये
नोक्तंहरिरित्यक्षरद्वयम् ॥ १३ ॥

और पृथिवीमैं जितनेतीर्थहैं औरपवित्रस्थानहैं तिनसारेयोंमैं स्नान
दान निवास करनेका जो फलहै सोफल विष्णुके नाम उच्चारण
करनेसे होताहै ९ उसीस्थानमैं प्रह्लादजीका वाक्यहै कया ऐसी
न गंगाहै न गयाहै न सेतुबंधरामेश्वरहै न काशी है न पुष्कर
तीर्थहै फलदेनेवाला जैसें जिसकी जिव्हाके अग्रभागमैं हरि
एह दोअक्षर स्थितहैं उसको जैसाफलहै १० ऋग्वेद यजुर्वेद
सामवेद अथर्वणवेद एह चारोंही वेदतिसनेपढे जिसनेहरि एह
दो अक्षर उच्चारण करेहैं ११ और बहुत दक्षिणाके सहित
अश्वमेध नरमेधादियज्ञ तिसनैंही करे जिसने मुखसें हरि एह
दो अक्षर उच्चारण करेहैं ॥ १२ ॥ और गौयांके हजारां क्रोडां
कन्या के दश हजार विधिके सहितदान करनेके तुल्य उसीको
फलहै जिसने मुखसें हरि एह दोअक्षर उच्चारण करेहैं ॥ १३

प्राणकांतारपाथेयंसंसारच्छेदभेषजं दुःखक्के शपरित्राणंहरिरित्यक्षरद्वयम् ॥ १४ ॥ जितंते नजितंतेनजितंतेनेतिनिश्चयः जिव्हाग्रेवर्तते यस्यहारिरित्यक्षरद्वयम् ॥ १५ ॥ असारभवसं सारसागरोत्तारकारणं व्यसनोत्तारकंदेविह रिरित्यक्षरद्वयम् १६ विरंचिसर्वस्वे नाम्नाहरेः कीर्त्तनतःप्रयातिसंसारपारंदुरितौघमुक्तः नरः ससत्यंकलिदोषजन्यंपापं निहत्याशुकिमत्र चित्रम् ॥ १७ ॥

प्राण रूपी कांतार वनका पाथेय है क्या रस्तेका खर्चा और संसार रूपी रोग छेदन करनेका भेषज औषध है और दुःख क्लेशोसें रक्षा करने वालाहै हरि एह जौनसे दो अक्षरहैं १४ तिस पुरुष ने सभी कुछ जीत लियाहै ३ जिसकी जिव्हाकेअ ग्रमैं हरि एह दो अक्षर वर्तमान रहतेहैं ॥ १५ ॥ और असा र क्या है सार जिसका नहि ऐसाजों भव संसार रूपी सागर है तिससेंपारउतारणें का कारण है और व्यसन जो दुःख तिनसें तारने वाले हरि एह दो अक्षर हें ॥ १६ ॥ विरंचिसर्व स्व ग्रंथमैं लिखाहै कि पुरुष जो है सो हरिके नाम कीर्तन क रने सें क्या उच्चारण करने सें पापोंके समूहों कों त्यागकर सं सारके पारकों उतरता है और सो पुरुष कलि केदोषोंसें उत्प न्न होएजो पाप तिनकों शीघ्र त्यागता है इसमैं क्या आ श्चर्यहै ॥ १७ ॥

शिवसर्वस्वे यावन्नकीर्त्तयेद्रामंकलिकल्मषसं
भवं तावत्तिष्ठतिदेहेस्मिन्भयंचात्रप्रवर्धते १८
च्यवनस्मृतौप्रायश्चित्तप्रकरणे श्रुतिस्मृतिपु
राणेषुरामनामसमीरितं तन्नामकीर्त्तनंभूयस्ता
पत्रयविनाशनम् १९ सर्वेषामेवपापानांप्राय
श्चित्तमिदंस्मृतंनातः परतरंपुण्यंत्रिषुलोकेषु
विद्यतेनामसंकीर्त्तनादेवतारकंब्रह्मदृश्यते २०
माण्डव्यस्मृतौसुरापो ब्रह्महास्तेयीचौरोभग्न
हतोऽशुचिः स्वाध्यायवर्जितःपापोलुब्धोनैष्कृ
तिकःशठः ॥ २१ ॥

शिव सर्वस्वमें लिखाहै जितना काल रामचंद्रजी को नहिकीर्त्तन करे उतना काल कालि कल्मष सें उत्पन्न जो पाप सो इस देहमें स्थित रहताहै और इस लोकमें भय वधावताहै १८ च्यवन स्मृति के प्रायश्चित्त प्रकरणमें लिखाहै श्रुतियां स्मृतियां पुराण इनमें राम नाम उच्चारण की महिमा लिखीहै और तिनके नामका उच्चारण तापत्रयों के नाश करने वालाहै ॥ १९ ॥ और एह राम नाम सारे पापोंके नाश करने वाला प्रायश्चित्त कथन कराहै और इससेंपरे त्रिलोकीमें पवित्र मंत्रकोई नहिहै क्यों जिस नाम के कीर्त्तनसें तारक ब्रह्म देखनेमें आताहै २० मांडव्य स्मृतिमें कहाहै सुरापान करने वाला ब्रह्महत्या वालास्वर्ण चुराणे वाला और चोर अर भागकरके युद्धसेंजोचला आया फिर मारा गया और स्वाध्याय कर्के रहित पापी वंधकी नैष्कृतिक शठ ॥ २१

पराशीवृषलीभर्त्ताकुंडाशीसोमविक्रयी सोपि मुक्तिमवाप्नोतिविष्णोर्नामानुकीर्तनात् २२या ज्ञवल्क्ये नतावत्पापमस्तीहियन्नाम्नानहतंहरेः अ.तिरेकभयादाहुः प्रायश्चित्तांतरंवृथा २३चतु र्वर्गचिंतामणौ श्रीभगवंतंप्रति रुद्रवाक्यं त्व न्नामकीर्त्तनाद्विष्णोपूतःपूज्योजनैरहं त्वंहासि सर्वजंतूनांमलंतेनहरिःस्मृतः २४वैष्णवाचिंता मणौ नारदंप्रति युधिष्ठिरवाक्यं श्रुतोधर्मोबहु विधोह्यनंतफलदोमया नामसंकीर्तनफलंतदा चक्ष्वमुनेऽधुना ॥ २५ ॥

परान्नखानेवाला वृषली शूद्रिणीकाभर्ता और पिताके प्रत्यक्ष होते जारतें उत्पन्न जो पुत्र तिसका अन्न खाने वाला और सोमरस वेच नेवाला सोभी विष्णुके नामोंके कीर्तनसें मुक्तिकों प्राप्त होता है २२ ॥ याज्ञवल्क्य स्मृतिमें कहाहै ऐसातो कोई पाप नहिहै जो हरिके नाम करकें दूरनाहि होताहै परंतु प्राय श्चित्त जो क हतेहैं सो अतिरेक भय सें वृथा कहते हैं ॥ २३ ॥ चतुर्वर्ग चिंता मणि मैं भगवान जीके प्रति रुद्रजीका वाक्यहै हेवि ष्णो तुमारे नाम के उच्चारण करने सें मैं पवित्रहो जनों करकें पू जा करेया जाताहुं आप सारे जीवोंके पाप दूरकर्तेहो इसवास्ते तुमारे कों हरि कहतेहैं ॥ २४ ॥ वैष्णव चिंतामणि मैं नारदजी केप्रति युधिष्ठिरजीका वाक्यहै हेऋषे तुमारे मुखसें अनंत फल देने वाले वहुत तरोंके धर्म श्रवण करेहैं अब नाम संकीर्तन का फल कथन करोसो श्रवण करने की मेरी इच्छाहै ॥ २५

श्रुत्वायुधिष्ठिरवचः परयामुदासप्राहेदमाशुमु
निपुंगवनारदोपि नामानुकीर्तनभरेणहरेर्नितां
तरोमांचसंहातिविचित्रितसर्वगात्रः २६ नारद
उवाच नदेशनियमोराजन्नकालनियमस्तथा
विद्यतेनात्रराजेंद्रविष्णोर्नामानुकीर्त्तने २७
कालोस्तिदानेयज्ञेवास्नानेकालोस्तियज्जपे वि
ष्णुसंकीर्तनेकालोनास्त्यत्रपृथिवीपते २८ ॥
गच्छंस्तिष्ठन्स्वपंश्चापिपिबन्भुंजन्भजन्स्थि
तःकृष्णकृष्णेतिसंकीर्त्यमुच्यतेपापपंजरात्२९

इस प्रकार युधिष्ठिर राजा का वचन श्रवण कर मुनि
यों मैं श्रेष्ठ नारद भी परम हर्ष कर्के शीघ्र ऐसे कहता भया कै
सा नारदहै हरिके नामों का जो कीर्तनभर तिस कर्के अतिश
य कर रोमों का समूह ऊंच होने कर्के क्या रोम २ खडा हो
ने कर्के विचित्र क्या प्रफुल्लित अंगो वालाहै २६ नारद जी क
हतेहैं हेराजन् युधिष्टिर इस परमेश्वर के भजन करने मैं काल
कानियम नहिहै और देशका भी नियम नहिहै २७ देश का
ल जोहै सो दान करने मैं हय और स्नान करने मैं हय यज्ञ क
रने मैं हय और मंत्रों के आराधनमैं भी हय हेपृथिवीपते वि
ष्णु संकीर्तन मैं काल देश कोई नहि हय २८ चलता २ पुरुष
खडा २ सोया हुया पान कर्ता हुया भोजन कर्ता हुया बैठा
२ हेकृष्ण २ ऐसें कीर्तन कर्के क्या इच्चारण कर्के पापरूपी
पिंजरेसें मुक्तहोता हय २९

सस्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः सर्वदान
फलंप्राप्तोयस्तुसंकीर्त्तयेद्धरिम् ॥ ३० ॥
उमाशिवसंवादे उमांप्रतिशिववाक्यम् हिम
वद्विन्ध्ययोर्मध्येजनाभागवतास्थिताः उच्चा
रयंतिरामेतियेतेभागवतोत्तमाः ॥ ३१ ॥ अब्
जाक्षिस्मरणंविष्णोर्वंह्वायासेनसाध्यते ओ
ष्ठस्पंदनमात्रेणकीर्त्तनंतुततोवरम् ॥ ३२

ओह पुरुष सारे तीर्थोंमैं स्नान कर आयाहै और सारे यज्ञोंमैं दीक्षा भी उसीकों हुईहै और सभतरां के दान भी उसीने करें हैं जो हरि के नामों का उच्चरण कर्ताहै ॥ ३० ॥ गौरी शिवजी के संवादमें गौरी के प्रति शिवजी का वाक्य है हिमाचल विंध्याचल इनदोनों पर्वतों के मध्यमें भगवान जी के भक्त लोक रहतेहैं परंतु राम २ मुखसें जो उच्चारण कर्तेहैं सो उत्तम भगवान् जीके भक्तहैं ॥३१ ॥ हेकमलकी न्यांई नेत्रों वालि विष्णु का स्मरण वडे यत्न करसिद्ध होताहै परंतु जिस भजनमे ओष्ठ पुटक हलताहै सोभजन अच्छाहै ३२

ईशोहंसर्वजगतांनाम्नांविष्णोर्हिजापकः सायं
सत्यंवदाम्येवं हरेर्नामगतिर्नृणाम् ३३ प्रायश्चि
त्तप्रकरणे रामेतिकीर्तनंराजन्सर्वरोगनिवारणं
प्रायश्चित्तंहिपापानांमुक्तिदंसर्वदेहिनाम् ३४
अथागमशास्त्रेवृहद्गौत्तमीये कुष्ठरोगीभवेल्लोके
वहुधाब्रह्महानरः सकृदुच्चारितंनामहरेस्तत्क्षप
यत्यहो ३५ ॥ विष्णुयामलेरुद्रंप्रति श्रीभगव
द्वाक्यम् ममनामानिलोकेस्मिन्सर्वदायस्तुकी
र्त्तयेत् तस्यापराधकोटीस्तुक्षमाम्येवनसंशयः ३६

मैं जोसारेजगतका स्वामी हां सो विष्णुके नामोंका ही स्मरण करनेके प्रभावसें हां सत्य ३ मैं तेरेआगेकहताहुं हरिका नामही पुरुषोंकी गतिहै ॥ ३३ ॥ प्रायश्चित्त प्रकरणमैं लि० हेराजन् राम ऐसे जो उच्चारण करनाहै भक्तिश्रद्धा कर्कै सो सारे रोगों का निवारण करने वालाहै और पापोंके शोधन करनेवाला सारें देह धारियां कों मुक्ति देने वालाहै ॥ ३४ ॥ आगमशास्त्रके वृहत् गौत्तमीयग्रंथमैं लि० ॥ इससंसारमैं कुष्ट रोगी वहुतहैं और वहुततरोंके ब्रह्महत्यारेहैं तदभी एकवार हरिका नाम उच्चारण कराहुया पापों को तत्क्षण दग्ध करलेताहै ॥ ३५ ॥ विष्णु यामलमैं रुद्रजीके प्रति श्रीभगवान्जीका वाक्यहै मेरेनामोंकों इससंसारमैं जोसर्वदाकाल कीर्तनकर्ताहै तिसके अपराधोंकेक्रोडांक्षमा करदेताहुं इसमैं संशयनहिहै ३६

गौत्तमीतंत्रे शिविराजानंप्रति नारदवाक्यम् नताद्दशंमहाभागपापंलोकेषुविश्रुतं याद्दशंधरणीनाथहरिनाम्नानदह्यते ३७ आश्वलायनतंत्रे येकीर्त्तयंतिनामानिविष्णोरतुलतेजसः सर्वधर्मबाहिर्भूतास्तेपियांतिपदंहरेः ३८ विरंचतंत्रेइंद्रद्युम्नंप्रतिब्रह्मवाक्यम् पूजयस्वजगन्नाथंसर्वतंत्रेषुगोपितं गुह्याद्गुह्यतरंनामकीर्तयस्वानिरंतरम्॥ ३९ ॥

गौतमीतंत्रमैं शिवि राजाके प्रति नारदजीकावाक्य है हेमहाभाग ऐसा पाप संसार मैं कोई मैंने नहिसुनाहै जो पाप हेपृथिवीके नाथ स्वामि हरिके नामकर्के दग्धनहि होता है ॥ ३७ ॥ आश्वलायन तंत्रमैं लि० ॥ जो पुरुष अतुल तेजवाले विष्णुके नामोंका कीर्तन कर्ते हैं सोसारे धर्मोंसेंभी बहिर्भूतहोवें तदभी हरिके पदकों जातेहैं ॥ ३८ ॥
विरंच्चितंत्रमैं इंद्रद्युम्न राजाके प्रति ब्रह्माका वाक्य है हेराजन् सारे तंत्रोंमें गुप्तजो जगन्नाथजी तिनकापूजन कर और गुप्तसें गुप्तजो उनका नाम तिसका सर्वदा जप कर ॥ ३९ ॥

यस्तुसंकीर्तयेन्नित्यंजगन्नाथमतंद्रितः विमुक्तः सर्वपापेभ्योमुक्तबंधः परंब्रजेत् ॥ ४० ॥ मेरु तंत्रे नाम्नांमुख्यतरंविष्णोजगन्नाथेत्युदीरितम् नातःपरतरंनामत्रिषुलोकेषुविद्यते ॥ ४१ ॥ नगंगास्नानमेतादृक्नकाशीगमनंतथा जग न्नाथेतिसंकीर्त्यनरःकैवल्यमाप्नुयात् ४२ नारा यणतंत्रे ब्रह्महास्वर्णहारीच सुरापीचापिवान रःनारायणेतिसंकीर्त्यमुच्यतेनात्रसंशयः ४३

जोपुरुष निरालस होके नित्यप्रति जगन्नाथजीका कीर्तन करताहै सो सारे पापोंसे मुक्त होएआ हुया मुक्तबंधन होके परं ब्रह्ममें प्राप्तहोताहै ॥ ४० ॥ मेरुतंत्रमें लि० ॥ नामोंमे मुख्यतर जो नाम जगन्नाथ ऐसे कथन करना चाहिए इससें परें श्रेष्टनाम त्रिलोकी में भी और नही है ॥ ४१ ॥ ऐसा नगंगाकास्नानहै नकाशी की यात्राहै जैसे जगन्नाथ ऐसे कह कर्कें पुरुष कैव ल्य पदकों प्राप्त होता है ॥ ४२ ॥ नारायण तंत्रमें कहाहै ब्रह्म हत्या करने वाला स्वर्ण चुराणे वाला और सुरापान करने वा ला जो नरहैं सो नारायण ऐसें कथनकर पापोंसें मुक्तहोताहै इसमें संशय नहिहै ॥ ४३ ॥

काश्यपपांचरात्रे नारदंप्रति श्रीभगवद्वाक्यम्
येगृह्णंति निरतरं ममपदंरामतिभक्तोत्तमाः
अंतः संभृतहर्षजातपुलकाजातप्रमोदाश्रवः
तेनिस्तीर्यभवार्णवंसुतकलत्राद्यैश्चनक्रैर्युतं तृ
ष्णावारिसुदुस्तरंमयिपुनस्सायुज्यमायांति वै
४४ ॥ वामनभवदासीये पृथिव्यांकतिधालो
कानजाताकतिनोमृताः मुक्तास्तेत्रनसंदेहोये
हरेर्नामकीर्त्तकाः ४५ ॥

काश्यप पांचरात्र ग्रंथमें नारद मुनिके प्रति भगवानजीकावाक्य है हेनारद जो पुरुष सर्वदाकाल मेरे इस राम पदमात्रकों ग्रहणकर्तेहैं क्या उच्चारण कर्तेहैं सो तो उत्तम भक्तहैं कैसें ओह भक्तहैं अंतः करण मैं इकठा हुया २ जोहर्ष आनंद तिसतें उत्पन्न हुया पुलक रोमांच जिनका और सुननेसें प्रसन्नता कर्के अस्रु हुईहै ऐसेजो पुरुष संसार रूपी समुद्रको तरकर्के मेरीसायुज्य मुक्तिकों प्राप्त होतेहैं कैसा ओह समुद्रहै तृष्णा रूपी समुद्र कर्कें भराहुया वड क्लेशकर तरने योग्यहै और स्त्री पुत्र पौत्रादि रूपी जो नक्र वडे २ जलजीव तिनों कर भरा हुया ॥ ४४ ॥ वामन भवदासीयग्रंथमैं लि० है पृथिवी में कितने तरोंके लोकहैं और कितने तरोंके मर गएहै परंतु इनमैंसे ओही पुरुष मुक्तहैं जो हरिके नामकों कीर्तन करने वालेहैं ॥ ४५ ॥

वसिष्ठतंत्रे हरिपूजापरोयस्तुहरिनामपरायणः
सस्नातः सर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः ४६ ग्रं
थांतरे ॥ श्रीशब्दपूर्वंजयशब्दमध्यंजयद्वया
नंतरतस्तथैव त्रिः सप्तकृत्वोरघुनाथनामजप
न्निहंतिद्विजकोटिहत्याम् ४७ अन्यत्रापि अथ
पातकभीतस्त्वंसर्वभावेनभारतविमुक्तान्यसमा
रंभो नारायणपरोभव ४८ श्रीमद्भागवतेअजा
मिलप्रस्तावे परीक्षितंप्रतिशुकदेववाक्यम् न
तथाह्यघवान्राजन्पूयेततपआदिभिः यथाकृ
ष्णार्पितप्राणस्तत्पूरुषनिषेवया ४९

वसिष्ट तंत्रमें लि० है जोपुरुष हरिकी पूजामें तत्परहै और हरि
कानाम जपने मेंतत्परहै सोइपुरुष सारे तीर्थोंमें न्हायाहै और सारे
यज्ञोंमें दीक्षित भी ओही हय ४६ किसी ग्रंथमे ऐसेभी लिखा
है श्रीशब्दआदमें देना जय शब्द मध्यमें देना फिर रघुनाथ पद
के अंतमें दो जय शब्द देने ऐसें मंत्र बनायकर २१ इकीस वार
पाठ करे तद हेद्विज क्रोडकरी होइ हत्याकों दूरकरताहै ४७ और
कहिंभीलि० हेभारत जेकरतूं पापोंसें डरताहैं तद सभतरांके भाव
कर्के सारे आरंभ त्यागकर नारायणमें तत्परहो ४८ श्रीमद्भाग
वतके अजामिलकी कथाके प्रस्तावमें परीक्षितकें प्रति शुकदेव
जीका वचनहै हेराजन् इसप्रकार पापी पुरुष तप
आदियों कर्के पवित्र नहि होताहै जैसें श्रीकृष्णजीमें चित्त
लगाय कर तिनके भक्तों की सेवा करणे कर्के शुद्ध होताहै ४९ ॥

सध्रीचीनोह्ययंलोकेपंथाक्षेमोकुतोभयः सुशी
लासाधवोयत्रनारायणपरायणाः ॥ ५० ॥प्राय
श्चित्तानिचीर्णानिनारायणपराङ्मुखं ननिष्पु
नंतिराजेंद्रसुराकुंभमिवापगाः ॥ ५१ ॥ सकृ
न्मनः कृष्णपदारविंदयोर्निवेशितंतद्गुणरा
गयैरिह नतेयमंपाशभृतश्चतद्भटान्स्वप्नेपिप
श्यंतिहिचीर्णनिष्कृताः ॥५२॥ अत्रैवोदाहरंती
ममितिहासंपुरातनं दूतानांविष्णुयमयोः संवा
दस्तंनिबोधमे ॥ ५३ ॥

नहिहै काहूँसें भय जिसमैं ऐसा कल्याणका मार्ग इस संसारमैं एह बहुत सुखालाहै जिस मार्गमैं नारायण परायण सुशील श्रेष्ट व्रतों वाले साधु वर्ततेहैं ॥ ५० ॥ और नारायणसें पराङ्मुख जो पुरुष सो प्रायश्चित्त भी करे तद भी हेराजेंद्र तिसकों नहि पवित्र कर्तेहैं जिस प्रकार नदियां मदिराके कुंभकों पवित्र नहि कर्तीयांहैं ॥ ५१ ॥ एक वार भी कृष्णजी के गुणानु वाद श्रवण कर उनके चरणोमैं लगायाहै मन जिनोंनें सो पुरुष यमकों और फांसियांधारणे वाले यमके दूतोंको स्वप्नमे भी नाहिदेखतेहैं कैसे पुरुष हैं व्रतादियोंके करने करकैं शुद्ध होए हुएहैं ॥ ५२ ॥ अब इसमैं प्राचीन इति हास कथा कथन कर्ताहुं और विष्णुके दूत धर्म राजाके दूत इनोंका संवादतूं श्रवण कर ॥ ५३ ॥

अजामिलकथांवक्ष्येपरमाश्चर्यकारिणीं यस्मि
न्नामचमाहात्म्यंव्यक्तंचक्रेजनार्दनः॥ ५४ ॥आ
सीत्काश्चिद्द्विजःपूर्वमंतर्वेदीतिविश्रुतः कान्य
कुब्जोतिधनवान्सर्वधर्मविवर्जितः ॥५५ ॥ दुः
संगविवशाद्विप्रोवेश्यायांनिरतोभवत् मद्यंवा
पिपपौनित्यंमांसमश्नातिनित्यशः ॥ ५६ ॥
विसस्माऽनिजज्ञातिकर्मनामतथाहरेः एवंभूतो
बंधुवर्गैस्त्यक्तोग्रामसमीपतः ॥ ५७ ॥ निर्माय
भवनंवेश्यांसंरक्ष्यगृहिणीमिव उवासग्रामाद्वा
ह्येसचांडाल इवचापरः ॥ ५८ ॥

अब इसमें बडे आश्चर्यके करणेवाली अजामिलकी कथा कथन करतेहैं जिसमें भगवानजी अपनें नामके माहात्म्यकों प्रगटकरते भए५४पूर्व एक समय अंतर्वेदी देशके मध्यमैं कान्य कुब्जजाती वाला धनवान् सारे धर्मोसैंवाहर करा हुयाअजामिल नामकर्के ब्राह्मणनिवास कर्ताथा ५५ सो खोटी संगातिके वशतें वेश्या गमन करनेमैं तत्पर होताभया नित्य मदिरा पान कर्ता भया और मांसभी नित्यं प्रति खाता भया ॥५६॥ और सो ब्राह्मण अपनी जातिका जोब्रह्मकर्म और हरिकानाम तिसकों विसार देता भया इस प्रकार का जद होगया तद बांधवों ने मिल कर जातिसैं वाहर करदिया ॥५७॥ तद तिसनें ग्रामके वाहर सुंदर एक स्थान वनायकर जिसमें वेश्याकों विवाहित स्त्रीकी न्याईं रख कर दूसरे एक चांडालकी न्याईं निवास कर्ता भया५८॥

परंतु स्वगृहद्वारमंगनंचापिसर्वदा ब्राह्मणाश्र
मवत्स्फीतं ररक्षाजामिलंतुसा ५९ ॥ एवंनि
नायकतिचित्समास्तत्रद्विजाधमः गृहिण्यावे
श्यपयारेमे मद्यपानरतः सदा ॥ ६० ॥एकदा
तत्समीपेचग्रामेतत्रागतोतिथिः सायंकालेवि
ष्णुभक्तः शालग्रामशिलांवहन् ॥ ६१ ॥ कंचि
दाहातिथिःप्रेम्णानिश्यत्रानिवसाम्यहमस्थ
लंदर्शयवासार्थंसोब्रवीच्चातिदुर्जनः ६२

परंतु अपने घर का द्वार और वेडासर्वदा ब्राह्मणोंके आश्रम कीन्यांई वनाय रखतीभई ऐसे आश्रम में अजामिल कों भी रखतीभई ॥५९ इस प्रकार कितनेक वर्ष सो द्विजाधम गृहिणी वेश्याकर्के सर्वदा काल मद्य पान करने मे रत होएआ हुया व्यतीत कर्त्ताभया ६० एक दिन तिसघरके समीपवर्ती ग्राममें कोई शालग्राम की शिला लिये हुए सायं कालके समय अतिथि साधु आयकर प्राप्त होएआ ॥६१॥ किसीक पुरुष कों वडे प्रेमकर मधुर वाणीसें कहने लगा वा वा मैने रातभर रहनाहै कोई जगा मेरेंकों दिखा ॥ ६२ ॥ -

ग्रामाद्वाह्येमहानेकोधर्मात्माजामिलोद्विजः शु
श्रूषतिससर्वं र तुभोजनास्तरणादिभिः ६३ ॥
इत्युक्तःसगतोदुष्टःसोतिथिस्तत्रचागतः द्वा
रदेशादाजुहावनाम्नाचाजामिलस्यवै ॥ ६४ ॥
श्रुत्वातद्गृहिणीवेश्यासमागत्याब्रवीच्चतं को
सिकस्मादिहायातः किमर्थतमिहेच्छसि ६५
सउवाचततः साधुःपथिकोनिवसाम्यहम् ग
तःपूर्वमहंग्रामे तत्रत्योमामुवाचह ॥ ६६ ॥

सोदुष्ट पुरुष वोला हेसाधो ग्रामसें वाहर वडा एकधर्मात्मा अ जामिल ब्राह्मण निवास कर्ताहै सो भोजन विछावने और तरें की सेवा कर्के सेवताहै उहांचलाजा ॥ ६३ ॥ इसप्रकार कथन करा हुया सो अभ्यागत उहां आया अजामिलका नामले २ कर्के द्वारदेशसें वुलावता भया ॥ ६४ ॥ उसकी घरवालीवेश्या शब्द श्रवण कर उहां आके तिसकों कहने लगी तूं कौन हैं कहांसें आया हैं क्या तेरा प्रयोजनहै किसवास्ते तिसकों वुलाताहैं ॥ ६५ ॥ इतना वचन सुनकर साधु वोला मार्गमें चलनेवाला साधु हां रात भर रहनाहै सो मै पीछेके ग्राममे रातरहनेकी जगा मैंने पूछी उहांके लोक कहनेलगे शहरसें वाहर धर्मात्मा अजामिलहै उसके पास जा सोसभतरांसें तेरी टहल सेवा करेगा ॥ ६६ ॥

ग्रामाद्बाह्येतिधर्मात्माविप्रोऽजामिलसंज्ञकः त
अगच्छनिवासायसतेवासंप्रदास्यति ६७ ॥
इत्युक्तोहामिहायातः क्वचास्तेऽजामिलःसतु इ
तिश्रुत्वातुसावेश्यावहिर्वेश्मनितंतदा ६८ ॥
निवासायददौस्थानंसनास्तिभवनेऽधुना आ
गमिष्यतिचेत्त्वांतुनमस्यतिनसंशयः ६९ ॥
अथसाशीघ्रमागत्यग्रामेकंचिज्जनंतदा समा
नीयोत्तमान्नादिभोजनाद्यर्थमाहरत् ७० ॥

ग्रामसें वाहर धर्मात्मा अजामिल नामक ब्राह्मणहैउसके जा तेरे कों निवासके वास्तें स्थान देवेगा ६७ ॥ इसप्रकार कहा हुयामैं इहां आया हांसो अजामिल कहांहै ऐसें बचन सुनकर सोवेश्या उसी समैं तिसकों वाहरकें घरमैं ६८ ॥ निवासके वास्ते स्थान देके कहन लगी सोतो अब घरमैं नहिंहै जेकर आय जाताहै तदसोभी तुमकों नमस्कार करेगा इसमैं संशय नहिंहै ६९ इससें उपरंत सोशीघ्र ग्राममें आय कर किसी वाणिये कों साथ लेकर वडे २ सुंदर पदार्थ तिसके भोजनके वास्ते ल्यावती भई ७०

ततःप्रांजलिराहेदंकूपोयमुदकंततः गृहाणना
हमुदकंदातुंयोग्यांत्यजाधमा॥७१। इतिश्रुत्वा
द्विजस्साधुस्तद्बाहिर्मंदिरेस्वयं उपलिप्यशुचौ
देशेपक्वादेवंसमर्प्यच ॥७२॥ वुभुजेनिशिसु
ष्वापसप्रीतेनांतरात्मना अथार्धरात्रसमयेवा
रुणीमदाविव्हलः॥७३॥ अजामिलःसमायातो
निन्येतंसाद्भुतंगृहे अथरात्र्यांव्यतीतायांप्रभा
तेसोऽतिथिर्द्विजःगंतुंप्रवृत्तोद्वारिस्थआजुहाव
पुनश्चतम् ॥ ७४ ॥

तिससे उपरंत हाथ जोडकर वोली हेसाधो एह खूहाहै इसका जलनिकाल ले मैं अंत्यज म्लेछ जातीहां मैनेअपना हाथ नहि लगानाहै॥७१॥एहवचन सुनकर सो व्राह्मणसाधु तिसके घरके वाहर सुंदर चौका लगाय पवित्र स्थान वनायकर भोजन तियार करके विष्णुकों नैवेद्य लगाया आपभी भोजन करा प्रसन्नमनहो करके रात कों सोयरहा ॥७२॥ इससें उपरंत वारुणी मदिराके पान करके मस्त व्याकुल होएआ हुया आधी रातके समय अजामिल आया तद तिसकों वेश्याशीघ्र घरके अंदरले गई ॥७३॥ अव इससें उपरंत रातके व्यतीत होए हुए निर्मल प्रभात का समय जद हुया तद निद्रा त्याग परमेश्वर का स्मरण कर जाने लगा तव फिर द्वारमैं स्थित होकर अजामिलकों वुलाने लगा ॥७४॥

तदेवंरात्रिवृत्तांतमुवाचाजामिलायसा पुनराह
व्रजाशुत्वंगत्वातंचनमस्कुरु ॥ ७५ ॥ सदा
स्यतिवरंचैवंपुत्रंवरयमेप्रियं इतिश्रुत्वागतोद्वा
रितंसाधुंप्रणनामह ॥ ७६ ॥ तमाहसाधुः सं
तुष्टस्त्वयिदास्यामितेवरं ब्रूहीतिश्रुत्वाप्रोवाच
प्रांजलिः सोप्यजामिलः ॥ ७७ ॥ भगवन्ननप
त्योहंपुत्रोमेजायतामिति प्रार्थयामिवरंत्वत्तो
नान्यमिच्छाम्यहंवरम् ॥ ७८ ॥

सोवेश्या तिस रात्रिके वृत्तांतको अजामिलके तांई श्रवण क
रावती भई फिर कहने लगी सो जाने वालाहै तूंशीघ्र उसके पास
जाके नमस्कार कर ॥ ७५ ॥ सो तेरेको प्रसन्न होएआ हुया
जेकर तेरेको वर देवेगा तद मेरा प्यारा पुत्र वरना क्या एह क
हना की इस वेश्यामे पुत्रहोवे एह वचन सुनकर अजामिल द्वा
रपर जाके तिस साधुको प्रणाम कर्ताभया ॥ ७६ ॥ तद तिस
को सोसाधु बोला मैंतुमारे पर प्रसन्न हुयाहां तेरेको वर देताहुं
जो तेरी इच्छाहै सो वर मांग ले एह वाक्य श्रवण कर सो अ
जामिल हाथ जोड कर बोला ॥७७॥ हेभगवन् मैं विना संता
नके हां मेरे घर पुत्र होवे एही वर तुमारे सें मांगताहुं और कि
सीकी इच्छा नहिं कर्ताहुं ॥ ७८ ॥

इतिश्रुत्वावचस्तस्यसोऽतिथिःप्राहतंवचः अ
होतेभवितापुत्रः सत्यमेतन्नसंशयः ॥ ७९ ॥
परंतुतस्यनामाहोनारायणइतित्वया रक्षित
व्यमितिसोतःस्थापनीयोमदीरितम् ॥ ८० ॥ इ
त्युक्त्वासगतोविप्रोजामिलोप्यगमद्गृहं वेश्या
यैसर्वमाचष्टश्रुत्वासापिजहर्षच ॥ ८१ ॥ ततः क
तिपयेकालेजातेसागर्भवत्यभूत् सुषुवेदशमे
मासिपुत्रंसर्वांगसुंदरम् ॥ ८२ ॥

एह वचन सुनकर तिसका सो अतिथि साधु तिसकों कहने लगा अछा तेरे घर पुत्र होवे गा एह वात सत्यहै इस मैं संशय नहिहै ॥ ७९ ॥ परंतु तिसका नाम मेरे कहने सें नारायण ऐसे रखना और तिसकों अंदरमैं स्थापन करना ८० ॥ ऐसा कहकर सो व्राह्मण कहीं चला गया और अजा मिल भी अपने घर कों चला आया सो सारा वृत्तांत वेश्या के तांई कह दिया सुन कर उोह प्रसन्न भई ॥ ८१ ॥ तिससें उप रंत कितनेक समयके व्यतीत होगए पीछे सोगर्भवती होई दश म मासमैं सारे अंगोंसें सुदर मनोहर बालक जन्मती भई ॥ ८२ ॥

ततोनामापिचक्रेसनारायणइतिस्फुटं सोप्यव
र्द्धतकालेनयुवावस्थामुपागतः ॥ ८३ ॥ अजा
मिलोतिवृद्धोभूज्जरयाजर्जरीकृतः तथापिमदि
रापानंमांसाहारंनतत्यजे ॥ ८४ ॥ अथसो
जामिलोरोगान्म्रियमाणोगृहेस्थितः शय्या
यांसेवितः प्रीत्यारुदंत्यावेश्ययासह ॥ ८५ ॥
अथतंम्रियमाणंतुज्ञात्वावैवस्वतःप्रभुः प्राहदू
तान्दंडपाशहस्तानातिभयंकरान् ॥ ८६ ॥

तद नारायण एह स्फुट प्रसिद्ध नाम रखता भया तो सोवालक अपने समयकर्के युवावस्थाकों प्राप्तहोएआ ॥८३॥ अजामिल वृद्धाऽवस्थाकों प्राप्त होगया जरा कर्के जर्जरीदेह जिसकाहोग या तदभी मांस मदिरा कों नहि त्यागता भया ॥ ८४ ॥ इस सें उपरंत सो अजामिल रोगसें मरणके तुल्य घरमें स्थित श य्यापर लंवापड रहता भया तोरोदन कर्ती वेश्यानें वडीप्रीति कर्के सेवा करीदीभयी ॥ ८५ ॥ अव इससें उपरंत धर्म्मराज़ मरणे वालेतिसकों जानके वडे भयंकर दंडफांसियां हाथ वाले दूतोंकों कहता भया ॥ ८६ ॥

यातयूयंकान्यकुब्जोम्रियमाणोतिपातकी जा
त्याद्विजःकर्मणाऽसौचांडालादधिकोऽभवत् ॥
८७ तमानयित्वापाशेनबद्ध्वात्रनरकेषुच पा
तयध्वंनतंचाहंद्रष्टुमिच्छामिपापिनम् ॥ ८८॥
इत्याज्ञांशिरसाधृत्वागतास्तेयमकिंकराः दंड
पाशधराःसर्वेदीर्घदंष्ट्राभयंकराः ॥८९॥ आग
त्याजामिलगृहेतंपाशैर्बद्धुमुद्यताः तान्दृष्ट्वा
जामिलभीत्याजुहावतनयंनिजम् ९०

हेदूतो तुसी जाके उस अत्यंत पापी मरणे वाले कान्य कुब्जवा
ह्मण कों ल्याओ जो जाती कर्के ब्राह्मण कर्मों कर्के चांडालों
सें भी अधिक होता भया ॥ ८७ ॥ तिस कों फांसीयोंके सा
थ बांध कर नरकोंमे सुट देओ बाहर के बाहर मेंऐसे पापीका
दर्शन भी नहि करना चाहता हुं ॥८८ ॥ इह आज्ञा शिरकर
धारण कर्के सो यमकिंकर उहां चले आए दंडतें फांसीयां हाथ
मैंलिये होए लंबीयां जिनकीयां दाढां वडे भयंकर रूपोंवाले
॥ ८९ ॥ अजामिल के घरआय कर तिस कों फांसियो सें बां
धने लगे तिनकों देखकर भय करके अजामिल अपने
पुत्रकों बुलावता भया ॥ ९० ॥

अहोनारायणात्रेतिमांवध्नंतिभयंकराः नाराय
णाततः पाहीत्येवंपुत्रमभाषत ९१ वहुवारंवद
त्यस्मिन्विष्णुदूताःसमागताः शंखचक्रधराः
सर्वेतुलसीदामभूषिताः ९२ यमदूतान्भर्त्स
यन्तोविजहीतीतिवादिनः ततस्तुयमदूतास्तैर
युध्यंतमहात्मभिः ॥ ९३ ॥ ततोघोरतरंयुद्धंकृ
त्वातेविष्णुकिंकराः अजामिलंसमादायविमा
नेहरिमंदिरे ॥ ९४ ॥

वहुत दूर वालकोंके साथ क्रीडामैं आसक्त पुत्रकों ऊचे स्वरसें कहता भया हेनारायण शीघ्र इहांआ मेरेकों एह भयंकर वांधने लगेहैं इनसें रक्षाकर ऐसें पुत्रकों कहता भया ॥ ९१ ॥ इसी तरांसें वहुत वार कहते होएकों सुनके विष्णुके दूतचले आये कैसे वोह विष्णुके दूतहैं शखचक्रगदा पद्म धारेहोए तुलसीकी माला कर्के शोभायमान ॥९२॥ और यमके दूतों का तिरस्कार कर्ते २ कहते भये इसकों छोड देउ क्यौं तुमने पकडाहै ऐसें कहकर पीछेसें तिन महात्माके साथ यमदूतोंका युद्ध होता भया ॥ ९३ ॥ तद सो विष्णुके दूत वडा घोर युद्ध कर्के अजामिलकों विमान पर विठा यके विमल हरिके मंदिरमैं लेजाते भये९४ ॥

वैकुंठंप्रापयामासुरित्याश्चर्य्यमभूदहो ९४ अ
थतेयमदूतास्तुछिन्नहस्तोरुनासिकाः संप्राप्य
धर्मराजांतेरुदंतोवाक्यमब्रुवन् ॥ ९५ अवि
चार्य्यैवभवताप्रेष्यंतेकिंकरानिजाः अथवाचि
त्रगुप्तोयंसहसासंवदत्यहो ॥ ९६ ॥ वयंतत्र
गतानेतुंविप्रंचाजामिलंतदा विष्णुदूताः समा
गत्ययुद्धंकृत्वातिदारुणम् ॥ ९७ ॥ विनिर्जि
त्यचनः सर्वान्निन्युस्तंभुवनंहरेः पश्यास्मदी
यान्यंगानिचक्राच्छिन्नान्यनेकधा ॥ ९८ ॥

वैंकुंठ मे प्राप्त कर्तेभये एहवडे आश्चर्यकी वात होतीभई ॥ ९४
अव इससेंउपरंत क्या अजामिल कों लेजानेसें उपरंत यमके
दूत कटेगएहैं हाथपाउं जिनके ऐसेसो धर्मराजाके पास प्राप्त
होकर रोदन कर्ते २ वाक्यकहतेभये ॥ ९५ ॥ हेराजन् आप
विना विचारे अपने किंकर भेजते हो अथवा चित्रगुप्त सतावी
कर्ताहै जो कुछ विचार नहि कर्ताहै ॥ ९६ ॥ हमतिसकों ले
जाने वास्ते तहां गए अजामिलके घर तिस समयही विष्णुकेग
ण आय कर वडा घोरयुद्ध कर्के ॥ ९७ ॥ हमारे कों जीत लिया
तिसकों हरिके मंदिर लेगएहैं और चक्रों कर्के कटे होए हमारे
अंगोंकों देखो ॥ ९८ ॥

तमाप्यानयितुंचास्मास्छ्रीमन्तःप्रेषयंतिहित
स्मादियमवस्थानोयोनाभागंतमर्हति ॥९९॥
इति श्रुत्वावचस्तेषांयमराजोतिविस्मितः आ
हूयाचित्रगुप्तंतुपप्रच्छाजामिलस्यसः॥ १००॥
चित्रगुप्तोनिरीक्ष्याहनाजन्ममरणावधि पुण्य
लेशोनचास्त्यस्यानिश्चित्यैतद्ब्रवीम्यहम् १०१
किंतुप्राणांतसमयेदृष्ट्वादूतान्भयंकरान् ना
रायणेतिनामानंतनयंस्वमुपाव्हयत् ॥१०२ ॥

विनाविचारे आप हमारेकों भेजदेतेहो इसकारणसें एह ह. मारी अवस्था हुईहै जो वडे निर्भाग्यों वालेयोंके योग्यथी ॥ ९९ ॥ एह वचन तिनका श्रवण कर यमराज वडे विस्म, य आश्चर्य कों प्राप्त होएआ तो चित्रगुप्त को वुलाय कर अजा मिल का पुण्य पाप पूछता भया ॥ १०० ॥ उस समय चित्र गुप्त तिसका जन्म सें लेकर मरणे पर्यंत पाप पुण्य देख कर. कहने लगा हे महाराज जन्मसे मरणे पर्यंत पुण्य का इसकों लेशभी नहि है एह वात निश्चित कर मैं कहताहुं १०१ ॥ परंतु एहवातहै कि मरणे के समय भयं कर दूतोंकों देख कर नारायण नाम वाले अपने पुत्रकों वुलावता भया ॥ १०२ ॥

तदाजुहावपुत्रंसनतुतंजगदीश्वरं इतिश्रुत्वाव
वस्तस्यचित्रगुप्तस्यभास्करिः ॥१०३॥ गृही
त्वानिजदूतान्सवैकुंठंप्रययौद्रुतं तत्रगत्वाज
गन्नाथंविष्णुंनारायणंहरिम् ॥१०४॥ प्रणम्य
प्रार्थयामासबद्धांजलि पुटोयमः ॥ भगवन्न
धिकारोमेवृथातवगणैः कृतः ॥ १०५ ॥ म
हापातकिनांश्रेष्ठोजामिलोभूद्द्विजाधमः तमा
नेतुंमयादूताः प्रेषिताः जगदीश्वर ॥ १०६ ॥

तिस समय सो अपने पुत्रकों वुलावताभया कोई परमेश्वर कों नहि वुलाया एह चित्रगुप्त का वचन सुनकर यमराज ॥ १०३ अपने दूतोंकों साथ लेकर शीघ्र वैकुंठमें प्राप्त होताभया और तहां जाकर जगत्के स्वामी हरि नारायण विष्णुकों ॥ १०४ प्रणामकर हाथ जोडके यमराज कहन लगा हेभगवन् मेरा अधिकार तेरे गणोंनें वृथा करदियाहै ॥ १०५ ॥ महापापियों में श्रेष्ट अजामिल ब्राह्मणोंमें अधमथा तिसके ल्याउने कों हे जगदीश्वर मैने अपने दूत भेजेथे ॥ १०६ ॥

अथांतरेभवद्दासायमदूतान्निहत्यतं समानि
न्युरिहायंतेराजतेभवनंद्विजः॥ १०७॥ श्रु
त्वैतद्धर्मराजस्यवचनंभगवान्हरिः सस्मितं
शांतयित्वातंयमराजमभाषत ॥ १०८ ॥
अहोसत्यंनास्यपुण्यमाजन्ममरणावधि परं
तुमृत्युसमयेमन्नामोच्चारणादयम् ॥ १०९ ॥
विमुक्तः सर्वपापेभ्याआनीतोममकिंकरैः शृ
णुष्वसमयंमत्तोनिजचित्तेवधारय ॥ ११० ॥

इतनेमैं हेभगवन् तुमारे दास यमदूतों कों मारकर तिसकों ल्यावते भये सो द्विज एह तुमारे वैकुंठमैं विराजमानहै १०७ एह वचन धर्मराज का श्रवण कर हरि भगवान् मंदहास्य करके युक्त धर्मराज कों समझावते २ ऐसे कहने लगे॥ १०८ हे धर्मराज जो तूं कहताहैं सो सत्यहै क्या जन्मसैं लेकर मरणे पर्यंत इसने कुछ पुण्यका लेश नहिकरा परंतु मरनैं के समयमेरे नामके उच्चारणसैं १०९ सम्पूर्ण पापोंसें मुक्तहोएआ हुया मेरेकिंकरोंने इस लोकमैं ल्यायाहै अब आगे वास्ते मेरेसैं संकेत श्रवणकर सो अपने मनमे निश्चय धारण कर रख ११०

पापिनोपियथादंडंभवतोनाप्नुवातिहि तथाव
धार्यचित्तेवैविहरस्वमहीतले॥ १११ ॥ येनाम
संततमहोममशंकरस्यदेव्याभजंतिमनुजाभुवि
पापिनोपितांस्त्वंजहीतिनचतेतवदंडयोग्याश्र
स्मत्प्रिया इतिनतच्चरितंविचार्यम् ॥ ११२॥ त
त्रापियेविजहतिस्वकलेवराणिमन्नामभाषणपु
रस्सरमप्यचिंताःकिंचामलत्रिपथगातटभाजि
नोयेसंसेविताद्धतनवःखलुतेतिपूज्याः ११३ ॥

और पापी पुरुष भी जिस प्रकार तेरेसें दंडकों नहिं प्राप्त होवे उसप्रकारकी शिक्षा अपने मनमैं निश्चयसें धारणकर सुख पूर्वक पृथिवी लोकमैं विहार कर १११ और जो कोई पुरुष सर्वदा मेरा नाम जपे वा शिवजी का अथवा देवी का नाम जपे पृथिवी लोकमैं सो पापी भी होवे तदभी तिसकों तूं सा गदे क्योंकी तेरे दंडके योग्य नहिहैं सो मेरेप्यारेहैं इसमैं विस्मय की वात नहिहै क्या विचार करनाहै ११२ और उसमैं भी एक विशेषताहै क्या मेरेनाम जपनेमैं तत्पर निश्चिंत होके देह त्याग कर्तेहैं और निर्मल श्रीगंगाजी के किनारे मैं रहने वाले सो मेरे अर्धे देहके भागीहैं और वडे श्रेष्ठहैं ११३

एवंशिक्षामुरीकृत्यनमस्कृत्ययमोहरिं निजंगा
मगणैः सार्धंहृष्टः संयमनींपुरीम् ॥११४॥
तत्रापिनिजदूतेभ्यः शिक्षामाहहरेः कृताम्
इत्यजामिलसंवद्धंभक्तिमाहात्म्यमुत्तमम् ॥
॥११५॥ परमाश्चर्यजनकंनामसामर्थ्यबृंहितं
श्रुत्वाभक्तिमवाप्नोतिमहापापात्प्रमुच्यते ॥
॥ ११६ ॥ इत्यजामिलचरित्रंसमाप्तम् ॥

इस प्रकार की शिक्षा भगवान् जी की अंगीकार करकें और यमराजधर्म हरिकों नमस्कार कर प्रसन्न मन वाला अपने गणों के साथ संयमिनी पुरीकों चला आवताभया ॥११४॥ तहां आ के सो भगवान् जी की करी होई शिक्षा और नों दूतों कों भी सुनाय देता भया एह अजामिलक की भक्ति के माहात्म्य कर बांधीहोई कथा उत्तम ॥ ११५ ॥ परम आश्चर्यके उत्पन्न करने वाली नामकी समर्थ कर भरीहुयी इसकों श्रवण कर नारायण मैं भक्तिकों प्राप्त होताहै और भक्त महापापसें मुक्त होताहै ११६ ॥ एह अजामिलकी भक्ति का चरित्र समाप्तभया ॥

अथभक्तमालायांनाममाहात्म्यनिरूपणम् ए
कदानाममाहात्म्यं न.मदेवेनभक्तितः कथा
व्यक्तीकृतंलोकेतदाश्चर्यं निशामय ॥ १ ॥ म
हाधनोवाणिक्कश्चिद्दिदृक्षुर्विठ्ठलंप्रभुं समाया
तोतिभक्त्यावैधनान्यादायभूरिशः ॥ २ ॥ स्ना
त्वाभीमासरित्तोयेदृष्ट्वातंविठ्ठलंहरिं संपूज्य
विधिवद्भक्त्यारत्नालंकरणादिभिः ॥ ३ ॥ तु
लादानंचकारासौ हिरण्यस्ययथाविधिः तैर्द्र
व्यैस्तोषयामासयथायोग्यंद्विजान्सदा ॥ ४ ॥

अब भक्तमाल सें रामनामकी महिमा लिखतेहैं एकसमय नाम
देवनैं भक्तिसें नामका माहात्म्य प्रगटकरा सो संसारमैं आश्चर्य
रूप कथा श्रवण कर ॥ १ ॥ वडा धनवान् एक वाणियां वि
ठ्ठल भगवानजीका दर्शन करने वास्ते आया वडी भक्ति कर
संयुक्त वहुत तरोंके धन देने वास्ते ल्याया ॥ २ ॥ तोंभीमानदी
केजल्ल मै स्नान कर हरिभगवान विठ्ठलजी का दर्शनकर्कै वि
धिकर संयुक्त वडे प्रेमसें वस्त्र भूषणादियों सें पूजन करा ॥ ३
फिर वेदकी रीतिसें स्वर्णादिद्रव्योंका तुलादान कर्ताभया औ
र तिनों द्रव्यों कर्कै यथा योग्य व्राह्मण साधुयों कों प्रसन्न क
र्ता भया ॥ ४ ॥

अन्यैरपिधनैस्तत्रविठ्ठलप्रीतयेवणिक् दीना
नाथांस्तुसंतोष्यप्राहकोप्यस्त्यनागतः ॥५ ॥
दीयमानंधनंतस्मैदास्यामिह्यहामिप्सितं इति
तस्यवचः श्रुत्वासर्वेते ग्रामवासिनः ॥६ ॥
ऊचुः सादरमानास्तेनामदेवोतिवैष्णवः अ
याचीनियताहारीसदागोविंदपूजकः॥ ७॥ ना
यातिसक्कचिद्भक्तः संतुष्टोयेनकेनचित् इतिश्रु
त्वावचस्तेषांवणिगाहानिजात्मजम् ॥ ८ ॥

और अनेंकतरों के धन विठ्ठल भगवानजी की प्रीतिके वा
स्ते दीन अनाथ दरिद्रीयोंकों प्रसन्न कर बोला ऐसा तोकोंई इ
सशहरमैंनहि रहा जोकोंइ इहां नहि आयाहै ॥ ५ ॥ क्योंकि
दान करा हुया एह धन उसकोंभी मन मांगा हुया देउं एहति
सका वचनसुनके सारेही उहांके रहने वाले ६ वडे आदर पू
र्वक कहने लगे इहांएक नामदेव परम वैष्णवहै ओह किसीके
आउता नहिहै नकिसीको याचना कर्ताहै नियम का भोजन
कर्ताहै और सर्वदा काल गोविंद जीकी पूजामै लगारहताहै ७
आउता जाता किसीके नहि और जो कुछ थोडा वहुत उस
कों घरमै वैठेहुए देआवे उसीसे प्रसन्न रहताहै ऐसा वचन लो
कोंका सुनकर सोसाहूकार वाणियां अपने पुत्रकों कहता भया ८

गच्छत्वंतत्रयत्रास्तेनामदेवोहरिप्रियः प्रणिप
त्यविनीतात्मातंप्राहाद्यानयेहभोः ९इतिपितृ
वचःश्रुत्वागतः पुत्रोऽतिहर्षितः प्रणम्यनामदे
वंतंप्राहमेजनकःप्रभो ॥१० त्वांदिदृक्षतिधर्मा
त्मातत्रत्वंकृपयाचल श्रुत्वैतद्वचनंतस्यनामदे
वोब्रवीद्वचः ॥११॥ प्रायोनयामिकुत्रापिकोहंय
न्मांदिदृक्षति सदाताधर्मशीलोमेकिंचिद्दातुमि
हेच्छति ॥ १२ ॥

पुत्रकों कहने लगा तूंउस जगा जा जहां नामदेव हरिका प्या
रा रहताहै तिसकों प्रणाम कर नम्र आत्मा वाला होके उसकों
इहां किसीउपाय कर्के ल्या ॥ ९ ॥ एह पिताका वचन सुन क
र पुत्र प्रसन्न मनवाला उहां चलागया नामदेवकों प्रणाम कर
बोला हेसाधो मेरापिता १० तुमारे दर्शन करनेकी इच्छा कर्ता
है तहां आप कृपा कर्के चलो इतना वचन सुनते ही नामदेव
कहता भया ॥११॥ असलसें मैं आज तक कहीं गया नही
हां परंतु मै कौन हां जो मेरा दर्शन करनेंकी इच्छा कर्ताहै मैने
जान लियाहै की ओह दाता धर्म करने वालाहै कुछ मेरे कोंभी
देनेकी इच्छा कर्ताहै ॥ १२ ॥

तज्ज्ञानामिनमेवांछाधनेवान्यत्रकुत्रचित् प्राण
धारणमाहारंददातिविठ्ठलःप्रभुः ॥१३॥ इति
पित्रेप्रवक्तव्यंगच्छवत्साविचारयन् ततःसवै
श्यपुत्रस्तुपितुरंतिकमागतः १४॥ उवाचनाम
देवस्यवचः सचपुनर्वणिक् प्राहपुत्रंपुनर्गच्छ
प्रसाद्यानयतंसुत ॥ १५ ॥ ततः सग्रामवृद्धै
स्तुसाकंतत्रपुनर्गतः उवाचप्रांचालेर्भूत्वातथा
हंपुनरागतः ॥ १६ ॥

सोमैजान लियाहै परमेरी इच्छानहिहैं धनलेनेकीन औंर किसी वस्तुकी और प्राणोंके धारणकरनेकानिर्वाह मात्र अन्न विठ्ठलभगवान्जी देहींदेतेहैं ॥ १३ ॥ एह बात अपने पिताकों कहदेहेपुत्र विचार मत कर औंर उहां जाके पिताकों कहदे ओह नहि आवताहै इतना वचन सुनके वैश्यका पुत्र पिताके पासचला आया ॥ १४ ॥ और नामदेवके वचन तिसकों सुनाय दिये की ऐसें कहताहै तद वाणियां पुत्रकों कहने लगा फिर उहां जाके तिसकों प्रसन्न कर इहां ल्या ॥ १५ ॥ तद फिरसो वाणियेका पुत्र ग्रामके वृद्ध पुरुषोंकों साथ लेके उहां गया तद नामदेवने पूछा अवकेसें आया तो बालक कहने लगा हे साधो मैं फिर तुमारे उहां लेजाने वास्ते बुलाने कों आयाहां ॥ १६ ॥

शृणुमेपितृवचनंयावत्त्वंनैषिमेगृहं तावदन्नंच
पानीयंनग्रहीष्याम्यहंध्रुवम् ॥१७॥ इतिप्रति
ज्ञांकृत्वासमरणेकृतनिश्चयः उत्कंठितोभवं
तंवैद्रष्टुंनास्त्यत्रसंशयः ॥१८॥ भवंतंभगवद्भ
क्तंजानातिभक्तवत्सलं नायातःस्वयमेचात्रत्व
दागमननिश्चयात् ॥ १९ ॥ अथैवंवचनंतेषां
वृद्धानांतत्सुतस्यच श्रुत्वासनामदेवोपिसमुत्त
स्थौप्रहृष्टवत् ॥ २० ॥

फिर कहने लगा हेसाधो मेरे पिताका वचन सुनो जो उोह क
हताहै जितनाकाल आप मेरे घरमैं नहि आओगे उतना काल
अन्न पाणी ग्रहण नहि करूंगा निश्चय कर्के ॥ १७ ॥ ऐसी प्र
तिज्ञा करके मरणे मैंभी निश्चय वाला होके तुमारे दर्शन करने
की चाहना वाला वैठाहै इसमै संशय नहिहै ॥ १८ ॥
और तुमारे कों भक्तवत्सल भगवानका भक्तजानके आप नहि
आयाहै की जरूर मेरे पर कृपा करेंगे क्या मेरे घरजरूर आवें
गे इस निश्चयसें ॥ १९ इसप्रकार के वचन तिनके श्रवण कर
वृद्धोंके और तिसवालक के नामदेव प्रसन्नमन वाला होके उ
ठ खडा होता भया ॥ २० ॥

जगामवणिजोगेहेयत्रदानंकरोतिसः वैश्योद्द
ष्ट्वानामदेवंसमुत्थायातिहर्षितः॥२१॥पाद्या
द्यैः पूजयित्वातंप्रोवाचविहितांजलिः प्रसीदतु
भवानद्ययद्ददामिगृहाणतत् २२ तद्वैश्यस्यव
चःश्रुत्वानामदेवोप्यभाषत अहोतदर्थंनाया
तोनमेवांछाधनादिषु ॥ २३ इतिजानंत्यमीस
र्वेतस्मादेतत्क्षमस्वभोः इतिश्रुत्वातुसवणिक्त
त्पादौप्रतिगृह्यच ॥ २४ ॥

सो नामदेव तिनके साथ वाणियेके घरमैं जाता भया जहां वै ठके उह दान कर्ताथा जद उसके सन्मुखगया सो उसको देखकर वडे हर्ष आनंदसे उठ खडा भया ॥ २१ ॥ पाद्य अर्घ्य आचमनादियों सें पूजन कर हाथ जोडके बोला हेसाधो आप मेरे पर प्रसन्न होवो और जो कुछ तुमको देताहुं सो मेरे सें ग्रहण कर लेवो ॥ २२ ॥ एह वाक्य तिस वाणिये का सुन कर नामदेव कहता भया हे धर्मशील मैं दान लेने कों नहि आयाहां और नमेरी इछाही है धनादियों में ॥ २३ ॥ एह वात सारे लोक जानते हैं इसकारणसे मेरे पर क्षमा कर इतना वाक्य सुनते ही तिसके पाद वाणियेने पकड लिये ॥ २४ ॥

नतत्याजसतत्पादौनामदेवोऽब्रवीत्तदा देहिमे
भिहितंद्रव्यंत्वत्प्रीत्यास्वीकरोम्यहम् ॥ २५ ॥
इत्युक्त्वातुलसीपत्रमेकमादायतत्रह रामेत्य
स्यार्धमलिखत्प्राहतंवणिजंपुनः॥ २६ ॥एतत्प
रिमितंद्रव्यंदेहिमेयदिदास्यसि इतिश्रुत्वावच
स्तस्यप्राहतंसवणिक्पुनः ॥ २७ ॥ उपहा
सोनयोग्यस्तेममभक्तस्यसुव्रत गृहाणयद्ददा
मीहस्वेच्छयाहंप्रसीदभोः ॥ २८ ॥

सो वाणियां तिसके पादों कों नहि त्यागता भया तद नामदे
व कहनेलगा हेसाधु अच्छा जेकर देताहैं तद उतना द्रव्यदे
जितना मैं मांगता हों तेरी प्रसन्नताके लिये ग्रहण कर्ताहुं
२५ ॥ ऐसे कह कर्के उहांसेंही एक तुलसी का पत्र लें कर
राम इसका आधा पद रा मात्र लिखके फिर वाणियेकों
कहता भया ॥ २६ ॥ हे वाणिक् जेकर देताहैं तद इसके
साथ तोल कर दे एह वचन तिसका सुनतेही वाणियां फिर
कहने लगा ॥ २७ ॥ हेसुव्रत में जो तुमारा भक्तहां मेरेसाथ
हांसी करनी योग्य नहिहै हे साधो जो मैं अपनी इच्छासें देता
हुं उतना ग्रहण करो ॥ २८ ॥

श्रुत्वैतद्वचनंतस्यनामदेवोब्रवीत्पुनः नोपहा
संकरोम्यद्यतावत्सर्वाधिकंभवत् ॥ २९ ॥ स
त्यमेतन्नसंदेहोनकिंचित्तत्समंभुवि इतिश्रुत्वा
सवैश्यस्तुसौवर्णतोलिकांतुलाम् ॥ ३० ॥ समा
दायतुतत्पत्रंरामनामार्धसंयुतम् एकतः स्थाप
यामासहिरण्यमपिचैकतः ॥ ३१ ॥ नसमंतु
लसीपत्रेणासीत्तत्कनकंपुनः सुवर्णानिसमा
दायपूरयामासयत्नतः ॥ ३२ ॥

एह वचन तिसका सुनके नामदेव फिर कहता भया मैं हांसी नहिकर्ताहुं एह सभनोंसें अधिकहै । २९ । सत्यवातहै आप संदेह मत करो इसके वरावर की वस्तु पृथिवीमैं भी नहिहै इस तरांका वचन सुनके सो वैश्य सुवर्ण तोलने वाली तुला कंडी लेके ॥ ३० ॥ रामनाम के अर्धकर संयुक्त तुलसी पत्रकों एक पासे पाय कर दूसरे पासे सुवर्ण कों स्थापन करके ३१ तोलने लगा तो तुलसी पत्रके साथ ओह सुवर्ण वरावर नहि हों ताभया और सुवर्ण लेकर यत्नसें उसमैं पूरता भये ॥ ३२॥

नययौतत्रसाम्यंतत्पुनरन्यांतुलांदधे तत्रापिन
ययौसाम्यंनामार्धस्यतुतद्धनम् ॥ ३३ ॥पुन
र्निर्मायमहतींतुलांसंस्थाप्यसर्वशः धनानितो
लयामासनययौसमतांपुनः ॥ ३४ ॥ततस्तंव
णिजंप्राहनामदेवोतिविस्मितः अहोयावंतिदा
नानिव्रतानिचमहीतले ३५॥ तीर्थानिचोपवा
साश्चतेषांयत्फलमीरितंवै संकल्प्यतज्जलंत
त्रदत्त्वातोलयपश्यभोः ॥ ३६ ॥

उसतुला मैं स्वर्णादि उसनामार्धके साथ बरावर नहि होए तद
और तुला उनोंने ग्रहण करी तिसमैंभी नामार्धके साथ सोधन
बरावर नहि होएआ ॥ ३३ ॥ तोफिर वहुत वडी एक तुला व
नाके उसमैं सभी कुछ स्थापन कर धनोंकों तोलते भये तदभी
राम नामार्धके साथ बराबर नहि हुया ३४ उससमय नामदेव
विस्मय युक्त होएआ हुया वाणिये कों कहता भया हेसाहुका
र अव देख जितनेक दान व्रत महीतल मैंहैं ॥ ३५ ॥ और
तीर्थहैं उपवास व्रत जितनेहैं तिनका जोफलहै तिसकों संकल्प
करकें उसका जो जलहै सो उसमैं पायकर तोलके देख ३६॥

इतिश्रुत्वावणिक्तीर्थव्रतादीनांफलानितु संक
ल्प्यप्रददौतत्रनसाम्यंजग्मुरएवपि ॥ ३७ त
तस्तुपरमाश्चर्यंदृष्ट्वासर्वेतिविस्मिताः उवाच
नामदेवस्तानेतन्मेपरमंधनम् ॥ ३८ ॥ नैता
दृशंधनंलोकेकस्याप्यस्तीत्यतोमया नयाच्य
तेजनः कोपिमत्तः सर्वेहिनिर्धनाः॥ ३९ ॥इति
तस्यवचः श्रुत्वासाधुसाध्वितिवादिनः दृष्ट्
वातंप्रत्ययंचित्ते जगृहुर्नामचिंतनम् ॥ ४० ॥

एहवचन तिसका सुनके वाणियां व्रतउपवास तीर्थादियोंके फल संकल्प कर्के तिसमै जल छोड देता भया तदभी तिसकी थोडी समता कों प्राप्त नहि होता भया ॥ ३७ ॥ तदसारे लोक परमाश्चर्य देखकर विस्मयकों प्राप्त होते भये उससमय उनकों नामदेव कहता भया एहमेरा परम धनहै देखातुमने ३८ इसके जैसा धन संसारमैं किसीके पास नहिहै मेरेहीपासहै इसी कारणसें किसीकों याचना नहि कर्ता हुं मेरेसें सारेही निर्धन हैं मैं वडाहुं सभसें ॥ ३९ ॥ एह वाक्य तिसका श्रवण कर सारे लोक साधु २ कहने लगे क्या एह वात ठीकहै कुछ संदेह नहिहै इस तरांका निश्चय देखकर सारे लोक अपने२मनोंमैं नामका चिंतन कर्ते भये ॥ ४० ॥

एवंवैनाममाहात्म्यंपुराणेपरिकीर्त्तितं नामोच्चा
रणमात्रेणगजोमुक्तोवभूवह ॥४१॥ गणिकाच
दिवंयातारामनामप्रभावतः अजामिलोऽतिपा
पिष्ठोनारायणसुतस्यतु ॥ ४२॥ जगामपरमं
धामतस्मान्नामैवतारकं कृष्णेतिमंगलंनामय
स्यवाचिप्रवर्तते ॥४३॥ भस्मीभवंतिराजेंद्रम
हापातककोटयः इतिस्मृतिरभिव्यक्तामन्य
तेऋषिभिःसदा ॥ ४४ ॥

इस प्रकार नामका माहात्म्य पुराणों में कथन कराहै प्रत्यक्ष देखो नामके उच्चारण मात्र कर्के ग्राह ने ग्रसा हुया गज राज मुक्त होता भया ॥ ४१ ॥ और वेश्या रामनामके जपने के प्रभावसें स्वर्ग में जातीभई और अजामिल वडा पापीथा सोभी पुत्र का नारायण नामलें कर्के ॥४२॥ परम धाम कों प्राप्त होताभया इस कारणसें रामनामही तारणें वालाहैं औरभी विशेष वाक्य लिखाहैं कृष्ण एह मंगल नाम जिसकी बाणी मैं प्रवृत्त रहताहै ॥४३॥ हेराजेंद्र तिसके महापापों कीयां क्रोडांभस्महोतियां हैं एह स्मृति वाक्य प्रसिद्ध सर्वदा काल ऋषियोनें मानीदा है ॥ ४४ ॥

तस्मान्नामसमोनास्तितपोयोगोव्रतंचवा अ
न्यानिपुण्यकर्माणिनाशुचिः कर्तुमर्हति ॥ ४५
तत्रनामस्मृतिर्विष्णोः सर्वशौचोत्तमोत्तमं का
म्यानांकर्मणांसिद्धौयनून्यस्ततद्धनंस्मृतम् ४६
तत्रांगवैगुण्यकृतोदोषोनर्थंकरोतिवै नामस्मृ
तौनचांगानिनच वैगुण्यमस्तिवै ॥ ४७ ॥ त
स्मान्नामस्मृतिर्लोकेसर्वेभ्योऽपिगरीयसी ना
मैवतावदेवेतिनिर्णीतंमुनिभिःपुरा ॥ ४८ ॥
गृहीत्वाविचरंस्तिष्ठेत्तथाप्येतन्नसंशयः ॥ ४९

इस कारणसें नामके समान कोई तप योग समाधि व्रत नहिहै और जितनेक पुण्य कर्महैं अपवित्र होए हुए कों करने को योग्य नहि होतेहैं ४५तहां नामकीस्मृति विष्णुकेकी सारेशौचोमें उत्तम पवित्र वस्तुहै और काम्यकर्मोंकी सिद्धिमैं मंत्रजपनेमैं अंगकी न्यूनता होजावे ओह दोषवडाअनर्थ कर्ताहै और नामके स्मरण मैंन अंगहैं न विगुणताहै ॥ ४७ इसकारणसें नामका स्मरण संसारमैं सभनोंसें वडाहै मुनियोंनें नामका उच्चारण ही करना पीछे२ निर्णयकराहै ॥ ४८ ॥ इसमंत्रकों ग्रहण कर्के विचरता हुया स्थित होएआ हुया चलता फिरता उच्चारण कर्तारहे ॥

तस्मान्नाम्नस्तुमाहात्म्यंनकोऽपिवक्तुमर्हति य
स्यनामस्मृतौभक्तिस्तस्यभक्तिर्हरौदृढा ५०
तदेवनाममाहात्म्यमनुभूतंयथापुरा तमेवकथ
यिष्यामिग्रंथांतेविस्तरादहम् ॥ ५१ ॥ इति
श्रीभगवद्भक्तिमाहात्म्येनाममाहात्म्यवर्णनम्

इस कारण सें नाम का माहात्म्य कोई भी कहने कों समर्थ नहिहै और जिसकी भक्ति नाम कें स्मरणमैं है उसीकी भक्ति हरिमे दृढ निश्चय वालिहै ॥ ५० ॥ जिस प्रकार नामका माहात्म्य पूर्व समय उत्पन्नहुयाहै तिसकी कथा विस्तारसें ग्रंथके अंतमैं कथन करूंगा ॥ ५१ ॥ एह श्रीभगवानजी की भक्ति के माहात्म्यमें राम नाम उच्चारण का माहात्म्य कथन कराहै

अथ विष्णवग्रे स्तोत्रसहस्रनामपुराणपाठमाहात्म्यं पाद्मे क्रियायोगसारे सत्कथाश्रवणे वुद्धिर्यस्ययस्यप्रवर्त्तते ससएवस्वयंविष्णुस्तस्मैविप्रनमोनमः १ सत्कथाश्रवणादेवविष्णुभक्तिः प्रवर्त्तते तस्यतस्यभवेद्ज्ञानंधर्ममोक्षप्रदंविदुः ॥ २ ॥ प्रभावंवासुदेवस्य श्रुत्वातृप्यंतियेजनाः ज्ञेयास्तेएवदेवेशाःपूज्याद्दश्याश्चसत्तम ॥ ३ ॥ यत्रयत्रमहादेववैष्णवीवर्त्तते कथा सान्निध्यंतत्रभगवान्नजहातिकदाचन ४

अब विष्णु भगवानजी के आगे स्तोत्र सहस्र नाम पुराणके पाठ का माहात्म्य पद्म पुराण के क्रियायोगसारमैं लिखाहै ॥ जिस जिस पुरुष की श्रेष्ट कथा श्रवण करने मैं वुद्धिहै सो २ आपविष्णुका रूप है हेविप्र तिसके तांई नमस्कार होवे २ ॥ १ ॥ श्रेष्ठकथा श्रवण करने सें विष्णु में भक्ति प्रवृत्त होतीहै और जिस २ कों भक्ति होतीहै तिस २ को धर्म मोक्षके देने वाला ज्ञान होता है॥ २॥जौनसें पुरुष वासुदेव भगवानजीका प्रभाव सुनके मनमें प्रसन्न होतेहैं हेसत्तम सो पुरुष देवेश का रूप जानने पूजाके योग्य हैं और देखनेके योग्यहैं ॥ ३ ॥ हे महादेव जिस २ जगामैं वैष्णवीकथा होती होवे तहां की सानिध्यता भगवान कदी नहिं त्यागते हैं ॥ ४ ॥

महाभागवतस्यापिपुराणस्यैकमक्षरं यःपठे
त्परयाभक्त्यागोप्रदानफलंलभेत् ॥५॥अन्यच्च
गीताध्यायंपठेद्यस्तुश्लोकार्धंश्लोकमेववा स
र्वपापविनिर्मुक्तोयातिविष्णोः परंपदम् ॥६॥वि
ष्णोर्नामसहस्त्रंतु पूजाकालेतुयःपठेत् अष्टाद
शपुराणानांफलंप्राप्नोतिमानवः ॥७॥नारदीये
यः शृणोतिपुराणानिसततंभक्तिसंयुतः तस्य
स्याद्विपुलाबुद्धिर्भूपधर्मपरायणा ॥ ८ ॥

जो पुरुष पूजाके समय महाभागवत पुराणका एकअक्षर भीप
रम भक्ति करके पाठ करे सोभी गौके दान करनेके फलकों प्रा
प्त होताहै ॥ ५ ॥ और भीलि ० गीताका एक अध्याय एक
श्लोक वा अर्ध श्लोक पाठ कर्ताहै सों सारे पापोंसें मुक्त होए
आ हुया विष्णुके परम पदकों प्राप्त होताहै ॥ ६ ॥ विष्णुका
सहस्र नाम स्तोत्र पूजाके समयजो पढताहै सो अठारां पुराणों
केपाठ करनेके फलकों प्राप्त होता है ॥७ ॥ नारदीय पुराणमें
लि ० जो पुरुष सर्वदा काल भक्ति युक्त पुराणों की कथा सुन
ता है हेराजन् तिसकी धर्म मैं तत्पर वहुत बुद्धि होतीहै ॥ ८

यः शृणोतिपुराणानिभक्तिमान्प्रयतः सदाहरि
भक्तिर्भवेत्तस्यसमस्तगुणदायिनी ॥ ९ ॥ पुरा
णश्रवणान्नृणांबुद्धिर्धर्मेप्रवर्त्तते धर्मात्पापा
निनश्यंतिज्ञानंशुद्धंचजायते ॥ १० ॥ स्कांदे॥
वैवस्वतभयंनास्तितथामरणजन्मनोः यःकथां
कुरुतेविष्णोः शालग्रामशिलाग्रतः ॥ ११ ॥

जो भक्तिवाला पुरुष सर्वदाकाल पवित्र होकर नियमसें पुराणों कों श्रवण कर्ताहै तिसकों सारे गुणोंके देनेवाली हरिकी भक्ति होतीहै ९ पुराणोंकी कथा श्रवण करनेसें पुरुषों की बुद्धि धर्म मार्गमें प्रवृत्त होतीहै धर्म करने सें पाप नष्ट होतेहैं और शुद्ध निर्मल ज्ञान होताहै ॥ १० ॥ स्कंद पुराणमें लिखा है जो पुरुष शालिग्राम की शिलाके आगे विष्णु भगवानजी की कथा कर्ताहै तिसकों धर्मराजसें भय नहिहै और मरणे जन्मनेका भी भय नहिहै अर्थात् ओह मुक्त होजाताहै ।११॥

गंधमाल्यादिनैवेद्यैर्धूपदीपैश्चलेपनैः गीतवा
द्यैस्तथास्तोत्रैश्शालग्रामशिलार्चनम् ॥ १२
कुरुतेमानवोयस्तुकलौभक्तिपरायणः कल्प
कोटिसहस्राणिरमतेविष्णुसन्निधौ ॥ १३ ॥
पाद्मेकार्त्तिकमाहात्म्ये कुर्वंतियेकथांविष्णो
र्येशृण्वंतिसुभावतः श्लोकार्धंश्लोकपादंवाल
भंतेगोशतंफलम् ॥ १४

और जो कोई पुरुष गंध पुष्प मालादि नैवेद्य धूप दीप लेपन गायन करताहै वाजे वजाने स्तोत्रोंके पाठ करने शालग्रामकी शिलाका पूजन ॥ १२ ॥ जो मानव कर्ताहै भक्तिमैं तत्पर कलियुगमैं सो कल्पों के हजारां क्रोंडां वर्ष विष्णुके समीप सुख भोग भोगताहै ॥ १३ ॥ पद्म पुराणके कार्तिक माहात्म्य मैं लिखाहै जो पुरुष प्रीतिभक्ति कें युक्त विष्णुकीयां कथां श्रवण कर्ते हैन वा आप सुनातेहैं एक श्लोक वा आधाश्लोक सौ सौ गौ दानकरनेके फलकों प्राप्तहो तेहैं ॥ १४ ॥

॥ नतथातुष्यतेयज्ञैर्नदानैर्गोगजादिभिः य
थाशास्त्रकथालापैस्तुष्यतेमधुसूदनः ॥ १५
सर्वधर्मान्परित्यज्यकार्त्तिकेकेशवाग्रतःशास्त्रा
वधारणंकार्यंश्रोतव्यंचमहामुने १६ श्रेयसा
लोभवुद्ध्यावायः करोतिहरेः कथां शिला
ग्रेमुनिशार्दूलजनानांतारयेच्छतम् ॥ १७ ॥

इतने प्रसन्न भगवान गौयां हाथी घोडे इनके दानों
कर्के नहि होतेहैं जितने शास्त्रकी कथा सुनने सुनाने सें मधु
सूदनजी प्रसन्न होतेहैं १५ सारे धर्मोंकों त्यागकर कार्त्तिक
महीने मैं शास्त्रकीयां कथां सुनानीयां श्रवण करवाणियां चाहि
ए १६ हेमहामुने अपनी कल्याण वास्ते जांलोभकी वुद्धि
कर्के जो हरि कीयां कथां कार्त्तिक मैं केशव विष्णुजीके आगे
कर्ताहै क्या शालिग्रामकी शिलाके आगे कर्ताहै सो अपने पी
छे के सौ जने कों तारताहै क्या उद्धार कर्ताहै १७

नियमेननरोयस्तुशृणुतेवैष्णवींकथां कार्तिके
तुविशेषेणगोसहस्रफलंलभेत् ॥ १८ ॥ प्रबो
धवासरेविष्णोःशृणुतेयोहरेःकथां सप्तद्वीप।
वनीदानफलंसलभतेमुने ॥ १९ ॥ कृत्वाभुवि
कथांविष्णोर्येर्चयंतिकथाविदं स्वशक्त्यामुनि
शार्दूलतेषांलोकोऽक्षयः स्मृतः२०॥ स्कांदे नि
त्यंवैष्णवशास्त्राणियेशृण्वंतिपठंतिच धन्या
स्तेमानवालोके तेषांकृष्णः प्रसीदति ॥ २१

जो पुरुष नियम कर्के रोज के रोज वैष्णवी कथाकों सुनताहै
और विशेष कर्के कार्तिक महीनेमें सों हजार गौं दान करने
के फलकों प्राप्त होताहै ॥ १८ ॥ और जोकोई विष्णुके प्रबोध
दिनमें हरिकीयां कथा सुनताहै सो सात द्वीप वाली पृथिवीके
दान करनेके फलकों प्राप्त होताहै ॥ १९ ॥ जौनसे पृथिवीलो
कमें विष्णुकी कथा कर्तेहैं और तिनका जोअपनी शक्ति कर्के
हे मुनिशार्दूल पूजन कर्तेहैं तिनके अक्षय लोक वने रहतेहैं २०
स्कंदमें कहाहै जौनसे पुरुष नित्यही वैष्णवशास्त्रोंकों सुनतेहैंप
ढतेहैं ओह मनुष्य संसारमें धन्यहैं तिनके ऊपर श्रीकृष्णजी प्र
सन्न होतेहैं ॥ २१ ॥

पठंतिवैष्णवंशास्त्रंभक्ताभागवतंहिये कल्पको
टिसहस्त्राणिकृष्णलोकेवसंतिते २२ ॥ श्लोका
र्धंश्लोकपादंवाश्रूयाद्भागवतंगृहे सहस्त्रशतसं
ख्याकैःकिमन्यैः शास्त्रसंग्रहैः ॥ २३ ॥ पुराणं
वैष्णवंशास्त्रंश्लोकंचैकमथापिवा श्लोकपादंपठे
द्यस्तुगोसहस्त्रफलंलभेत् ॥ २४ ॥ पुनस्तत्रैव
श्रोतव्यंविष्णुचरितंविष्णुभक्तैः सदानरैः पा
पक्षयार्थंदेवर्षेस्वर्गप्राप्त्यैचसर्वदा ॥ २५ ॥

जौनसे परमेश्वरके भक्त वैष्णव शास्त्र जो भागवत तिसकों प
ढतेहैं सो कल्पोंके हजारां क्रोडां वर्ष कृष्णजी के लोकमें वसदे
हैं ॥ २२ ॥ और जो पुरुष अपने घरमें भागवतका एक
श्लोक वाआधा श्लोक वा एक पाद नियमसें श्रवण करतेहैं ति
नकों सैंकडे हजारां शास्त्रोंकें संग्रह करकें क्या प्रयोजनहै ॥ २३
पुराण जोहैं वैष्णव शास्त्र तिनका श्लोकमात्र जां श्लोक पादश्र
वण करना अथवा आप पढना हजार गौयांके दान करनें के
फलकों प्राप्त होताहै ॥ २४ ॥ फिर तहां उसी पुराणमेंलि ०
विष्णुकी भक्ति करने वाले पुरुषों ने सर्वदा काल विष्णु भगवा
नजीके चरित्र पापोंके नाश करने के लिये और स्वर्गकी प्राप्ति
के लिये सुननें योग्य हैं ॥ २५ ॥ ?

स्कांदे नियमेननरोयस्तुशृणोतिविष्णुसत्क
थाः सप्तद्वीपावनीदानेयत्फलंतल्लभेन्मुने॥२६
श्रुत्वाविष्णुकथांपश्चाद्येर्चयंतिमधुद्विषं स्वश
क्त्यामुनिशार्दूलतेषांलोकाः सनातनाः ॥ २७
गीतवाद्यैस्तथास्तोत्रैः शालिग्रामशिलार्चनं
कुरुतेमानवोयस्तुकलौभक्तिपरायणः युगको
टिसहस्राणिरमतेविष्णुसन्निधौ॥ २८॥ पुस्तक
स्याप्यभावेतुविष्णुनामसहस्रकं स्तवराजंतुवि
प्रेंद्रगजेंद्रस्यतुमोक्षणम् ॥ २९ ॥

स्कंदपुराणमैं कहाहै जोनर नियम करकें विष्णुकी श्रेष्ठ कथा श्रव
ण कर्ताहै हेमुने सात द्वीप वाली पृथिवीके दानका जोफलहै
तिसकों लभताहै ॥ २६ ॥ जो विष्णुकीयां कथा श्रवण करकें
पछिसैं मधुद्विष भगवानजी कों पूजतेहैं अपनी यथा शक्ति क
रकें तिनके सनातन लोकवने रहतेहैं ॥ २७ ॥ गायन कर्ताहैं वा
जेवजाताहै स्तोत्रपाठ करताहै शालिग्रामकी शिलाकी पूजामें
जोमानव कलियुगमें भक्तिमें तत्पर होएआ हुया सो हजारां
क्रोडां युग विष्णुके समीप रमण कर्ताहै ॥ २८ ॥ जिसके घ
रमै पुस्तकनहि होवे हेविप्रेंद्र तो विष्णुका सहस्रनाम स्तवराज
गजेंद्र मोक्ष इनका पाठकरे ॥ २९ ॥

पूजाकालेतुदेवस्यगीताध्यायंमनुस्मृतिं पंच
स्तवंमहाभागमहाप्रीतिकरंहरेः ॥३०॥स्तोत्रा
णांपरमंस्तोत्रंविष्णोर्नामसहस्रकं कृत्वास्तो
त्रसहस्राणि पठनीयानिसुव्रत ॥ ३१ ॥ तेनैके
नमुनिश्रेष्ठपठितेनसदाहरिः प्रीतिमायातिदे
वेशो युगकोटिशतानिच ॥ ३२ ॥ विहायगी
तवाद्यानिपूजाकालेसदाहरेः पठनीयंसदाभ
क्त्याविष्णोर्नामसहस्रकम् ॥ ३३ ॥

देवता विष्णुकी पूजाके समय जो गीताका एक अध्याय भी पढ
तेहैं और अनुस्मृतिकों पढतेहैं एहजो पांच स्तवहैं सो हरि की
बडी प्रसन्नता कर्ने वालेहैं ॥ ३० ॥ स्तोत्रोंके मध्यमे विष्णु स
हस्रनाम स्तोत्र श्रेष्टहै हेसुव्रत हजारां स्तोत्र इकठे कर्के पढने यो
ग्यहैं ॥ ३१ ॥ परंतु तिस सहस्र नामके एक वार पढने कर्के
हेमुनिश्रेष्ट सर्वदा काल सैकडे युगों पर्यंत देवेश प्रसन्न रहतेहैं
॥ ३२ ॥ सर्वदाकाल हरिकी पूजाके समय गीत वाद्यादि त्याग
कर विष्णुसहस्रनाम भक्ति कर्के पढना योग्य है ॥ ३३ ॥

विष्णोर्नामसहस्राख्यं कलिकाले पठंति ये वेदा
नामपि पुण्यानां फलप्राप्तिर्भवेन्नृणाम् ॥ ३४ ॥
श्लोकेनैकेन देवर्षे विष्णोर्नामसहस्रतः पठनेन
फलं प्रोक्तं न तत्क्रतुशतैरपि ॥ ३५ ॥ मंत्रहीनं क्रि
याहीनं यत्कृतं पूजनं हरेः परिपूर्णं भवेत्सर्वं सह
स्रनामकीर्त्तनात् ॥ ३६ ॥ क्रियायोगसारे स्तौ
ति स्तोत्रैर्जगन्नाथं यो भक्त्या वैष्णवो जनः तस्य
प्रसन्नो भगवान्सर्वान्कामान्प्रयच्छति ॥ ३७ ॥

बिष्णुका सहस्रनाम कलियुगके समय जो पढतेहैं तिनो पुरुषां
ने पवित्र वेदोंके पाठ करने के फलकी प्राप्ति होतीहै ॥ ३४ ॥
हेदेवर्षे सहस्रनामके एक श्लोक पडने कर्के जो फल प्राप्त
होताहै सो सैकडे यज्ञों कर्के भी नहि होताहै ॥ ३५ ॥ और
जो मंत्रों कर्के क्रिया कर्केहीन जो हरिका पूजन कराहै सो
साराही हरि सहस्रनामके पाठ कर्के परिपूर्ण होजाताहै ॥ ३६
क्रियायोगसारमें लि॰ जोकोई वैष्णव पुरुष भक्तिके साथ स्तो
त्रों कर्के जगन्नाथजी की स्तुति कर्ताहै तिसके ऊपर प्रसन्न हो
ए हुए भगवान् सारियां ही कामना पूर्ण कर्तेहैं ॥ ३७ ॥

स्तोत्रपाठकरणेचेतिहासमवतारयति भक्तमा
लायां पुनर्भूयः प्रवक्ष्यामि भक्तेर्माहात्म्यमुत्त
मं यस्यश्रवणमात्रेणनरोमुच्येतसंसृतेः॥ १ ॥
पूर्वंयः कथितोऽत्रैवश्रीधरस्वामिसंज्ञितः तस्य
पूर्वव्यवस्थायांभक्तेर्माहात्म्यमुच्यते ॥ २ ॥
सएकदागृहेतिष्ठन्वनेशास्त्रार्थपारगः आहूतो
धनिनैकस्मिन्दिनेकेनचिदध्वरे॥३ तत्रगत्वाप्र
वान्विप्रोधनानिकतिचिद्द्विजः गृहीत्वातानि
चैकाकीश्रीधरोगृहमाव्रजत् ॥ ४ ॥

स्तोत्रादियोंके पाठकरणेके फलमैं इतिहास कथन कर्तेहैं भक्त
माला ग्रंथमैं॥फिर अब भक्तिका उत्तम माहात्म्य कथन कर्ताहुं
जिसके श्रवण मात्रसें पुरुष संसारसें मुक्तिकों प्राप्त होताहै ॥ १
पहिले जो कथन कराथा श्रीधरस्वामी तिसकी कथा पूर्व व्यव
स्थामैं भक्तिकी कथा कहीदीहै ॥ २ ॥ सो स्वामी घरमैंही नि
वास कर्ता हुया शास्त्रका चिंतन कर्तारहताथा एकादिनकिसी ध
नि साहूकार शिष्यनें यज्ञके विषेंवुलाया ॥ ३ ॥ तहां जा कर्कें
ब्राह्मण श्रीधरजो कितने तरोंके द्रव्योंकों प्राप्त होता भया तिन
कों ले कर्कें इकल्लाही श्रीधर वनमार्ग कर्कें अपनें घरकों
आवता भया ॥ ४ ॥

मध्यमार्गेमार्गचौराअनुयाताः सुहिंसितुं त
तस्तान्श्रीधरोज्ञात्वाशस्त्रपाणीन्भयंकरान्
५ त्रस्तःश्रीरामकवचं भक्त्यासस्मारसद्विजः
कवचस्यकृतेपाठेभ्रातरौरामलक्ष्मणौ ॥ ६ धनु
र्बाणधरौवीरौश्यामगौरकलेवरौ श्रीधरस्यस
मीपेतुगच्छंतौभीषयन्खलान्॥७ नापश्यच्छ्री
धरःकंचिच्चौरं दृष्ट्वातुतौपथि नप्रहर्तुंशक्नुवं
तःश्रीधरेणसमागताः ॥ ८ ॥

तब तिसकों मार्गके मध्यमे मार्ग चौर रस्ता लुटने वाले तिस कों मारने के लिये पीछे २ आवते भये तो श्रीधर स्वामी तिनकों शस्त्रधारी भयंकर रूपवाले अपने मारने कों पीछे आया कर्ते होएओं कों जानकर ५ ॥ त्रसेंयाहुया भक्ति प्रेमसें श्रीराम कवचका पाठ कर्ताभया तब उसीसमय पाठके करेहोए अपने भक्तकी रक्षाके वास्ते दोनों भ्राता रामलक्ष्मण ॥ ६ श्याम गौरशरीर वाले वडे शूरवीर धनुष बाण धारे श्रीधर के समीपर पीछे २ चौरों कों भय देते होए चलते भये ॥ ७ परंतु श्रीधर नाहि तिनकों देखताभया सो चौर तिनकों देखके श्रीधर के साथ आए होए तिसके मारणे कों समर्थ नहिहोतेभये ॥८ ॥

दृष्ट्वातयोः सौकुमार्यंसौंदर्य्यंचाप्यनुत्तमं मो
हितानप्रहर्त्तुंवैशक्तास्तद्भयतः खलाः ॥ ९ ॥
अथश्रीधरविप्रोपिनिजग्रामंयदागतः यदातौ
भ्रातरावंतर्द्दधातेरामलक्ष्मणौ १० ॥ अथचौ
राअदृष्ट्वातौवीरौचापशरायुधौ विरहार्त्ताःश्री
धर यद्वार्य्यागत्यसमास्थिताः॥११ दृष्ट्वाता
नूश्रीधरोविप्रःपप्रच्छविनयान्वितः यूयंत्वद्य
समायातायेमयासहतेध्रुवम् १२ ॥

ओह चौर तिन दोनोंको सुकुमारताक्या कोमलता और अत्यु
त्तम सुंदरतादेखकर मोहित होए हुए और तिनके भयसें प्रहार
करने कों समर्थ नहिहोते भये ९ ॥ इससें उपरंत जिस समय
श्रीधरजी अपने ग्राममैं चले आये तद सो दोनों भ्राता राम
लक्ष्मण अंतर्धान होगए क्या छिपगए ॥ १० तिससें उपरंत
ओह चौर धनुष बाण धारी शूरवीरों कों नहि देखके विरह
कर पीडित श्रीधरके पीछे आय के उसीके द्वारपर वैठ गए
११ ॥ तद तिनकों श्रीधर ब्राह्मण द्वारमैं वैठयांकों देखकर ब
डी नम्रतासें युक्त पूछने लगा तुमतो ओहीहो जो आज मेरे
साथ आयेहो ॥ १२ ॥

किमत्रब्रूतकार्यंवोयदर्थमिहतिष्ठत निवसिष्य
थचेदद्यवसतात्रगृहेमम ॥१३॥ इत्युक्ताःश्रीध
रेणाथतेहिचौराइदंवचः नवस्तुमिच्छामवयंत्व
यासहसमागताः।१४मार्गेऽद्राक्षंचयौवीरौश्या
मगौरकलेवरौ चापवाणधरौधीरावागच्छंतौ
त्वयासह॥१५ तौवयंद्रष्टुमिच्छामःक्वगतौतौप्र
दर्शय दृष्ट्वातौसुंदरौवीरौगच्छामोद्यनसंशयः१६

इहां तुमारा क्या कामहै कि जिसवास्तै वैठेहो जेकर निवास
करनें की इच्छाहै तद घरमें चलो वैठो निवास करो॥१३॥ इस
प्रकार श्रीधरजीने कथन करे होए चौर ऐसे कहते भये हमकों
निवास करने की इच्छा नहिहै ओहीहैंहम जो तुमारे साथ आ
येहैं॥१४॥ मार्ग के वीच श्याम गौर कलेवर वाले जिनों दो
शूरवीरों कों देखते भये धनुष वाण धारेहुए तुमारे साथ आ
या कर्तेथे॥१५॥ उनकों हम देखने की इच्छा वालेहैं ओह क
हांगएहैं उनकों दिखा हमारेकों उन सुंदर स्वरूप वाले शूर
वीरों कों देखके हमचले जावेंगे ॥ १६ ॥

श्रुत्वातेषांवचोविप्राः श्रीधरः प्राहतान्पुनः
अहोकिंवदताश्चर्यंयूयंसत्यवचः किमु १७ के
यूयंकुत्रवोवेश्मकावावृत्तिरिहास्तिवः ब्रूतसत्यं
ततोहंतौदर्शयिष्याम्यसंशयम् ॥१८॥ इतिश्रु
त्वावचस्तस्यचौराः सत्यंवभाषिरे वयंविप्रकु
लेजाताधर्मकर्मविवर्जिताः ॥१९॥ स्थित्वात
स्मिन्वनेचौरवृत्त्यास्माकंतुजीवनं दृष्ट्वावयं
भवंतंतौसधनंहिंसितुंतदा ॥ २० ॥

तिनका वचन सुनके श्रीधर ब्राह्मण तिनकों फिर कहनेलगा एह बात तुम सत्य कहते हो वा झूठहै वडा आश्चर्यहै मैंने नहि देखेहैं तुमने कैसे देखे ॥ १७॥ तुमीं आप कौन हो तुमारा घर कहांहै क्या तुमारी उपजीवकाहै तुम सत्यकहो तदमैं दिखावताहां इसमैं संशय मतजानो ॥१८॥ ऐसा वचन तिसका सुनके ओह चौरे सत्यही कहते भये हेब्राह्मण हम ब्राह्मणों के घर जन्मे होएहैं और धर्म कर्म कर्के वर्जितहैं ॥१९॥ तिस वनके मध्यमैं निवास कर्तेहैं और चोर वृत्ति कर्के हमारी जीविकाहै हम सारेहि तुमारेकों धनके समेत देखकर मारणे कोंपीछेआयेथे॥२०॥

समायातास्तदादृष्ट्वावीरौचापशरायुधौ भीष
यंतौतुतावस्मांस्तद्भयेनवयंपुनः ॥ २१ ॥ नहिं
सितोभवांस्तौतुत्वयासहसमागतौ प्रविष्टौगृ
हांतरितौनदृष्टौतौपुनर्द्विज ॥२२॥ इतिश्रुत्वाव
चस्तेषांश्रीधरोविनयान्वितः प्रणम्यधन्यायू
यंतुइत्युवाचपुनःपुनः ॥ २३॥ ततस्तेतमपृच्छं
तकिमिदंभाषसेद्विज तौदर्शयमहाभागप्रति
ज्ञातंपुराद्विज ॥ २४ ॥

तिस समय धनुष वाण धारणे वाले वीर हमारे कों पीछे आउ
ते देख कर हमारेकों भय देते हुए पीछे चले हम तिनके भय
कर्के तुमारेकों मार नहि सकते भये ॥२१॥ तिनके भयसें हम
ने नहिमारा सो पीछे २ तुमारे घरमें प्रवेश कर्ते भये फिर न
हि देखे ॥ २२ ॥ एह वचन तिनका श्रवण कर श्रीधर नम्रता
कर युक्त तिनकों प्रणाम कर कहने लगा तुम धन्यहो २ ऐसे
वारं वार कहता भया ॥ २३ ॥ तद ओह पूछने लगे हेद्विज एह
क्या कहताहैं हे महाभाग तैंने पहले प्रतिज्ञा करीहै अव तूं
दिखा ॥ २४ ॥

श्रुत्वैतद्वचनंतेषांश्रीधरःप्राहतान्पुनः अहोन नोगृहेतौमेभ्रातरौरामलक्ष्मणौ ॥ २५॥ ज्ञात्वा तुभवतोहंवैहिंसितुमांसमागतान् तदाश्रीरा मकवचमपठंविपिनेभयात् ॥ २६ ॥ रक्षितुं मांसमायातौदेवौतौभक्तवत्सलौ ग्रामपर्यंतमा यातावंतर्द्धानंगतौतदा ॥ २७ ॥ धन्याभवंतःपु ण्यावैभाग्यवंतोनसंशयाः यैर्दृष्टौजगतांनाथौ लोचनैरामलक्ष्मणौ ॥ २८ ॥

एह वाक्य फिर तिनका श्रवण कर श्रीधरजी कहने लगे ओह राम लक्ष्मण दोनों भ्राता हैंन सो तो मेरे घर नहिहैं ॥ २५ ॥ जिस समय वनके मध्यमें तुम मेरे मारणे को पीछे आये तद तुमकों चौर जानके मैं उस समय श्रीराम कवच का पाठ कर्ता भया वडे भयसें ॥ २६ ॥ ओह भक्त वत्सल देवताग्राम पर्यंत मेरी रक्षाके लिये आए फिर वो दोनों भ्राता छिप गएहैं २७ तुसीं धन्यहो वडे पुण्य वान्हो भाग्यों वालेहो जिनोंनें इहां अपने नेत्रों करकें जगतक नाथ देखेहैं ॥ २८ ॥

इतिश्रुत्वावचस्तस्यश्रीधरस्यचतस्कराः अ
स्त्राणिचूर्णयित्वातेवैराग्यंपरमंययुः ॥ २९ ॥
नमस्कृत्यचतेविप्रंश्रीधरंविनयान्विताःयदृच्छ
यागताःसर्वेचिंतयंतस्तुतौमुदा ३० ॥ तेपिया
तामहाभक्ताश्चौराश्चपिकलौयुगे तस्माद्भक्ति
समंनास्तिनृणांसुखकरंभुवि ॥ ३१ ॥ इतिश्री
भगवद्भक्तिमाहात्म्ये स्तोत्रादिपाठमाहिमवर्ण
नम् ॥ ॥

इह तिसका वचन सुनकर सारेही चोर अपने अपने शस्त्रास्त्र तोड कर परम वैराग्यकों प्राप्त होते भये ॥ २९ और सो चौंर श्रीधर ब्राह्मण कों नम्रता कर युक्त प्रणाम कर स्तुतिकर्के तिन के स्वरूपकों चिंतन कर्ते २ अपनी २ इच्छा पूर्वक चले जात भये प्रसन्नता पूर्वक ॥ ३० ॥ सोऐसे निर्दय चौर कलियुगमें महाभक्त होजाते भये तिसकारणसें भक्तिके समान सुखकरनेका उपाय पृथिवी में और नाहिहै ॥ ३१ ॥ एहभगवानकी भक्तिकी महिमामें स्तोत्र पाठकी महिमाका वर्णन समाप्तहुया ॥

अथविष्णोः पूजाप्रशंसावर्णनं गारुडे मनो
धृतिर्धारणास्य तत्समाधिर्ब्रह्मणिस्थितिः अमूर्त्तौ
चेत्स्थिरानस्यात्ततोमूर्त्तिंविचिंतयेत् १ ॥ साच
तुर्विंशतिर्मूर्तिः शालिग्रामशिलास्थिता द्वार
कादिशिलासंस्थो ध्येयः पूज्योथवाहरिः २॥ वृ
हन्नारदीये हरिपादार्चनरताः प्रयांतिपरमंपद
मिति ३ पाद्मे नित्यार्चनंहरेर्येनपित्रर्थंमुनिस
त्तम गंगायांपिंडदानंतुकृतंतेनदिनेदिने ॥ ४ ॥

अब विष्णुकी पूजा करनेकी महिमा का वर्णन लि० ॥ गरुड
में कहाहै मनकों विषयों सें हटाय कर एक स्थानमैं निश्चल क
रना क्या स्थापन करना उसमनकी धृतिका नाम धारणाहै औ
र उसी मनकी निर्गुण ब्रह्ममैं स्थिति होवे क्या उसब्रह्ममैं निश्च
ल होकर लगे जद उसकों समाधि कहते हैं जेकर ओहोमन अ
मूर्त क्या निराकार ब्रह्ममैं स्थिरनहि होवे तद मूर्ति क्या है सा
कारब्रह्म तिसका चिंतनकरे १ सोसाकार ब्रह्मकीयां चौवीसमु
र्तियां शालिग्रामकी शिलामैं स्थितहैं और सोभगवान् द्वारका
सें आद लेकर जोउत्तम क्षेत्रहे तिनमैं उत्पन्न होई हुईआं शि
लाके मध्यमे स्थित हरि ध्यान करने योग्यहै अथवा पूजने के
योग्यहै ॥ २॥ वृहन्नारदीयमैंलि० ॥ हरिके पाद पद्म पूजनेमैं
प्रीति वाले पुरुष परम पदकों जातेहैं ॥ ३ ॥ पद्मपुराणमैंलि०
हेमुनियोंमैं श्रेष्ट पितरों निमित्त जिसने प्रतिदिन हरिका पूजन
कराहै तिस पुरुषने दिन २ मैंपिंडदान कराहै ॥ ४ ॥

पितृनुद्दिश्ययैः पूजाकेशवस्यकृतानरैः हित्वा तेनारकींपीडांदिवंयांतिपितामहाः । ५ ॥ स्कांदेकार्त्तिकमाहात्म्यंकेशवस्यचपूजाभिःकार्त्तिके स्नानमात्रतः नरकान्मुक्तिमायांतिपितरः सपितामहाः॥ ६ धन्यास्तेमानुषेलोकेकलिकालेविशेषतः येकुर्वंतिहरेः पूजांपित्रर्थंपूजयंतिये॥७ किंदत्तैर्वहुभिःपिंडैर्गयाश्राद्धैतथापुनः यैरर्चितो हरिर्भक्त्यापित्रर्थंचदिनेदिने ॥ ८ ॥

पितरोंका उद्देश करके जिन पुरुषोंने केशवजी की पूजाकरीहै तिसके पितर नरकोंकी पीडा त्याग कर स्वर्गकों जातेहैं ॥ ५ स्कंदके कार्त्तिक माहात्म्य में लिखाहे पितरोंके निमित्त कार्त्तिक महीने में केशव भगवान् जीकी पूजा करके और स्नान मात्र करके पितामहादियों के सहित पितर नरको सें मुक्तिकों प्राप्त होतेहैं ॥ ६ ॥ मनुष्यलोक मै ओह पुरुष धन्यहैं और कलिकाल मैं विशेष करके धन्यहैं जौनसे पुरुष हरिकी पितरों कें निमित्त पूजा कर्त्तेहैं ॥ ७ ॥ और पितरों के निमित्त विष्णुकी पूजादिन २ करीहैं तिनोंने तिनकों गयामैं वहुतपिंड दानों करके क्या प्रयोजनहै ॥ ८ ॥

नित्यार्चितोहरिर्येनपित्रर्थंमुनिसत्तम गयायां पिंडदानंचकृतंतेनदिनेदिने ॥ ९ ॥ यमुद्दिश्य हरेः पूजाक्रियतेमुनिपुंगव उद्धृत्यनरकात्तंतु नयेदात्मपदंहिसः ॥ १० ॥ क्रियायोगसारे अनेनविधिनाविप्रप्रतिमासंजनार्दनं संपूज्य भक्तिभावेनमुक्तिमाप्नोतिमानवः ॥ ११ ॥ किं वाधनेनविप्रर्षेपूजाया जगतीपतेः भक्तिसंतुष्ट चित्तस्यभक्तिरेवात्रकारणम् ॥ १२ ॥

हेमुनि सत्तम पितरों के निमित्त जिसने हरिकी पूजाकरीहैं तिसनेंतो दिन २ में गयामै पिंडदान करेहैन ॥ ९ ॥ हेंमुनिपुंगव जिसका उद्देश करकें हरिकी पूजा करीदीहै उसकों नरकों सें निकाल कर हरि अपने पदकों लेजातेहैं ॥ १० ॥ क्रियायोगसार में लिखाहै हेविप्र इसविधि करकें महीनेके महीने जनार्दन जोकों भक्ति भाव करकें पूजन कर पुरुष मुक्तिकों प्राप्त होताहै ॥ ११ हेविप्रर्षे जगतके पति विष्णुकों धनकेसाथ क्या प्रयोज नहै क्योंकि भक्ति करकें संतोष मन वाले कों भक्ति ही कारणहै ॥ १२ ॥

मूर्खोवदातिविष्णायविज्ञोवदातिविष्णवे द्वयोर
पिसमंपुण्यंभावग्राहीजनार्दनः १३विधिहीना
मपिश्रेष्ठांपूजांश्रीकमलापतेः यः कुर्य्याद्भक्ति
भावेनसोपिस्यात्केशवप्रियः १४ विधिज्ञो
विधिनाविष्णुमभ्यर्च्चयत्फलंलभेत् अविधि
ज्ञोपिविप्रेंद्रभक्तश्चेत्तत्फलंलभेत् १५ यस्य
वैयावतीभक्तिर्देवदेवेजनार्दने तावत्येवफलं
वाप्तिस्तस्यनास्त्यत्रसंशयः ॥ १६ ॥

मूर्ख पुरुष विष्णाय नमः ऐसें कहताहै और बुद्धिमान् पुरुष विष्णवे नम ऐसें कहताहै परंतु दोनोंको एक सम पुण्य होता है क्योंकि जनार्दन भगवान् भावको ग्रहण कर्ते हैंन क्या भक्तिमें दृष्टि रखतेहैं १३ और जो कोई पुरुष कमला लक्ष्मीके पति विष्णुकी पूजा विधि करकें हीन कर्ताहै और जो कोई विधि पूर्वक श्रेष्टपूजा कर्ताहै भक्ति प्रीति भाव करकें सो दोनोंही एक जैसे केशव जीको प्यारे होतेहैं १४ हेविप्रेंद्र शास्त्रवेत्ता विधिके जानन वाला जो पुरुष विधि करकें विष्णुको पूजन कर जौनसा फल लभताहै सोई फल भक्तिवाला पुरुष बिना विधानके पूजन कर उसी फलको लभताहै १५ और जिस पुरुषकी देव देव जनार्दनजीमें जितनीक भक्तिप्रीतिहोवे उतनेही फलोंकी तिसको प्राप्ति होतीहै इसमैं संशय नहिंहै १६

ज्ञानमूलंसैवभक्तिर्भक्तिमूलंजगत्पतिः पूजा
मोक्षद्रुमोत्पत्तौमूलमाराधनंहरेः १७ अणु
मात्रमपिप्राज्ञः श्रद्धयाकुरुतेयदि तदक्षयंभ
वेत्सर्वंश्रद्धाधीनाः क्रियाःशुभाः १८ भक्त्या
यः पूजयेद्विष्णुंवारमेकमपिद्विज स्वस्थानंद
दतेविष्णुर्यतोभक्तिवशोहरिः १९ अभक्त्या
याहरेः पूजाक्रियतेभुविमानवैः सापूजाब्राह्म
णश्रेष्ठपूजाकालेवहंतिवै ॥ २० ॥

ज्ञानका जो मूलहै सोई भक्तिहै और भक्ति का मूल जगत्प
ति विष्णुहै और पूजा जौनसीहै सो मोक्षका वृक्षहै तिस वृक्ष
की उत्पत्तिका जो मूलहै सो हरिका आराधनहै क्या सेवाहै
१७ प्राज्ञ जो वुद्धिमान् पुरुष ओह जेकर श्रद्धा कर्कें कुछ
थोडा भी करे तद सो कर्म नाश रहित होजाताहै क्योंकी स
म्पूर्ण जोक्रिया हैन सो श्रद्धाके हि अधीनहैं १८ हे द्विज
श्रद्धाप्रीति कर्कें विष्णुकों जो एक वारभी पूजताहै तिसकों
भगवान्जी स्वस्थान वैकुंठदेतेहैं जिसकारणसें भक्तिकेही वशी
भूत हरिहै १९ और विना भक्ति के जौनसी पूजा पृथिवीमें
हैं मनुष्योंने करीदीहै सो पूजा उसीं पूजाके समयही फलप्राप्त
कर्तीहै फिर नहि उसका फल होताहै ॥ २० ॥

पुनस्तत्रैव ॥ हरिंसंपूजयेद्भक्त्यापशुपाशवि
मोचनं सर्वेंतरायानश्यंतिमनः शुद्धिश्चजाय
ते ॥२१॥ संसारेस्मिन्महाघोरेमोहानिद्रासमा
कुले येहरेः शरणंयांतिकृतार्थास्तेनसंशयः
॥२२॥ यावन्नायातिमरणंयावन्नायातिवैजरा
यावन्नेंद्रियवैकल्यंतावदेवार्चयेद्धरिम् ॥२३॥स
र्वेतीर्थानियज्ञाश्चसर्वेवेदाश्चसत्तमाः नाराय
णार्चनस्यैतेकलांनार्हंतिषोडशीम् ॥ २४ ॥

फिर उसी बृहन्नारदीयमैं लिखाहै कया जो पुरुष पशुयों के पाश मुक्त करने वाले हरिकों भक्ति कर्के पूजन कर्ताहै तिसके सारे जो अंतरायहैं विघ्न सों नष्ट होजातेहैं और मन की शुद्धि होतीहै ॥ २१ ॥ मोह अज्ञान निद्रा आलस्य इनों कर्के भरे होए इस महा घोर संसारमें जो हरिकी शरणकों प्राप्तहोतेहैं सो कृतार्थ पुरुषहैं इसमें कुछ संशय नहिहै ॥ २२ जितना काल मरण का समय नहि आया और जितना काल वृद्धावस्था नहिं आई और जितनाकाल इंद्रियोंकी व्याकुलता कया शिथिलतानहिंहोई उतनाकाल पर्यंतहरिका पूजनकरे॥२३ हेसत्तमाःसारे तीर्थ और यज्ञ और सारे वेद इनके करनेका फल हरिके पूजनकी सोलहमी कलाकों नहिप्राप्तहोतेहैं ॥ २४ ॥

सत्यंसत्यंपुनःसत्यमुद्धृत्यभुजमुच्यते वेदाच्छा
स्त्रंपरंनास्तिनदेवः केशवात्परः ॥ २५ ॥ सत्यं
वच्मिहितंवच्मिसारंवच्मिपुनःपुनः॥ असारेचैव
संसारेसारंवैविष्णुपूजनम्२६योभारतभुवंप्राप्य
विष्णुपूजापरोभवेत् नतस्यसदृशोलोकेयथावै
रवितेजसः २७अद्यापिदेवायिच्छंतिजन्मभारत
भूतलेकदापुण्येनमहताप्राप्स्यामःपरमंपदम् २८

व्यास देवजी कथन करतेहैं संसारके लोकों सुनोमैं भुजा उठाय कर सभकों सुनावताहुं वार वार सत्य कहताहुं २ कहताहुं क्यों वेदशास्त्रतें परें और दूसरा शास्त्र नहि और केशव विष्णुजी सें परें श्रेष्ठ देवता कोई नहिहै २५ मैं सत्य कह ताहुं सभका हितप्यार कहताहुं और सार वाक्यकथाहै सत्य वचन सो कहताहुं सारसें विनासंसारमें विष्णुकी पूजा करनी सारहै ओर कुछ नहिहै ॥२६॥जो पुरुष भारत खंड की भूमि मेंप्रात होकर विष्णुकी पूजा करनेमें तत्पर होताहै तिसके स मान लोकमें दूसरा कोई नहिहे जैसें सूर्य के तेज समान और तेजकोई नहिहै।२७॥देखो कैसा भारत खंडहै जिसमें स्वर्गनिवा सी देवता आजतकरभी भारतभूमिमें जन्म धारणेकी इच्छा क रतेहैं क्या कहते हैंकी किससमय किसीवडे पुण्यके प्रभाव करकें हम भारत रूपी परम पदमें प्राप्त होवेंगे क्या जन्मेंगे ॥ २८ ॥

दानैर्विविधैर्यज्ञैस्तपोभिर्व्रीविधशायिनं पूज
यित्वाकदायामोयत्वेपश्यंतिसूरयः २१ पाद्मे
कार्त्तिकमाहात्म्येपृथुनारदसंवादेनेतिहासमव
तारयति पृथुरुवाच ॥ हरिपूजनमाहात्म्यंश्रो
तुमिच्छामहेमुने त्वत्तोधर्मभृतांश्रेष्ठसर्वमाख्या
हितत्त्वतः १ श्रीनारद उवाच परोपहास्यमुद्दिश्य
करोतिहरिपूजनम् सयातिवैष्णवंधामकिंपुनः
श्रद्धयान्वितः २ अत्राप्युदाहरंतीममितिहासंपु
रातनं धूम्रकेशोमहापापीयथालेभपरांगतिम् ३

ऐसी इच्छा स्वर्गके लोक कर्ते हैनको ऐसा कौन सा कोई दा
नहै और अनेक तरांके यज्ञोंकर्के तपों कर्के अब्धि शायि विष्णु
जीकों पूजन कर कद हम भारत खंड में जावेंगे जिसकों सू
रि विद्वान् लोकदेखतेहै ॥ २१ ॥ पद्मपुराणके कार्त्तिक माहा
त्म्यमें पृथुनारदके संवादकर्के इतिहास कथन कर्तेहैं ॥ पृथुराजा
नारदजीके प्रति कथन कर्ता भया हेमुने तुमारेसें अब हरिकी
पूजाका माहात्म्य श्रवण करने की इच्छा कर्ताहुं हेधर्म धारियो
मेंश्रेष्ठ तत्वसें मेरेप्रति आप कथनकरो १ ॥ नारदजी कथन क
र्ते भये हेराजन् कोई दूसरा जो हरिका पूजन कर्ता होए उस
के साथ हांसी करणे कों सामने उसके पूजाकी नकल करें
ओह पुरुष वैष्णव लोकमें प्राप्त होताहे औरजो विधि कर्के श्र
द्धा कर युक्त पूजन करे उसके वास्ते तो क्या कहना की किस
पदकों प्राप्त होताहै २ इसवातमें प्राचीन इतिहास कथनकर्ताहुं
जिसप्रकारधूम्रकेशनामा महापापी परम गतिकोप्राप्तहोताभया ३

कलिंदपर्वतेरम्येनाम्नादीर्घपुरंपुरा तत्रराजा तिधर्मात्मासुबाहुः सोमवंशजः॥ ४ ॥ ब्रह्मण्यो विष्णुभक्तश्चप्रजापालनतत्परः तस्यात्मजोधूम्रकेशोज्येष्ठोराजेंद्ररूपवान् ॥ ५ ॥ क्रीडन्सत्रालकैर्दुष्टैर्दुष्टसंगात्सुदुर्मतिःद्यूतक्रीडारतोनित्यं तदर्थंतस्करायते ॥ ६ ॥ गूढः पिवतिमद्यंच यौवनेमत्स्यमांसभुक् मार्गयन्नागरीर्नारीर्विटयूथसमन्वितः ॥ ७ ॥

रमणीक क्या सुंदर जो कलिंद नामा पर्वत तिसमें दीर्घपुर नाम कर्के एक नगर वसताथा उहां का राजा चंद्रवंशीवडा धर्मात्मा सुवाहु नाम कर्के राज्य कर्ता था॥ ४ ॥ कैसा सो राजा ब्राह्मणों कों मानने वाला विष्णु भगवानजी का भक्त और धर्मसें प्रजाके पालन कर्णें में तत्पर था हेराजेंद्र तिसका वडा पुत्र वडे सुंदर रूपवाला धूम्र केश नाम कर्के होता भया ॥ ५॥ सो दुष्टबुद्धि वाले वालकों के साथ क्रीडा कर्ता हुया दुष्टोंके संग वशथें दुष्ट वुद्धि सो भी द्यूत क्रीडामे आसक्त होता भया और तिसके निमित्त चोरी कर्त्ता भया ॥ ६ ॥ और गुप्त २ मद्यपान कर्ता भया युवा वस्थामे मत्स्यका मांस खाता भया और दुष्टो के यूथ कर युक्त नगर कियां स्त्रियां ढूंढता फिरताथा ॥ ७

दूतिकाभिःछलेनापिधनेनचवलेनच अगम्या
ब्राह्मणीश्चापिनात्यजत्काममोहितः ॥ ८ ॥
पिताश्रुत्वानुतत्कर्मप्रासनंताडनंवहु अकार्षी
न्नचतस्याभूत्स्वभावंकर्तुमन्यथा॥ ९॥कदाचि
त्कंदुकक्रीडांकुर्वतातेनकंदुकः प्रहितोराजभ
वनेप्रागात्तस्यनिरीक्षया ॥ १०॥ स्वयंपश्चाद्ग
तस्तंत्रनवोढाराजभोगिनी तद्विमातातुसात
स्वरूपदर्शनमोहिता ॥ ११ ॥

उसराजकुमारने नगरकीयां सुंदरस्त्रियां दूतियों के द्वाराजां छल
कर्के वलात्कारसें भी अगम्या व्राह्मणीयां इतर जातियाँ वालि
यां काम कर्के मोहित होएने किसीकों नहि त्यागया सभनोंके
साथ भोग विलास कर्ता भया ॥८॥ तद उसके पिताने दुष्ट कर्म
तिसका श्रवण कर वहुत तरोंकी भी ताडना करी तदभी उसके
स्त्रभाव के श्रेष्ट करने कों सामर्थ नहिं होताभया ॥९॥ ऐसेही
वालकोंके साथ खिन्नू खेलते हुए तिनोंके तद उस राजकुमा
रने खिन्नू ताडन कर्के वालको के पासे सुटेया तद सो खिन्नू
राजाके अंदर महलोंमें पडातो उसके देखने कों पीछे चला
गया ॥१०॥जद आप राजा का पुत्र उहां पीछे खिन्नुके लेने
कों गयातो उहां नवीन व्याही हुई राजाकी राणी उसकी
विमाता मात्रैयां सो उसकोंदेख कर मोहित होगई ॥ ११ ॥

दूरतः कंदुकंतस्मैदर्शयंतीपुनः पुनः साव्री
डहास्यभावेनप्रोवाचमधुराक्षरम्॥१२॥अत्रा
गत्यगृहाणेमंकंदुकंचधनंतथा यद्यदिच्छासित
त्संवदास्यामिनृपनंदन१३इत्येवमादिश्रुतिक
र्णरोचनंवाक्यंहितस्यामधुरंमहाविदः अंधीकृता
त्मावुवुधेनपातकंप्रविश्यगेहंद्रुतमालिलिंगता
म्१४॥ज्ञात्वाचनृपतिस्तस्यकर्मचात्यंतदारु
णंदेशान्निस्सारयामासस्नेहाद्वध्यंनचावधत्१५

मोहित होई हुई सो दूरसें तिसके तांई खिन्नू दिखातीहो
ई ठोह पडाहै २ और लज्जाके सहित हास्य कर युक्त भाव
कटाक्ष कर्के मधुर वाणीकर्के कहती भई ॥ १२ ॥ क्या हेरा
जकुमार इहांमेरेपास आके इस खिन्नूकों भी ले और जिस२
की इच्छा कर्ताहैं सोभीले धनभीले ॥ १३ ॥ इसतरांके वा
क्य कर्णों कों सुखदेने वाले तिसके मधुरवचन सुन २ के
सो महा विद काम देव कर अंध होएआ हुया आत्मा जिस
का सो पापकों नहि जानता हुया उसके घरमें प्रवेशकर शीघ्र
तिसकों लिंगन कर्ताभया ॥ १४ ॥ तद तिसका अत्यंतवडा
उग्रकर्म जानकरराजापिता उसको अपने देशसें निकालदेता
हुया क्योंकी सोवधकेयोग्यथा परंतु पुत्रके स्नेहसें नहिमारेया १५

निःसारितोगृहाद्राज्ञाधूम्रकेशोनृपात्मजः वनं विवेशव्रीडार्तोनिर्जनंफलमूलभुक् १६ दस्युकर्मरतोनित्यंपथिकान्हंतिलुंठति ततोतिराजभीत्याचदूरेचगहनेवनम् १७ गच्छन्वनांतरंप्राप्तोदैवाद्वृंदावनंशुभं तत्रावात्सीद्दिवाभात्यारात्रौमधुपुरींययौ १८ चौर्यार्थंददृशेचित्रंवेश्यासद्मसुशोभनं वेश्यांचरूपसंपन्नांदृष्ट्वातस्यांव्यषज्जत॥ १९॥ चौर्येणधनमानीयतस्यैदत्त्वागृहेवसन् दिवावृंदावनंयातिराजकुल्यैरलक्षितः २०

सोराज कुमार धूम्रकेश राजानें घरसें निकाला हुया लज्जाका मारा फलमूल खाने वाला वनमें प्रवेश कर्ताभया ॥ १६ ॥ उस निर्जन वनमें चोरीके करनेमें रत और रस्ते आउने वालेयों कों लूटता भया तो उसवनसें भी राजाके भयकर्के वडेदूर गहन वनमें चला गया ॥ १७ ॥ फिर ऐसेंही वनसें वनांतरोंमें जाता २ प्रारब्ध वशकर्के वृंदावनमें चलागया तहां जाकर दिन में तोवृंदावनमें रहना रातकों मथुराजीमें चले जाता भया १८ उहां एक चोरी करनेकों वडा सुंदर शोभायमान वेश्याका घर देखा और रूपयुक्त वेश्याको देखकर आसक्तमन वाला होता भया ॥ १९ ॥ तद फिर क्या करने लगा चोरीकर्के धन ल्यावना उसकों देके उहां उसके घर निवास कर्ता भया दिनमें वृंदावन चलेजाता भया परंतु राजाके कुल वालों कर्के अलक्षित क्या उनकों इस वातकी खवर नहि ॥ २० ॥

सिंधुदेशोद्भवोविप्रोनाम्नासत्यव्रतःसुधीः वि
रक्त इंद्रियार्थेभ्यस्त्यक्त्वापुत्रगृहादिकम्२१वृं
दावनेस्थितःकृष्णमारराधदिवानिशं निःस्वः
सत्यव्रतोविप्रोनिर्जनेऽव्यग्रमानसः ॥ २२ ॥
कार्त्तिकेपूजयामासप्रीत्यादामोदरंनृप तृतीये
ह्निसकृद्भुंक्तेपत्रमूलफ तथा ॥ २३ पूजयित्वा
हरिंस्तौतिप्रीत्यादामोदराभिधम् ॥ २४ ॥

उहां वृंदा वन के मध्यमें सिंधुदेशका जन्मा हुया ब्राह्मण वि
द्वान् सत्य व्रत नाम इंद्रियोकेसुखसें विरक्त होएश्रा हुया स्त्री पुत्र
गृह त्यागकर निवास कर्ताथा ॥ २१ ॥ वृंदावनमें स्थित होके
दिनरात कृष्णजीकों श्राराधन कर्ता भया कैसा था जिसके पा
स कुछ नहि ऐसा सो सत्यव्रत ब्राह्मण सावधान मनवाला नि
र्जन वनमें ॥ २२ ॥ कार्त्तिक महीने प्रीति भक्ति करके हेराजन्
दामोदरजीका पूजन कर्ता भया तो तीसरे २ दिन एक वार
फलमूल पत्र जो कुछमिल जावे सो भोजन करलेता भया २३
श्रौर नारायण का पूजन करके वडीप्रीतिसें दामोदरजीकी स्तुति
कर्ता भया सो स्तुति श्रव श्रागे कथन करेंगे ॥ २४ ॥

सत्यव्रतउवाच नमामीश्वरंसच्चिदानंदरूपंल
सत्कुंडलंगोकुलेभ्राजमानं यशोदाभियालूख
लेधावमानंपरामृष्टमत्यंततोदूतगोप्या. २५॥
दंतंमुहुर्नेत्रयुग्मंमृजंतकराम्भोजयुग्मेनसातंक
नेत्रं मुहु:श्वासकंपत्रिरेखांककंठस्थितंनौमिदा
मोदरंभक्तवंद्यम् ॥ २६ ॥ वरंदेवदेहीशमो
क्षावधिंवानचान्यंवृणेहंवरेशादपीह इदंतेवपु
र्नाथगोपालवालं सदामेमनस्याविरास्तांकि
मन्यैः ॥ २७ ॥

सत्य व्रत कथन कर्ता भया सच्चिदानंद रूपी ईश्वर कों नम
स्कार कर्ताहुं कैसेहैंन शोभाय मान कुंडल कानोंमें जिनके
और फिर कैसेहैंन गोकुलमें प्रकाशमान और यशोदाके भय
करकें ऊखलके साथ वंधे होए इधर उधर फिर रहे हैंन फिर
कैसेहैंन रोदन करते होए दोनों नेत्रों सें अश्रुपात दोनों हाथ
रूपीं कमलों करके भय वाले नेत्रों कों पूंछते भये फिर कैसे
हैंन वारं वार ऊचे श्वास लेतेभये कंपाय मानहैं फिर कैसेहैं
न तीन रेखाहैं कंठमैं जिनके और वैठे होए जो भक्ति करकें
वंदना करने योग्यदामोदर तिनकों नमस्कार कर्ताहां ॥२६ ॥
हेदेव हेईश मेरेकोंमोक्षकी अवधि पर्यंत वरदानकरो और वर
देने वालेयोंके स्वामी जोतुमहोतुमारेसें औरकुछ नहिमांगता
हुंहेनाथ एहजो गोपालों का वालक रूपीतुमारा देहसो सर्व
दा कालमेरे मनमें प्रगटहोवे और वरोंसें क्या प्रयोजनहै२७

इदंतेमुखांभोजमत्यंतनीलैर्वृतंकुंतलैः स्निग्ध
वक्रैश्चगोप्यामुहुश्चुंवितंविंवरक्ताधरंमे मन
स्याविरास्तामलंलक्षलाभैः २८ नमोदेवदामो
दरानंतविष्णोप्रसीदप्रभोदुःखजालाब्धिमग्नं
कृपादृष्टिवृष्ट्यातिदीनंचरक्षगृहाणेशमामज्ञमे
वाक्षिदृश्यम् २९ कुवेरात्मजौवृक्षमूर्तीचयद्व
त्वयामोचितौ भक्तिभाजौकृतौचतथाप्रेमभक्तिं
स्वकांमेप्रयच्छनमोक्षेग्रहोमेस्तिदामोदरेह ३० ॥

॥ हेभगवन् एह जो तुमारा मुख रूपी कमल जो अत्यंत काले वर्णके चिक्कणे और कुंडलों करयुक्त केशों कर्के परिवारेया हुया और विंव फलकी न्यांईहै अधरोष्ट जिनके और गोपीयशोदाने वारंवार चुंवन कराहुया सोमेरे मनमें प्रगटहोवे और लक्षलाभों कर्के क्या प्रयोजनहै परिपूर्णहै ॥ २८ ॥ हेदेव दामोदर हेअनत हेविष्णो हेप्रभोतुमारेकों नमस्कार होवे और दुःखोंके जाल रूपीसमुद्रमें डूवेहोएमेरेकों प्रसन्नहोकर कृपाकोदृष्टि रूपीवृष्टि कर्के अतिदीनअनाथजोमेंहां मेरेकों ग्रहण करो और हेईशअज्ञ मूर्खजामेंहांमेरेकों अपनेनेत्रों कर्के देखो २९ हेदामोदरजिस प्रकारकुवेरके दोनोंपुत्रवृक्षयोनीमेंप्राप्त होए हुएमुक्त करेहैं भक्तिकों सेवन वाले अपनीयोनीकों प्राप्त करेहैं इसी प्रकार अपनी प्रेमभक्ति मेरेकोंदानकरो मोक्षके होनेमें मेरा कोई हठ नहिहै की जरूर मेरेकों मोक्षही देओ ॥ ३०

नमस्तेसुदाम्नेस्फुरद्दीप्रधाम्ने तथोदरस्थविश्व
स्थधाम्नेनमस्ते नमोराधिकायैत्वदीयप्रिया
यैनमोनंतलीलायदेवायतुभ्यम् ॥ ३१ ॥ ना
रदउवाच सत्यव्रतद्विजस्तोत्रंश्रुत्वादामोदरो
हरिः विद्युल्लीलाचमत्कारोहृदयेशनकैरभूत्
॥ ३२ ॥ अंतर्हितेपितद्रूपेविकलोविललापह
इतस्ततोधावमानः पुनः पूजाकरोतिच ३३

और सुंदर देणे वाले के तांई और प्रकाशमान स्थान वाले तांई नमस्कार होवे और उदर में स्थित जगत के पालन करण वाले तांई नमस्कार होवे और अनंत है लीला जिसकी तिस विष्णुके तांई नमस्कार होवे ॥ ३१ ॥ नारदजी कथन कर्ते भये हे द्विज सत्य ब्रतके मुख सें इस प्रकारकी स्तुति अपनी सुन कर्के दामोदर हरि भगवान् सोतिसके हृदयमें विजलीकी लीलाके चमत्कारकी न्यांई धीरे जैसे उनका रूप प्रगट होता भया ॥ ३२ ॥ फिर जिस समय सोरूपाछिपगया तदसो सत्यव्रत व्याकुल होकर विलाप कर्ता भया और इधर उधर उस रूपके ढूंडने वास्ते दौडता हुया फिरपूजाको कर्ता भया ॥३३ ॥

दैवादत्रागतः सोपिधूम्रकेशोनृपात्मजः लीनो
ददर्शतत्पूजां वैष्णवींचातिकौतुकाम् ॥३४॥ रा
त्रावागत्यवेश्म यैहास्यप्रीतिरसप्रदः उवाच
तस्यवृत्तांतंसविस्तारमुदीक्षितम् ॥ ३५ ॥ त
थैवपूजामकरोत्कृत्वाचप्रतिमांमुदा तथैवना
मगृह्णीयात्सदासौदुष्टमानसः ॥ ३६ ॥एवंब
हुविधवाक्यंकृत्वाविप्रस्तुवेश्यया रेमेरात्रौत
दाप्रीतोधृतोराज्ञोधिकारिभिः ॥ ३७

उस समय प्रारब्धवश करके राजाकापुत्र धूम्रकेश उहांआय गया और लीन होकर कहीं तमासेंसें वैष्णवी पूजाकों देखता भया ॥३४॥ और रात्रिके समय अपने घरमें आय कर हास्य प्रीतिकें रस देनेवाला प्रसन्नता युक्त देखना जिसका ऐसा सो विस्तारके सहित तिसका वृत्तांत कथन कर्ता भया ॥ ३५ ॥ और जिसप्रकार उसने प्रतिमा वनाई हुईथी उसी प्रकार प्रतिमा भगवानकी वनाय कर वडे हर्षसें उसीतरांसें पूजा कर्ता भया और सो दुष्ट मनवाला उसकी तरांसें नाम ग्रहण कर्ता भया ॥ ३६ ॥ इस प्रकार तिस ब्राह्मणका वाक्यादि पूजाकीन कल वेश्याके साथ रात्रिके समय तिसके साथ प्रसन्नतासें रमण कर्ताभयातोउसमैं राजाके अधिकारियोंने पकडालिया३७

तस्यापराधंसंचिंत्यहतस्तैःस्वयमालयं नीतोदू
तैस्तदीयैस्तंददर्शपितृराट्स्वयम् ३८ ज्ञात्वा
तस्यचतत्कर्मकार्त्तिकेहरिपूजनम् मथुरायांप
रीहासव्याजेनाखिलधर्मभृत् ॥ ३९ ॥ उत्थाय
चासनात्तूर्णमातिथ्यंतस्यचाकरोत् अर्घ्यास
नादिसंपूज्यस्वदूतांस्तानगर्हत् ॥ ४० ॥

तो तिसका अपराध चिंतन कर्के सोराजाके अधिका
रीतिसकों ताडन कर्तेभये तदसो मृतहो जाता भया उसकों रा
जा धर्मके दूत पकड कर ले जाते भये तो उसकों पितरोंका
राजा धर्म आप देखता भया ॥ ३८ ॥ तिसका सोकर्म जान
कर्के क्या कार्तिक महीनेमें इसने पूजा करीहै मथुरामें वैठ
कर्के दूसरेकों हास्य करणेके वहाने कर्के उसकी महिमा जा
नकर ॥ ३९ ॥ सारे धर्मोंके जानणे वाला धर्मराजा शतावी
आसनसें उठकर्के तिसका आतिथ्य सत्कार कर्ता भया और
अर्घ्य आचमनादियोंसें पूजन कर पीछेसें दूतोंकों तिरस्कार
कर्ता भया ॥ ४० ॥

यमउवाच रेदूताभ्रष्टविज्ञानान्धिग्युष्माञ्छा
सनातिगान् यतोनिवारिताःकुर्युस्तन्मुहुर्ना
त्रसंशयः ॥ ४१ ॥ कतिधाशिक्षितायद्भक्त्या
ज्योविष्णुपरायणः नाहंतस्यप्रभुर्दंडेयूयंदंडचि
कीर्षवः ॥ ४२ ॥ इत्युक्त्वापुनरेवाहधूम्रकेशंस
धर्मराट् अहोकष्टंधूम्रकेशतवदुःखंमहत्कृतम्
४३ ॥ मथुरामागतस्यापिकृतदंडस्यपार्थिवैः
शुद्धस्यापितथाचोर्जेकृष्णपूजांप्रकुर्वतः ४४ ॥

धर्म राजा जी कथन करने लगे रे दूता भ्रष्ट होगयाहै ज्ञान जिनका एसे तुमारे कों धिकारहै जो तुममेरी आज्ञासें वाहर वर्त्ततेहो जिस वातसें तुमारे कों हटाआ सोई वात तुम वारं वार कर्ते हो इसमें संशय नहिहै ॥४१॥ कितनी वार तुमारे कों शिक्षा करी है की विष्णुके भक्त पुरुष कों त्यागना तिन कों दंड करने कों में समर्थ नहि हां तुम उनकों दंड कर्नेकी इच्छाकर्तेहो ॥४२ ॥ ऐसें तिन दूतों कों कह कर्के फिर धर्म राज धूम्र केश कों कहनेलगा हेधूम्र केश वडे क्लेशकी वातहै तेरेकों इनोंने वडा दुःख दियाहै ॥४३॥ मथुरामें तूं आया हुया राजाने तेरे कों दंड भी देदिया शुद्ध होए हुए तेरेकों और कार्त्तिक में कृष्ण जीकी पूजा कर्ते होएकों ॥ ४४ ॥

वैकुंठपुरवासाययोग्यस्यतवशासना मृत्युना
नयनंचापियुज्येतनकदाचन ॥ ४५ ॥ धूम्रके
शउवाच सर्वथाजन्मपापेनयुक्तस्यैवतुमेविभो
कथंशुद्धिःप्रजायेतकुतोवैकुंठयोग्यता ॥ ४६॥
महदाश्चर्यमुक्तंतमहान्मेनुग्रहःकृतःकस्यपुण्य
स्यमाहात्म्यात्पापोहंयामिसद्गतिम् ४७ ॥
नाहंवेद्मिवपुण्यस्यपापस्यापिचलक्षणंत्वंन्मु
खाच्छिन्नसंदेहस्ततोयास्यामिसद्गतिम् ४८

तेरेकोंजो तूं वैकुंठ में वास करनेके योग्यहैं ऐसेकों दंड देना और मृत्युने ल्यावना एह कदीं भी योग्य नहि हय ॥४५॥ इतना वाक्य सुन कर धूम्र केश कहने लगा हेविभो जन्मसें लेकर पाप करने वाला जो मैंहां मेरेको दंड होना योग्यहै पापीकी दंडसें विना शुद्धि कैसें होनी और वैकुंठ की योग्यता कैसे होनीहै ॥ ४६ ॥ एह तुमने वडे आश्चर्यकी वात कहीहै तुमने वडी कृपा करीहै परंतु में किस पुण्यके माहात्म्य सें पापी में सद्गति कों प्राप्त होआं ॥ ४७ ॥ और हेधर्मराज पुण्य पाप के लक्षण में नाहि जानता हुं किपुण्य वस्तु क्याहै और पाप क्याहै सोतुमारे मुखसें सुनकर निःसंदेह क्या विना संशय वाला होएआहुया सद्गतिकों प्राप्त होवांगा ४८ ॥

यमउवाचनमस्कृत्यारविंदाक्षंनारायणमनाम
यं धर्मंतेहंप्रवक्ष्यामिधूम्रकेशशृणुष्वतत् ४९
वेदप्रणिहितोधर्मोह्यधर्मस्तद्विपर्ययः तत्रापि
द्विविधोधर्मः प्रवृत्तोथनिवृत्तिकः॥५०॥ अर्था
नुरागिणः पुंसः प्रवृत्तोधर्मउच्यते अर्थानर्थदृ
शः पुंसोभक्तस्यचहरौतथा ॥ ५१ ॥ निवृत्तः
प्रोच्यतेसद्भिरधिकारिव्यवस्थया एकएवहि
धर्मोपिफलेच्छानियुतायुतः ॥ ५२ ॥

इतना वाक्य तिसके मुखका श्रवण कर यमजी कथन कर्तेभये निर्विकार जो कमलकी न्यांई नेत्रोंवाले नारायण तिनकों नमस्कार कर हे धूम्रकेश तेरेकों धर्मके लक्षण कथन कर्ताहुं सोतूं श्रवण कर ॥ ४९ ॥ जोवेदमें कथन कराहै सो धर्महै तिसवेदमें जिसका निषेधहै क्या अमुक कर्म नहि करणा सो अधर्म पापहै उनदोनोंके मध्यमें धर्मभी दोप्रकारका है एक प्रवृत्तिमार्गकाहै दूसरा निवृत्ति मार्गकाहै ॥ ५० ॥ जिस धर्मके करणेमें अर्थ प्रयोजनोंकी इच्छाहैं सो प्रवृत्त कहीदाहै और अर्थमें अनर्थ देखना परमार्थ चिंतनकरणासंसारकी इच्छानहि जिसमें और हरि भक्ति करणे वालेकों निवृत्तिधर्म किहाहैं ॥५१॥ सोनिवृत्ति धर्म सत्पुरुषोंने अधिकारि व्यवस्थाकर्के कहाहै और सोधर्म एकहीहै परंतु फलका ग्रहण इन कर्के दोप्रकार का कहा जाता है ॥ ५२ ॥

अथान्यच्छृणुसंगोप्यंप्रीत्यावक्ष्ये नृपात्मज
येनधर्मेणगोविंदेभक्तिर्जायेतवैष्णवी ॥ ५३ ॥
श्रवणंकीर्त्तनंविष्णोः स्मरणंपादसेवनं अर्चनं
वंदनंदास्यं सख्यमात्मनिवेदनम् ॥ ५४ ॥ इ
तिपुंसार्पिताविष्णौभक्तिश्चेन्नवलक्षणा यैःकृ
ताभक्तियुक्तैश्चतेमुक्तानात्रसंशयः ५५ श्रीवि
ष्णोःश्रवणेपरीक्षिदभवद्वैयासकिः कीर्त्तने प्र
ल्हादः स्मरणेतदंघ्रिभजनेलक्ष्मीःपृथुःपूजने

हेराजाके पुत्र अब और बडी गुप्तवात तेरेकोंकहताहुं सोतूंश्रव
ण कर जिस धर्मकेकरणे करके वैष्णवभिक्ति गोविंदजीमे उत्प
न्नहोतीहै ॥ ५३ ॥ सोंनौ प्रकारकी भक्तिहै मुख्यतोविष्णुके गु
णोंकों श्रवण करना फिरउनका कीर्तनकरणा स्मरण कर्णा भ
गवानजीके चरणों की सेवाकरनी पूजाकर्णी नमस्कारकर्णी उ
नका दास्यभावकर्णा उनकेसाथ सख्यक्या मैत्रिभाव रखना अ
पना आप निवेदन करना ॥ ५४ ॥ एह नौलक्षणों वालीभक्ति
विष्णुकी भक्ति पुरुषों में अर्पित करीहै क्या स्थापन करीहै
एहजिन पुरुषोंने करीहै भक्ति युक्त मनवालेयोंने सो मुक्तपुरुषहैं
इसमें संशय नहिहै ॥५५॥ विष्णुके गुणसुननेमें राजा परीक्षित
होता भया शुकदेवजी सुनाने वाले होते भये प्रल्हाद स्मरण
करनेवालाहोता भया और चरणों की सेवामें तत्पर लक्ष्मी
होती भई पूजा करनेमें पृथु राजा होता भया

अक्रूरस्त्वभिवंदनेकपिपति दास्येतुसख्येर्जु
नःसर्वस्वात्मनिवेदनेबलिरभूत्पर्याप्तिरेषांपरा
५६ परहास्यपरेणापिकृष्णपूजाफलंत्विदम्
नामाभासेनशुध्यंतिमहापातकिनोजनाः ५७
तस्यवैकुंठनाथस्यपूजावैभवताकृता यद्घोर
नरकार्हस्यवैकुंठनयनंह्यभूत् ५८ तस्मान्नृपा
त्मजश्रेयः परंकिंचिन्नविद्यते शंखिनश्चक्रि
णोभूत्वाशालग्रामशिलासुच ५९

वंदनामे अक्रूर सेवामें हनुमान सख्यिभावमें अर्जुन और सर्वस्व के सहितआत्म निवेदन करनेमें बलिराजा होता भया इनकी पर्याप्तिहोती क्या भगवान इनकेगति होते भये ॥ ५६ ॥ पराई पूजा देख कर्के हांसी करनेमें तत्पर होए हुएने कृष्ण पूजाका एह फलहै और उस परमेश्वरके नामलेने कर्के महा पापी पुरुष शुद्धहोजातेहैं ॥ ५७ ॥ तैनेतो तिस वैकुंठ के स्वामीकी पूजा करीहैं जो पुरुष घोर नरकों के योग्य होताहै सो वैकुंठमें चला जाताहै ॥ ५८ ॥ तिस कारणसें हे राजके पुत्र परमेश्वरसें विना और कुछ कही कल्याण नहि प्रतीत होती है जो पुरुष शंख चक्रके चिन्हों वाला होकर शालिग्रामकी शिलामें ॥ ५९ ॥

समभ्यर्च्यंहरिंयांतिनरास्तद्वैष्णवंपदं अथ
वासर्वदापूज्योवासुदेवोमुमुक्षुभिः ॥ ६० ॥
शालग्रामशिलाचक्रेवज्रकीटविनिर्मिते अधि
ष्ठानंहितद्विष्णोःसर्वपापप्रणाशनम् ६१ सर्व
पुण्यप्रदंचैवसर्वेषामपिमुक्तिदं नरकंगर्भवा
संचतिर्यक्त्वंकृमियोनितां नयातिनृपपापोपि
शालग्रामाच्युतार्चकः ६२ इतिश्रीपद्मपुराणे
कार्तिकमाहात्म्येधूम्रकेशोपाख्यानेसमाप्तम्

नारायणजीका पूजनकर्तेहैं सो पुरुष वैष्णवपदकों प्राप्त होतेहैं अथवा जो मोक्षकी इच्छावालेहैं तिनोंने वासुदेवजीका पूजन करना ६० और वज्र नामक कीडे कर्के वनाए हुएजो शालिग्रामके शिला चक्र तिनमें सम्पूर्ण पापोंके नाश करने वालातिस विष्णुका अधिष्टानहै ॥ ६१ ॥ और सभतरांके पुण्य देने वालाहै सारे पापों के नाश करने वाला और सभनों कों मोक्ष देनें वालाहै और जो कोई पुरुष शालिग्रामकी शिलामें अच्युत भगवान् जीका पूजन कर्ताहै सो नरकों में नहि जाता है फिर उसका गर्भमें वास नहि होताहै और तिर्यक् योनिजो पशुपंछियो की तिसमें नहि जन्मताहै ॥ ६२ ॥ एह पद्मपुराण के कार्त्तिक माहात्म्यमें धूम्रकेशका उपाख्यान समाप्त हु ॥

भक्तमालायांवस्त्रमाहात्म्येचेतिहासमाह यःपू
र्वंवल्लभाचार्यःसंप्रदायप्रवर्त्तकः प्रोक्तस्तस्य
सुतोनाम्नाविठ्ठलेतिबभूवह ॥ १ ॥ महाभक्तो
जितक्रोधोविजितेंद्रियसंचयः मथुरायांकलौ
येनद्वापरः प्रकटीकृतः ॥ २ ॥ सोपिकृष्णाज्ञया
दारपरिग्रहमथाकरोत् तस्यपुत्राश्चसप्तास
न्नामान्येषांब्रवीम्यहम् ३ रघुनाथोघनश्यामो
यदुनाथस्तथैवच श्रीमहोकुलनाथश्चवालकृ
ष्णस्तथैवच ॥ ४ ॥

भक्तमालामें वस्त्रके माहात्म्यमें इतिहास कथन कर्तेहैं जौनसा पीछे वल्लभा चार्य संप्रदाय प्रवृत्त करने बाला कथन कराहै तिसका पुत्र विठ्ठल नाम कर्कें होताभया ॥ १ ॥ सोकैसाथा बडा परमेश्वरका भक्त क्रोध जिसने जीतया हुयाऔर इंद्रियोंका समूह जिसने जीता हुया ऐसा भया जिसने कलि युगके विषें द्वापर प्रकट कराहैं ॥ २ ॥ सोभी श्री कृष्णजीकी आज्ञा कर्कें दाराका परिग्रह कर्ता भया क्या विवाह कर्ता भया तिसकें सात पुत्र होते भये उनके अब नामकथन कर्ताहुं ॥ ३ ॥ रघुनाथ १ घनश्याम २ यदुनाथ ३ श्रीमहोकुलनाथ ४ वालकृष्ण ५

श्रीगोविंदोगिरिधरः सर्वेतेवैष्णवोत्तमाः पित्रा
ज्ञयोषुः सर्वैतेस्थानंकृत्वानिजंनिजम् ॥ ५ ॥
वज्रनाभकृतामूर्तीःसप्तसप्ताभ्यपूजयन् तेषां
नामानिवक्ष्यामिसर्वपापहराणिवै ॥ ६ ॥ गोविं
ददेवःश्रीनाथस्तथागिरिधरःस्मृतः चतुर्भुजे
तिविख्यातोहरिदेवस्तथैवच ॥ ७ ॥ श्रीमत्के
शवदेवश्चतथावंशीधरःपरम् एतन्नाम्नापूजयं
तोनिजाचारप्रवर्तकाः ॥ ८ ॥

श्रीगोविंद ६ गिरिधर ७ एह सारेही उत्तम वैष्णव होतेभये और
पिताकी आज्ञा कर्के सारेही अपने स्थान वनावतें भये॥ ५ ॥
और वज्रनाभकी मूर्तियां वनाके सातोही पूजते भये अव तिन
केनाम पापोंके हरणे वाले कहता हुं॥ ६ ॥ गोविंद १ श्रीनाथ २
गिरिधर ३ चतुर्भुज ४ हरिदेव ॥ ५ ॥ और श्रीमत्केशवदेव ६
वंशीधर ७ इतने नामों कर्के अपना आचार प्रवृत्त कर्णे वाले
ओहसातों पूजन कर्ते भये ॥ ८ ॥

सर्वैवभूवुर्विख्याताश्रद्यापिपृथिवीतले अथ
विठ्ठलाशिष्यस्यकायस्थस्यकथांब्रुवे ॥ ९ ॥ ना
थद्वारेतिविख्यातापश्चिमेवैष्णवीपुरी तत्रश्री
नाथदेवोस्तिभुक्तिमुक्तिप्रदायकः ॥ १० ॥ श्री
मांत्रिपुरदासोभूत्तत्रैकोराजकृत्सदा कायस्थः
समहाभक्तः पूजयामासवैष्णवान् ॥ ११ ॥
श्रीनाथस्वामिनेसोथप्रतिवर्षंनवंनवम् तत्त
त्कालोचितंवस्त्रंमहार्घंप्रददौसदा ॥ १२ ॥

सो सातोंही आज तकर पृथ्वीके तलमें प्रसिद्ध हैं ऐसे पर
म भक्तहोते भये अब विठ्ठल भगवान् जीका शिष्य कायस्थ
भक्त उसकी कथा कहतेहैं ॥ ९ ॥ पश्चिम दिशामें नाथद्वारा
नाम एक वैष्णवोंकी पुरीहै तिसमें भुक्ति मुक्तिके देनें वाले श्री
नाथनाम करके भगवान् जीहैं ॥ १० ॥ उसी नगरीमें राजाका
अधिकारी त्रिपुर नामक कायस्थ भक्त निवास कर्ताथा सोवैष्ण
वों साधुयोंकों पूजन कर्ता भया ॥ ११ ॥ और सोई त्रिपुरदा
सकायस्थ भक्त श्रीनाथ स्वामिकों वर्ष २ में समय २ केयोग्य
जौनसें अति सुंदर वडे मोलके वस्त्रसो देताथा ॥ १२ ॥

अथकालेनकियतात्रिपुरोनिर्धनोभवत् शोच
यित्वासदुःखेनव्रतसंरक्षणायच ॥१३॥ यथाक
थंचिदानीययेनकेनाप्युपायतः रुदन्छ्रीनाथ
मूर्त्तौतुवासःस्थूलतरंददौ ॥१४॥ पूजकेनतदा
दृष्ट्वावस्त्रंतत्स्थापितंक्वचित् नयोग्यमितिम
त्वान्यत्प्रददौवस्त्रमुत्तमम् ॥ १५ ॥ अथरात्रौ
महाशीतेतुषारैराकुलेजने ददर्शपूजकः स्वप्ने
श्रीनाथंतादृशंगृहे ॥ १६ ॥

इसी प्रकार वर्तता हुया त्रिपुरदास निर्धन होगया तद मनमें व
डा शोककरा तिसने अबक्या करां कैसे भगवान्के वस्त्र वने
व्रतमेरा दूरहोताहै इसतरां चिंतन कर ॥ १३ ॥ व्रतक्या निय
मकी रक्षाके वास्ते जिस किस उपाय कर्के होतेथे ऐसें वनाय
कर रोदन कर्ता हुया श्रीनाथ जीका भक्त मोटे कपडेके वना
यकें भगबान् जीके चढाय आया ॥ १४ ॥ पुजारीने सो वस्त्र
देखे मनमें चिंतन कराकी एह कुच्छ नहिहै इनका क्या लगा
ना भगवानको ऐसे विचार कर कही किनारे रखछोडे और
अच्छे सुंदर वनाए हुए लगाए ॥ १५ ॥ तद इसवातके पीछे
दिन व्यतीत हुया रातके समय ऐसा महाशीत पडा कितुषारों
केसाथ क्या ठंडके साथ लोकोंके व्याकुल होएहुए पुजारीस्व
प्नमैं श्रीनाथजीकों मंदिरमेंही देखता भया ॥ १६ ॥

अहोशीतातुरोस्म्यद्यनैतैर्वस्त्रैःसुखंमम त्रिपुरे
णचयद्दत्तंतदर्प्पयममोपरि १७ तदासुखंस्या
न्नोचेदीदृशीतंमांबाधतेभृशम् दृष्ट्वापिस्वप्नंनो
त्तस्थौमहाशीतभयेनसः १८ पुनःस्वप्नंतथैवा
सीद्ददर्शपूजकोनिशि ततउत्थायसहसात्रिपु
रार्पितमंशुकम् १९ ददौश्रीरंगनाथस्यशरीरे
सतुपूजकः मत्वाश्चर्यंसभक्तस्तुप्रातरुत्थायभ
क्तितः२०श्रीमत्त्रिपुरदासस्यसत्कारंकृतवान्भृ
शम् एवंभक्तिवशोदेवोभक्तदत्तमभीप्सति २१

हेद्विज अब इससमय शीतकर्के आतुरहां इनां लगे होए वस्त्रों
कर्के सुखनहि मेरेकों होताहै इसवास्ते आज त्रिपुरदासने जौ
नसें वस्त्रचढाएहैं सोमेरें ऊपर आनके देदे ॥ १७ ॥ तद मेरें
कों सुखहोताहै नाहि तो शीत वहुत पीडा करेया कर्ताहै
इस प्रकारका स्वप्न देखकर्केभी महाशीतके भय कर्के पुजारी
नाहि उठता भया १८ तद फेर उसीतरांका स्वप्न तिसकों होता
भया तिसकों देखकर रातकेसमय निद्राका त्याग कर उठके मं
दिरमें चला गया तहां जाके त्रिपुरके चढाए होए वस्त्रभगवान
जीके ऊपर चढा देताभया १९ भगवान जीके ऊपर वस्त्र चढा
यकर मनमें आश्चर्य मानता भया और प्रातःकाल उठकर्के २०
वडी भक्ति प्रीतिसें त्रिपुरदासका वडा सत्कार कर्ता भया इसप्र
कारभक्तोंके वशी भूत भगवानजी भक्तोंकी दई हुई वस्तुयोंकी
इछा कर्तेहैं २१ एह भाक्ति माहात्म्यमें वस्त्रोंकी महिमा कहीहै॥

अथ केशवसन्निधौ दीपप्रज्वालनमाहात्म्य
नरसिंहपुराणे घृतेनातिलतैलेनदीपंयोज्वाल
येन्नरः विष्णवग्रेविधिवद्भक्त्यातस्यपुण्यफलं
शृणु १ विहायसकलंपापंसहस्रादित्यसन्निभः
ज्योतिष्मताविमानेनविष्णुलोकेमहीयते अ
श्वमेधसहस्रस्यफलमाप्नोतिमानवः२ संवर्तः
देवागारेद्विजानांचदीपंदत्त्वाचतुष्पथे मेधावी
ज्ञानसम्पन्नश्चक्षुष्माञ्जायतेनरः३ भविष्यो
त्तरे प्रज्वाल्यदेवदेवस्यकर्पूरेणतुदीपकं अश्व
मेधमवाप्नोतिकुलंचैवसमुद्धरेत् ४ ॥

अब केशव भगवानजी के आगे दीप जगाने का माहात्म्य लिखतेहैं नरसिंहपुराणमें कहाहै जो कोई पुरुष घृतके साथ वा तिलोंके तेलके साथ विष्णु के आगे दीप जगाताहै भक्ति करके तिसके पुण्यकाफल श्रवणकर १ सो पुरुष मृत होए आ हुया सारे पाप त्यागकरहजार सूर्यकीन्यांई शोभा वाला होएआहुया प्रकाशमान विमानके ऊपर चढ कर विष्णुलोकमें जाकरमहिमाकोंप्राप्तहोताहै और सो मानवहजार अश्वमेध यज्ञ करनेके फलकों प्राप्तहोताहै२ संवर्त्तऋषिजीने एह वातकहीहै कि देवताके मंदिरमें औरब्राह्मणोंकेघरमें औरचुरस्तेमेंदीप दानकर्के मेधावीज्ञानकरयुक्तवडेप्रकाशवालेनेत्रोंवालाहोताहै३ भविष्यो त्तरमेंकहाहै पुरुषजोहै देवताविष्णुके आगेकपूरकादीपजगाकर अश्वमेधयज्ञकेफलकों ाप्तहोताहै और कुलकाउद्धारकताहै ४

यथैवोर्ध्वगतिर्नित्यंराजन्दीपशिखा शुभादीप
दातुस्तथैवोर्ध्वगतिर्भवतिशोभना तस्मात्सर्वं
प्रयत्नेनदीपादेयानरेश्वर ३६ पुनस्तत्रैव दी
पहर्त्ताभवेदन्धःकाणोनिर्वापकोभवेत् दीपदा
नात्परंदानंनभूतंनभविष्यति ३७ पद्मसूत्रोद्भ
वांवर्तिंगन्धतैलेनदीपके विरोगःसुभगश्चैवद
त्वाभवतिमानवः३८ इष्टव्यंदेवदेवस्यकर्पूरेण
चदीपकं अश्वमेधमवाप्नोतिकुलंचैवसमुद्धरेत् ३९

और हेराजन् जिस प्रकार शुभ क्या सुंदर जो दीपकीशिखा ऊर्ध्व गति वाली होतीहै क्या ऊपर कों होतीहै इसी प्रकार दीपदान करने वालेकी भी गति ऊपर कों होतीहै क्या उस की वडेआई संसारमें सभसें अधिक होतीहै इस कारणसें सभ तरोंकें यत्नोंसें हेनरेश्वर दीपदान करणा योग्यहै३६ फिरउसी पुराणमें लिखाहै कि जो पुरुष मंदिर सें जगते होए दीपकों उठाके लेजावे सो जन्मांतर में अंधा होताहै और कोई उसी स्थानपर जगते दीपकों वुझा देवे सो काणा होताहै क्यों कि दीपदानसें अधिक होरकोई दानन पीछेहुया ना होवेगा ३७ कमलके सूत्रकी वट्टी वनायकर सुगंधिवाला तैलपायकर दीप जगाने वाला पुरुष नीरोगहोताहै और सौभाग्यवाला होताहै ३८ और देवतैयोंके देवताजो विष्णुजीहैं तिनके आगेकचूर का दीप जगानायोग्यहै औरजोकोई जगावताहै सो अश्वमेधके फलकों प्राप्तहोताहै और अपने कुलका उद्धारकर्ताहै ३९

एतन्मयोक्तंतवदीपदानेफलंसमग्रंयदुवंशचंद्र श्रुत्वाययथावत्सततंचदेयादीपास्त्वयाविप्रसुरालयेषु ॥ ४०॥ मार्कंडेयउवाच अत्राप्युदाहरंतीममितिहासंपुरातनं दीपदानाल्ललितिकाय दवापपुरान्नृप॥ ४१ आसीच्चित्ररथोनामविदर्भेषुमहीपतिः तस्यपुत्रशतंराज्ञोजज्ञेपंचदशोत्तरं ॥ ४२ ॥ एकैवकन्यातस्यासील्ललितानामनामतः सर्वलक्षणसंयुक्तारूपेणाप्रतिमाभुवि॥ ४३ ॥

हे यादवोंके वंशमे चंद्रमाके तुल्य मैंने तुमारेकों दीप दान का साराही फल कथन करदियाहै इसकों श्रवण कर्के तैंने देवताके मंदिरमें और ब्राह्मणोंके घरसें आदलेकर जौनसें दीप जगानेके योग्यस्थानहैं उनमे दीप दान करणे योग्यहै ॥ ४० मार्कंडेयऋषिजी कथनकर्तेहैं इसदीपदानकी महिमामेंप्राचीन इतिहास कथनकर्ताहों जिसकथामेंहेराजनूपूर्वएकसमयललिता नाम वालीस्त्री दीपदान करणेंसें जिस फलकों प्राप्त होती भई ॥ ४१ ॥ पूर्व एकसमय विदर्भ देशमें चित्ररथनाम कर्के राजा होताभया तिसके घर एकसौ पंदरां ११५ पुत्र जन्मते भये ॥४२॥ और ललिता नाम्नी एकही कन्याथीसारे शुभक्या संदुर लक्षणों कर युक्त और रूपकर्के पृथिवीमे तो अप्रतिमा थी क्या उसके तुल्य किसी औरका रूपनाहिथा॥ ४३ ॥

तांददौकाशिराजायतत्पिताचारुधर्मणे शता
नितस्यभार्याणांत्रीणूयासंश्चारुधर्मणः ४४॥
तासांमध्येग्र्यमहिषीललितास्यतदाभवत् वि
ष्णोरायतनेतस्याःसहस्त्रंराजसत्तम ॥ ४५॥
प्रदीपानांप्रज्वलतिदिवारात्रमरिंदम तामिस्त्र
माश्वयुक्पक्षंशुक्लपक्षंचकार्तिकात् ॥ ४६ ॥
तस्याःप्रज्वलितंदीपमुच्चस्थानकृतंतथा त
स्मिन्कालेतथानित्यंब्राह्मणावसथेषुच ४७॥

तिसका पिता तिसकों श्रेष्ठ धर्म वाले काशि राजके ताईं विवाह देता भया और तिस धर्मात्मा राजाकी आगेही ती नसौं राणीथी ४४ तिनके मध्यमैं ओह ललिता तिसकी मुख्य प्रीति वाली राणी होती भई और तिस राणीका विष्णुकें मंदिरमैं ४५ हेराजसत्तम हजार दीप जगताथा दि न रात और हेअरिंदम आश्विनकें कृष्णपक्षसें लेकर कार्तिक के शुक्लपक्ष पर्यंत उंचे स्थान पर जगाए होए जगतेथे औरउ नाही दिनोंमैं उसके जगाए होए ब्राह्मणोंकेघरोंमैंभी दीपजग तेथे॥ ४७ ॥

नित्यंव्रजतिसायाह्नेदीपप्रेषणतत्परा चतुष्प
थेषुरथ्यासुदेवतायतनेषुच ॥४८ ॥चैत्यवृक्षे
षुगोष्ठेषुपर्वतानांचमूर्द्धसु पुलिनेषुनदीनांचकू
पमूलेषुयादव ॥४९॥ तांसपत्न्योथसंगम्यप
प्रच्छुरिदमादरात् ॥५०॥ सपत्न्यऊचुःसर्वध
र्मान्परित्यज्यललितेत्वंसदैवतु विष्णोरायत
नेसुभ्रुदीपदानपरायणा ॥ ५१ ॥ तदेतत्कथ
यास्माकंललितेकौतुकंपरं मन्यामहेत्वयाव
श्यंदीपदानफलंश्रुतम् ॥ ५२ ॥

सो ललिता सर्वदा काल सायंकालके समय नित्यहि दीपजगा
वती २ फिरतीथीसोकौनसोयों जगों पर दीप जगावतीथी सो
कहतेहैं चुरस्तामै और अंधयारीयों गलियोंमैं देवताकेमंदिरोंमें
४८ पिप्पल वोड इत्यादि वृक्षोंके नीचे गौयोंकी शालामैं और
पर्वतों के शिखरों पर और नदियों के घाटों पर खूहें के उपर
॥ ४९ ॥हेयादव इत्यादि स्थानों पर दीपजगाती फिरती थी
तब तिसकीयां सपत्नीयां उसके पास जाकर वडेआदरसें
एहबात पूछने लागियां ॥ ५० ॥ तिसकीयां सपत्नियां कहतीयां
हैं हेंललिते तूंजो सर्वदा काल और सभतरांके धर्मत्याग कर वि
ष्णुके मंदिर सें आदलेकर स्थानों पर दीप जगावतीहैं ॥५१॥
हेसुभ्रु एहवातहमारेकोंभी कथनकर वहुत हमारें कों इच्छा है
किसवास्ते कि हम एहवात मनमैं मानतियां हां कि तैनें अ
वश्य कहीं सें दीपजगानेका माहात्म्यसुनाहुयाहै ॥ ५२ ॥

ललितोवाच नाहंमत्सरिणीभद्रानचरागादि
दूषिता एकपत्न्याश्रयायाताभवत्योमममान
दाः॥ ५३ ॥ अपृथग्धर्मचरणाः शृएवंतुगदितं
मम मयावैदीपदानस्ययथावैभुज्यतेफलम् ॥
५४ ॥ हरस्यदयिताभार्याशैलराजसुतावरा
उमादेवीतिमद्रेषु देविकायासरिद्वरा ॥ ५५ ॥
नराणामनुकंपार्थंब्राह्मणैरवतारिता तीरयोरु
भयोस्तस्याक्षेत्रंक्रोशचतुष्टयम् ॥ ५६ ॥

उनका वचन सुनकर ललिता कहने लगी हेभद्राः कल्याणरू पिणीयों तुमारेसाथ मत्सर नहिकर्तीहां क्या ईर्ष्या द्वेष नहिक र्तीहां और रागादियों करके दूषित नहिहां और हम सारियांही एक पतिकीयां स्त्रियांहैं पर तुसीं मेरेकों मान वडाई देतियांहो ५३ ॥ और नहिहै भिन्नधर्मका आचरण जिनका ऐसियांतुम सभीमेरा वचन सुनों जो कुछमें कथन कर्तीहांक्या जिसप्रकार मैंनेदीप दान करनेका फलभोगीदाहै ॥ ५४ ॥हर महादेवजी की जौनसी प्यारी स्त्री शैलराजकी पुत्रीहै वहुतश्रेष्ठउमातिस कानामथासो मद्रदेशमें देविका नामक नदीरूप होंगईहै ॥ ५५ परलोकोंके उपकार के लिये ब्राह्मणोंने कैलासथें उतारीहै उ सदेविकाके दोनों किनारोंमें चार कोशका एक क्षेत्रहै ॥ ५६ ॥

तस्मिंस्तीर्थेतुपानीयंसर्वंतीर्थंप्रकीर्त्तितं त
स्मिंस्तीर्थेमृतामर्त्याः प्राप्नुवंतिशुभांगतिम्
॥ ५७॥ श्रुताभिलषिताद्दृष्टादेविकापापना
शिनी तस्यांस्नात्वासकृन्मर्त्योगाणपत्यम
वाप्नुयात् ॥ ५८ ॥ तस्यांतीर्थंनृसिंहाख्यंसर्वं
कल्मषनाशनं नृसिंहवपुषास्नानंकृतंयत्रपुरा
शुभम् ॥५९ ॥ सौवीरराजस्यपुरेमैत्रेयोमत्पु
रोहितः तस्मिंस्तीर्थेतदातेनविष्णोरायत
नंकृतम् ॥ ६० ॥

तिसतीर्थमें जितना जलहै सो साराही पवित्र तीर्थ रूपक
थनकराहै तिसतीर्थमें मृत होए हुए मनुष्यमात्र शुभ क्या उत्तम
गतिकों प्राप्त होतेहैं ॥ ५७ ॥ फिरकैसी तीर्थरूप देविकाहै जो
कोई उसकी महिमा श्रवण करे और जो उससमय स्नानादियों
की इछा रखताहै और जो कोई उसका दर्शन कर्ताहै उनके
सब पाप देविका नष्ट कर्तीहै और मनुष्य उसमें एक वार भी
स्नान करके गणोंके पति भावकों प्राप्त होताहै ॥ ५८ ॥ तिसक्षे
त्रके अंतर्गतही नृसिंहाख्य एक तीर्थहै सारे पापों के नष्ट कर
ने वाला जिसतीर्थमें नृसिंह देहको धारण करे होए भगवान
जीने पूर्वसमय शुभ स्नान कराथा ॥ ५९ ॥ सौवीरराजाथा उ
सके पुरमें मेरामैत्रेय नामक पुरोहित निवास कर्ताथा उहां उस
नगर में उसनेविष्णु भगबान् जी का मंदिर वनायाथा ॥ ६० ॥

अहन्यहनि शुश्रूषांपुष्पधूपानुलेपनैः दीपदा
नादिभिश्चैवचक्रेतत्रसर्वैर्द्विजः ॥ ६१ कार्ति
केदीपकास्तत्रप्रदत्तास्तेनचैकदा आसन्निर्वा
णभूयिष्ठादेवार्चनरतोनिशि ॥ ६२ ॥ देवताय
तनेवात्सीत्तदाहमपिमूषिका प्रदीपवर्त्तिहरणे
कृतबुद्धिर्वरानना: ॥ ६३ गृहीताचमयावर्त्तिर्द्दं
षदंशोररावच नष्टाचाहंतदातस्यमार्जा रस्य
भयात्ततः ॥ ६४ ॥

सो पुरोहित प्रतिदिन पुष्प धूप लेपनादियों कर्के और अनेक तरांके दीपदाना दियों कर्के भगवान्जीकी सेवाकर्ता भया ॥ ६१ ॥ तोएक दिन कार्तिकके महीनेमें तिसने मंदिरमें वहुत दीपजगाए और आप भगवान्जीकी पूजामें तत्पर होके रातके समय वैठता भया तद उनदीपोंमेंसें वहुत दीप निर्बाण होतेभये क्या वुझजाते भये ॥ ६२ ॥ हेवरानना: श्रेष्टमुखवा लियों उससमय में मूषकी क्या चूही तिस मंदिरमें निवास कर्तीथी तदमैंने दीपवट्टी हरणेमें वुद्धि धारणकी इनोंदीपोंमेंसें वट्टीयां ल्यावतीहां ॥ ६३ ॥ ऐसा चिंतन कर मैंने वाहर निकलके एकदीपसें वट्टी ग्रहण करी तदउसी समय मार्जारने शब्दाकिया तद तिसका शब्दसुनकर तिसके भयसैंमै भागती भईं ६४ ॥

वर्तिप्रांतेननश्यंत्यादीपकःप्रेरितोमया जज्वा
लपूर्ववद्दीप्त्यातस्मिन्नायतनेपुनः ६५॥ मृता
चाहंतदाजाताविदर्भराजकन्यका जातिस्मरा
महीपस्यमाहिषीचारुधार्मणः॥ ६६ ॥ एषप्र
भावोदीपस्यकार्त्तिकेमासिशोभनः दत्तस्या
यतनेविष्णोर्यस्येयंतुष्टिरुत्तमा ॥ ६७ ॥ यदि
वोनास्तिमात्सर्यंदीपादेयाःसदाशुभाः असंक
ल्पितमप्यस्यप्रेरणंयत्कृतंमया ॥ ६८ ॥

भागतोहोए मैने वट्टीके प्रांतकर्के दीप प्रेराहुया तिस मंदिरमें फिरप्रकाशित होके पूर्वकी न्यांई जगता भया ॥ ६५ ॥ और मैं उहां मृतहोगई उसके प्रभावसें अब विदर्भराजाकी कन्या हुईहां और पिचला जन्मभी मेरेकों स्मरणहै और श्रेष्ट धर्म वाले राजाकी राणीहां इतना प्रभाव कार्तिकमें विष्णुके आगे दीपकी ऊंची ज्योति करणेसें मेरेकों हुयाहै तो दी पजगानेसें क्या फल होता होगा ॥ ६६ ॥ और कार्तिक म हीनेमें दीप जगानेका सुंदरजो प्रभावसो कथन कराहै जिस दीपके विष्णुजीके मंदिरमैं जगानेसें भगवानजीकों इतनी प्र सन्नता होतीहै ॥ ६७ जेकर तुमारें मनमें मत्सरता नहिहै त दसवंदा काल सुभ सुंदर दीप जगाया करो क्योंकी एह प्रत्य क्षफल देखो विनाजाने चिंतन किये मेरेकों दीपकी जोतिव धानेका इतना फल हुयाहैतो जोकोई जान बूझकर जगावेगा उसकों खवर नहिक्या फल होवेगा ॥ ६८ ॥

केशवालयदीपस्यतस्येदंभुज्यतेफलं एतस्मा
त्कारणाद्दीपानहमेतानहर्निशम् ॥ ६९ ॥ प्रय
च्छामिहरेर्धाम्निज्ञातस्यचहियत्फलम् ॥ ७०
मार्कंडेयउवाच एवमुक्ताः सपत्न्यस्तादीपदा
नपरायणाः बभूवुर्देवदेवस्यकेशवस्यसदागृहे
॥ ७१ ॥ ततः कालेनमहतातेनराज्ञामहात्म
ना विष्णुलोकमनुप्राप्ताः पंचत्वंप्राप्यमानद
॥ ७२ ॥ तंलोकमासाद्यनृपेणसार्धंसाराजपु
त्रीकमलाभरूपा रेमेमहीपालसदासमेतादीप
प्रदानाच्चयवनाद्विमुक्ता ७३ इतिदीपमहिमा

एह अब जौनसा सुख भोगेआ कर्तीहां सो तो पिचले जन्म
में करे होए दीपका है जौनसा चूहीके जन्ममें कराहै इस का
रणसें दिनरात्रइनोंदीपोंकों हरिकेधाममें जगाती फिरतीहांक्यों
की इसका फलमैंने जान लियाहुयाहै ७० मार्कंडेय ऋषिजी
कथन करतेहैं एवमिति इस प्रकार कथन करियां हुईआं सा
कुणीं सो भी दीप दान करणेमें तत्पर होति यां भईआं सर्वदा
काल देवता केशवजीके मंदिरमें ॥ ७१ ॥ तिससें उपरंत हे
मानद कितनाक समय व्यतीत होए पीछे राजाके मृत होए
पीछे सहगामिनिआं होकर विष्णु लोकमें जाय कर प्राप्त हो
तियां भईआं ७२ तिस लोकमें प्राप्त होकरराजाके साथकमल
की सुंदर मुख वाली राजाकी पुत्री उहांके सुख भोग भोगती
भई ७३ एहविष्णुकेआगे दीपजगानेकीमहिमा कथन करीहै

नारायणसन्निधौ दीपप्रज्वालनमाहात्म्येचेति
हासमवतारयतिभक्तमालायां अथमाधवदास
स्यकथांवक्ष्येमनोरमांयस्याः श्रवणमात्रेणनरो
भक्तिमवाप्नुयात् ॥ १ ॥ वभूवचोत्कलेदेशेवि
प्रोमाधवसंज्ञकः स्त्रीपुत्रधनमित्राद्यैर्महासुख
समाकुलः ॥२ ॥ निनायवहुवर्षाणिवयसासज
रांगतः एकदासगतःक्वापिकार्यार्थंनगरांतरे
३॥ कृत्वाकार्यमथैकाकीसमागच्छन्पथिस्थितः
ततरूच्छायामुपाश्रित्यश्रमापनयनायसः ॥४

अव नारायणजीके सामने दीप जगाने के माहात्म्यमें इति
हास उतारतेहैं क्या कथन कर्तेहैं भक्तमालामें कहाहै अव मा
धव दास व्राह्मणकी मनकों हरणे वाली कथा कथन कर्तेहैं
जिस कथा के श्रवण मात्र कर्के पुरुष भक्तिकों प्राप्त होताहै
॥ १ ॥ उत्कल देशमें माधव नाम एक ब्राह्मण होता भया
कैसाथा स्त्री पुत्र धन मित्रादियोंके सुख कर्के आकुल क्या
परम सुखीथा ॥ २ ॥ इसी तरां तिसके वहुत वर्ष व्यतीत
होगए पर अवस्था कर्के वृद्धभी होजाता भया एक दिन
सो कार्यके निमित्त कहीं ग्रामांतरमें जाता भया ॥ ३ ॥ त
हांजाके उसने कार्य साधन करा पीछे इकला वनमें आउता
२ थकेमा दूर करणें के वास्ते एक सघनी छाया वाले वृक्षके
नीचे ठंडी छायामें वैठ जाता भया ॥ ४ ॥

अथदैववशात्तस्यसमुत्पन्नामहाव्यथा उदरे
तुक्षणेनैवमूर्छांप्रापसवैद्विजः ॥ ५ ॥ निश्चेष्टो
निपतन्भूमौमुहूर्तादुत्थितःपुनःअहोकिंजातंम
तिसश्चिन्तयामासचेतसा ॥ ६ ॥ अद्यास्मि
न्निर्जनेस्थानेक्कमेपुत्राःसुहृत्स्त्रियःदुःखितस्यच
साहाय्यंकर्तुमत्रसमागताः ॥ ७॥ प्राग्जन्मक
र्मणैवाहंजीवितोनात्रसंशयः अथवापश्यतां
तेषामयियद्भावितद्भवेत् ॥८॥

वैठने सें उपरंत दैववशथें तिसकें उदरक्या पेटमें महाव्यथा आनके उत्पन्नहुई पर जिस पीडाके साथसो द्विजएकक्षण मात्र कर्कें मूर्छाकों प्राप्तहोजाता भया॥५॥ और उसीसें निश्चेष्टक्या मृतकोंके तुल्य होके भूमि परपडगया दोघडीसें उतरंत उठ खडा हुया राजी प्रसन्न होगया तद मनमें विचारणे लगा की एह क्या हुया अवहीपीडा में मूर्छितहुया अवही राजीहोगयाहां ॥ ६ ॥ अछा जेकर एह पीडा और भी होती तद इसनिर्जन स्थान में आज मेरे पुत्र सुहृत संवंधि स्त्रियां जो इहां पीडाके युक्त मेरेकों सहायता कर्नेकों आवते किसीकों खवर नहिथी जो इहां सो मेरे पास आवते ॥ ७ ॥ अवतो किसी पूर्व जन्मके प्रभाव कर्कें जीवित होगयाहां अथवा तिनके देखतें २ मेरा जो कुछ होना सोई होनाथा उनोंने इसमें क्या करणा था ॥ ८ ॥

नत्वस्यवारणंकोपिकर्तुमर्हतिभूतले मयिप
श्यतिमेपुत्राःकतिधादुःखमाप्नुवन् ॥९॥ किंचा
वश्यंहिमर्तव्यमेकस्मिन्दिवसेमया तदाक्व
मेसुताःक्वाहंक्वायंस्नेहोगमिष्यति ॥ १० ॥
अपिचाद्यावधिकृतंसुखंवैषयिकंमया जरया
शक्यतेनैवकर्तुंतदपिवैमया ॥ ११ ॥ त
स्माद्वृथैवमोहोयंकदर्थयतिमामिह इतोपि
स्थावरावस्थायदायास्यतिमेपुनः ॥ १२ ॥

और इसमृत्युके निवारणकरणे वाला पृथिवी लोकमें कोई न हिहै क्योंकर देखो मेरे देखते २ मेरे पुत्रकितनेतरोंके दुःखों कों प्राप्तहोते भये तदमैंने क्या कर्लिया था जो उनोंनें मेरा कुछ करणाहै ॥ ९ ॥ क्या एकदिन मैने अवश्य मरजानाहै तद मेरे पुत्र कहां रहेंगे मैं कहां होवांगा एह मेरास्नेह कहांकों जावेगा ॥ १० ॥ और निश्चयकर्के अवतक मैने विषय सुखही भोगेहैं और कुछ नहिकराहै अरजरावृद्धावस्था जद होवेगी तद भी नहि करने कों मैंनेंसमर्थ रहणा ॥ ११ ॥ इसकारणसें एह मोह वृथाही मेरेकों कदर्थ कर्ताहै इस गृह में और इससें भी जद अधिक स्थावर जीर्णावस्था होवेगी तद क्या करूंगा ॥ १२ ॥

तदामंदादरोभूत्वाशोचिष्येनात्रसंशयः दृश्यते
हिमहावृद्धाःसर्वत्रशिथिलादराः ॥ १३ ॥ त
स्मादद्यैवभवनाद्बहिर्गत्वाक्काचित्स्थितः परलो
कहितार्थायकरिष्येस्मरणंहरेः ॥ १४ ॥ इति
निश्चित्यविप्रोसौमाधवःस्वगृहंगतः स्नात्वा
भुक्त्वासुतान्पत्नींसुहृदः प्राहहृष्टवत् ॥ १५ ॥
अहोशृणुतमेवाक्यंभवंतोतीवमेप्रियाः तस्मा
न्मदुक्तमेवात्रस्वीकर्तव्यंमदाज्ञया ॥ १६ ॥

तद थोडे आदर वाला होकर शोच करूंगा इसमें संशय न हिहै किस तरां की और भी वडे २ वृद्ध पुरुष घर २ मेंशिथिल थोडे २ आदरों वाले देखी दें हैं ॥ १३ इसवास्ते आजही घरसें निकलकर कहीं सुंदर एकांत स्थानमें वैठ कर पर लोकके हित वास्ते हरिका स्मरण करूंगा ॥ १४ ॥ ऐसा निश्चय मनमें धारणकर सो माधव व्राह्मण अपनेघर चला आया तहां आकर स्नान संध्यादि कृत्य करके भोजन करा पीछेसें वडी प्रसन्नता पूर्वक स्त्री पुत्र मित्र सुहृदवांधव इन सभनों कों वुलायकर कहता भया ॥ १५ ॥ हे सुहृदवांधवो तुम सारे ही अत्यंत मेरेप्यारेहो मेरा एक वाक्य श्रवण करो जो कुछ तुमारे प्रति कथन कर्ताहुं सो तुमने मानलैना एही मेरी आज्ञाहै ॥ १६ ॥

अद्यावधिगृहेस्थित्वायुष्मदर्थंमयाकृतं शुभा
शुभफलंकर्म्ममोहपाशेनचेतसा ॥ १७ अतः
परंतुस्वाहितंकरिष्यामिनसंशयः जगन्नाथं
स्मरिष्यामिस्थित्वाहंकुत्रचिद्वने ॥ १८ ॥ मृते
मयिनयूयंमेनयुष्माकमहंपुनः जीवतोप्युपकु
र्वंतिकिंचिन्नैवमृतस्यच ॥ १९ ॥ तस्मादद्यै
वगच्छामियूयंतिष्ठतस्वेगृहे इत्युक्तामाधवोवि
प्रःप्रतस्थेनिजमंदिरात् ॥ २० ॥

क्या आ जन्मसें लेकर आजतक घरमें स्थित होकर तुमारे निमित्त मोहरूपी फांसी कर्के वंधे होए मन वाले मैने शुभ अशुभ फलों वाले कर्म कियेहैं ॥ १७ ॥ अब इस कालसें उपरंत कही एकांत वनके मध्यमें स्थित होकर जगन्नाथजीका स्मरण रूप जो अपने परलोक का हित सो करूंगा इसमें कुछ संशय नहिहै ॥ १८ ॥ क्योंकि मेरे मरे होए पीछेमें तुमारा नहिहां तुममेरे नहि हो जो कोंईहै सभ जी वतोंके ऊपरही उपकार करणे वालाहै मरे होए पीछे को ई किसीका कुछ नहि कर्ताहै ॥ १९ ॥ तिसकारणसें आजही मैं घरसें चला जाताहुं तुम सारेही अपनें २ घरोंमें आ नंदकरो इतना वचन कथन करके माधव ब्राह्मण अपने घरसें प्रस्थान कर्ता भया क्या निकल पडता भया ॥ २० ॥

अथतेवांधवाःसर्वेवारयंतस्तमन्वयुः नामन्यत
सकरूपापिगतएवयदृच्छया २१ तेपिसर्वेपरा
वृत्त्यसमायातानिकेतनं माधवोपिप्रहृष्टात्मा
नीलाचलमुपागतः २२ ॥ तत्रगत्वाद्रिपार्श्वे
स्थांगुहायामास्थितोभवत् निराहारोदकोदे
वंजगन्नाथंविचिंतयन् २३ ॥ यातेदिनत्रयेत
स्यनिराहारोदकस्यच तदातुष्टोजगन्नाथःप्रस
न्नोऽभूद्द्विजस्यसः २४ ॥

इसके उठकर चलनेसें उपरंत सो सारेही पुत्र मित्रादि वांधव निवारण क्या मना कर्ते होए पीछे चलते भये वहुतवार तिनोंने कहाभी तदभी तिसने किसीकी वात नहिमानी अपनी इछा पूर्वक चलाही गया ॥ २१ ॥ तद सो सारेही परत कर अपने २ घरोंमें चले आए उधरसें माधवभी प्रसन्न मन वाला नीलाचलको चलागया ॥ २२ ॥ तहां जाकर पर्वत के पासकी गुफामें वैठजाता भया और अन्न जलका त्याग कर देवता जगन्नाथजीकोंचिंतन कर्ता भया ॥ २३ ॥ इसी प्रकार अन्न जलके खाने पीने विना तीन दिन वीत गए होए पीछे तद जगन्नाथजी तिस व्राह्मण के ऊपर आनंद युक्त होके प्रसन्न होते भये २४ ॥

चतुर्थेदिवसेराजन्निशायांशयनक्षणे लडुकानि
सुवर्णस्य स्थाल्यांकृत्वाहिपूजकाः २५ ॥ ज
गन्नाथायदत्त्वातेमुद्रयित्वाकपाटकं सुषुपुःस्व
गृहेसर्वेयथान्यदिवसेतथा २६ अथश्रीभग
वांल्लक्ष्मीमुवाचकरुणामयः इदंलड्डुकनैवेद्यंनी
त्वानीलाचलेत्वहम् २ ॥ गत्वामाधवभक्ता
यदत्त्वायास्यामिसांप्रतम् सतुसर्वेपरित्यज्य
श्रीपुत्रधनवांधवम् २८ ॥

हेराजन् निराहारही तिस कों चौथे दिन रातको सोनेके समय स्वर्ण के थालमें लडुयोंसे आदलेकर मिठाईयों का नैवेद्य पायकर भगवान जीके आगे रखकर किपाड वंद कर पुजारी अपने अपने घरोंमें जाके शयन कर्ते भये जेसे आगे रोज जातेथे तैसेही २६ ॥ इस वृत्तांतसें उपरंत श्रीभगवान जी लक्ष्मी कों कहते भये वडे दयावान् होकर कहते भये एह लडुयोंका नैवेद्य नीलाचल में लेजायके २७ ॥ माधवदास भक्त को दे कर अबही परत कर चला आउता हुं उोह मेरे निमित्त स्त्रीपुत्र धन वांधव गृह सभनों का त्याग कर मेरा भजन करने कों आया है २८ ॥

दिनत्रयंनिराहारःस्मरतेमामनन्यभाक् तस्मा
दस्मैचदातव्यमिदमस्मिन्क्षणेमया ॥ २९ ॥
इतिश्रुत्वावचस्तस्यलक्ष्मीःप्र हकृतांजलिः ना
थाहमवगच्छामिदत्त्वायास्यामिवैद्रुतम् ३०॥
इत्युक्तास्वर्णपात्रंतुसलड्डुकंकरेणसा गृहीत्वा
स्त्रीस्वरूपंचकृत्वातत्रययौरमा ॥ ३१ ॥ गत्वा
माधवदासस्यसमीपेप्राहसादरं गृहाणैवंसल
डुकंपत्याहंप्रेषिताद्भुतम् ॥ ३२ ॥

तीन दिनोंसें मेरेकों निराहार होके अनन्य भागी होके स्मरण कर्ताहै इसकारणसें इसी समय मेंनेउसकों एह नैवेद्य देनेयोग्यहै ॥ २९ ॥ एहवचन तिनका श्रवण कर हाथजोड कर लक्ष्मीकहती भई हेनाथ मेंजातीहां शीघ्रतिसकों देकर चली आवतीहां ॥ ३० ॥ ऐसे कथनकर समेत लड्डुयों के पात्र उठायकर और सामान्य स्त्रीका रूप धारण कर लक्ष्मी नीलाचलमें चलीजाती भई ॥ ३१ ॥ तहां माधव दासके पास जाकर आदर पूर्वक कहने लगी हेभक्तपुरुष एह लड्डुयों के सहित ही पात्र ग्रहण कर मेरेकों स्वामीने भेजाहै को उसकों जाके भोजन दे सोवहुत दिनसें भूखाहै ॥ ३२ ॥

तवभोजनदानायेत्युक्त्वातद्भाजनंरमा लड्डु
पूर्णंचतस्याग्रेप्रणिधायसमागता ॥ ३३ ॥ त
दामाधवदासोपिमत्वाहादिहरेःकृपां बुभुजेता
निसर्वाणिपात्रंतत्रैवस्थापितम् ॥ ३४ ॥ अथ
प्रातः समुत्थायजगन्नाथस्यपूजकाः पूजांकर्तुं
मठंजग्मुर्ददृशुर्नैवभाजनम् ॥ ३५ ॥ नलड्डुकं
तदोद्विग्नाः कश्चौरोत्रसमागतः कपाटस्ताद्द
शोलग्नोऽस्माभिरुद्घटितस्तथा ॥ ३६ ॥

इस वास्ते तेरेको भोजन देने वास्ते आई हां ऐसे कथन कर ति स लडुयोंके पात्रकों उसके आगे रखकर चली आई ॥ ३३ ॥ तद उस समय माधवदास भी मनमें हरिकी कृपा मानता भया क्योंकी इसवख्त हरिसें विना कौन खवर लेनेवाला है ऐसाजा नकर तिस सारे नैवेद्य के लडुयोंकों खायकर पात्र उसी स्थानमे रखदेताभया ॥ ३४ ॥ इससें उपरंत प्रातः काल जगन्नाथके पुजारी उठकर पूजाकरने कों मंदिरमें आवते भये और किवाड खोलकर देखने लगे तौरातके नैवेद्य वाला थाल नहि देखा ३५ और लडुयोंको भीनहिं देखा इससें उद्वेग कर युक्तमनवाले होए हुए मनमें विचारणे लगे की इहां कोन कोई चौर रात कों आया जोनसा कोई कपाट लगे होए थाल चुराके लेग या कपाट जैसेबंदकरयाथा ऐसेंही लगेहोए मैने खोलेहैं ॥ ३६

कथंचौरःसमायातोमहाश्चर्यमभूदिदं सर्वमे
तत्तथाराज्ञेदुःखिताअब्रुवन्जनाः ॥ ३७ ॥
राजापिचारान्सर्वत्रप्रेषयामासचिंतितः पूज
काअपिसर्वत्रचौरंज्ञातुंसमंततः ॥३८॥ गता
अन्वेषमाणास्तेवनेग्रामेचपर्वते नीलाचलंग
ताःकेचिच्चौरदर्शनकांक्षिणः ॥ ३९ ॥ ददृशुः
पर्वतेतत्रमाधवंमीलितेक्षणं तदग्रेस्वर्णपात्रंत
द्दृष्ट्वासर्वेपिहर्षिताः ॥ ४० ॥

कपाट लगे होए अंदर मंदिर के चौर कैसे आया वडेही आ श्चर्यकी वातहै एह वात दुःखित होए हुए पुजारी लोक राजा के तांई कहते भये ॥ ३७ ॥ इतनी वात सुनते ही चिंता युक्त होएआ हुया चारो ओर हलकारे अपने भेजदेता भया और पुजारी लोक भी चौर कों पकडने के लिये शहरके चारो पासेयोंमें फिरने लगे ॥ ३८ ॥ तद सो पुजारी लोग ढूंडते २ वन २ पर्वत ग्रामोंमें फिरते २ नीलाचल पर कितनेक जाय निकले ॥ ३९ ॥ तव तहां क्या देखतेहैं नीलाचल की गुफामें नेत्रमीट कर ध्यानलगाए होए माधव दास वैठा हुया देखा और तिसके आगे स्वर्णकाथालभी देखा वडेहर्ष आनंद कों प्राप्त भये की चोरतो पकडा गया ॥ ४० ॥

अहोऽनेनैवनुहृतंपात्रंदेवस्यनान्यथा इत्युक्त्वा
जगृहुःपात्रंववंधुर्माधवंरुषा ॥ ४१ ॥ नीत्वा
याताःस्वनगरेताडयामासकोपिताः माधव
स्तुततस्तूष्णींस्थितःप्राक्कर्मजंस्मरन् ॥ ४२ ॥
पृष्ठभग्नास्त्वचस्तस्यशोथश्चताडनादभूत् दया
लुरेकस्तन्मध्येवारयामासताडकम् ॥ ४३ ॥
अथसायंजगन्नाथंतर्पयंतोजनास्तदा पृष्ठमू
र्तेस्त्वचोभग्नाश्शोथवैदद्दशुर्हरेः ॥ ४४ ॥

अहो देखो देवता जगन्नाथजीका पात्र हालियाहै ऐसे आपसमें कथनकर स्वर्णके थालकोंउठाय लिया और उसमाधवदासकों क्रोधकर वांधलेते भये४१फिर तहांसें ही कोपवाले तिसकोंताडना करते अपनी पुरीमें चले आवते भये माधव जौनसाथा सोचुपहोकर स्थिरहोजाताभया नकिसीकोकुछ अच्छी बुरीकहताकी मेरेकों किसवास्ते मारतेहोमैंने क्याःगुना कियाहै ऐसभीनहिकहताभया क्यों पूर्व जन्मके कर्मकाकोई फलएहभीआयगयाइस वातकों स्मरणकर्ता हुया४२और वहुत ताडना करणेसें तिसका पीठमें सोजाहोगया और ऊपरका मांसउडगया तददयावान् एक पुरुष मारणे वालेकोंहटायदेता भयाकी अव और इसकों मतमार ऐसे कहके छुडाया और कहीं कैदकररखा ॥ ४३इससें उपरंत सायंकालके समय पुजारी लोक जगन्नाथजीकी पूजाकर्ते होए शे ष उतारने के समय मूर्तिकी पीठमें मांस उखडाहुया और पीठ सोजी हुई हरिकी देखते भये ॥ ४४

दृष्ट्वासर्वंमहाश्चर्यंचिंतयातेसमन्विताः किंजा
तमितिशोकेनत्यक्ताशनजलानिशि ॥ ४५ ॥
सुषुपुः खिन्नमनसस्ततःश्रीपुरुषोत्तमः स्वप्ने
तान्प्राहभोविप्रामाधवोतीवमेप्रियः ॥ ४६ ॥
नीलाचलेस्थितस्तस्मैसलड्डुकंतुभाजनं मयैव
प्रेषितंतस्मान्नायंचौरोहिमाधवः ॥ ४७ ॥
तस्ययत्ताडनंपृष्ठेकृतंपुष्पाभिरत्रभोः तेनमेपृ
ष्ठदेशेचशोथोभेदस्त्वचामभूत् ॥ ४८ ॥

इस प्रकारका महाश्चर्य सारेही पुजारी देखकर चिंताकर युक्त होजाते भये श्रौर मनमें विचारतेहैं कीएहक्या हुया ऐसेंही शोककर युक्त रातके समय अन्न जलका त्याग करते भये ॥ ४५ श्रौर ऐसेही विमन वाले होए हुए शयन करते भये तद श्रीपुरुषोत्तमजी स्वप्नमें तिनों व्राह्मणोंको कहते भये हेविप्राः तुमवात सुनों माधवदास मेरा वहुत प्यारा भक्तहै ॥ ४६ ॥ नीलाचल परवैठा हुश्रा वहुतदिनोंका भूखा प्यासा तिसकों समेत लड्डुयों केथालमैंने भेजाथा सो चोर नहिंहै तुमनेजो पकडाहै ॥ ४७ ॥ श्रौरजो तुमनें मिलकर उसकी पीठमें जौनसा ताडनकराहै उस करकें मेरी पीठकी त्वचा टूटगईहै श्रौर सोजाभी होगया क्योंकी सो भक्त मेराही दूसरा देहहै ॥ ४८ ॥

नान्यःकोपिचमेजातोदोषःप्रेक्षतप्रदः एवंदृ
ष्ट्वानिशिस्वप्नंपूजकास्तत्क्षणंशुभं॥४९॥तथा
यतंमहाभक्तममुचुर्बंधनाद्द्रुतं मुक्तास्प्रणेमु
स्तेसर्वेस्नापयित्वाशुभांभसा ॥ ५० ॥ भोज
यित्वातिभक्त्यातंददुरास्तरणंशुभम् उपचारा
न्प्रचक्रुस्तेशोथक्षतानिवृत्तये ॥ ५१ ॥ एवंमा
धवदासस्तुभक्तस्तत्रबभूवसः तत्रैवनिवसन्दे
वंचिंतयानोदिवानिशम् ॥ ५२ ॥

हेविप्राः औरकोई मेरेकों क्षत देनवाला दोष नहुयाहै इसप्रका
ररातके समय पुजारी सुंदर स्वप्न देखकर तत्क्षण उठखडे होते
भये ॥ ४९ ॥ और तिस महा भक्तकों भीउठाकर शीघ्रबंधनों
सें खोलते भये खोलके तिसको सभनोंने प्रणाम करी उसी स
मय अच्छे जलके साथ स्नान कराय कर पीछे ॥ ५० ॥ भोजन
कराया और सुंदर विछौनेयों पर सुवाल दिया फिर उसकी पी
डा निवृत्तीके वास्ते उपचार कया मर्दनादि कर्ते भये ॥ ५१ ॥
इस प्रकार माधवदास भक्त तिसपुरुषोत्तम क्षेत्रमें होता भया औ
रातिस क्षेत्रमें हीदिन रात भगवान्जी का चिंतनकर्ता हुया नि
वास कर्ता भया ॥ ५२ ॥

निनायबहुवर्षाणिपलवन्मुदितात्मना एकदा
माधवोदासोनिवसंस्तत्रवैपुरे ५३भिक्षामादा
यभोक्तव्यमितिकृत्वाव्रतंतुसः पर्यटन्नगरेनि
त्यंभिक्षामादायसर्वतः ॥ ५४ ॥ भुक्त्वोवाससु
खीतत्रैकस्मिन्दिवसेतुसः स्थितैकातत्रनग
रेमहाचंडीतिकर्कशा ॥ ५५ ॥ महाधनवतीद
त्ता दानभोगविवर्जिता तस्यागृहेगतोभक्तो
माधवोन्नंचभिक्षितुं ॥ ५६ ॥

उसनगरीमें प्रसन्न मन वाला एक पलकी न्यांई बहुत वर्ष व्यतीत कर्ता भया ऐसेही माधवदास एकदिन तिस पुरमें निवास कर्ता हुया एह मन विषें धारण कर्ता भया ॥ ५३ ॥ अब भिक्षा मांगकर भोजन करणा चाहिए एह व्रत धारण कर-नित्यं प्रति भिक्षा मांगनेकों उस नगरीमें प्रतिदिन फिरता भया ॥ ५४ ॥ भिक्षा मांगकर ल्याउनी भोजन कर निवास कर्ता-भया ऐसेही एक दिन भिक्षा मांगता २ एक बडे धनवाली वृद्धा स्त्रीथी उसके चला गया सो कैसीथी बडे क्रोध कर युक्त कर्कशा कठोर स्वभाव वाली निवास कर्तीथी उसके चला गया ॥ ५५ ॥ बडे धन वालि तिसकों दान भोग कर वर्जित देखकर तिसके घरमें माधव दास भक्त भिक्षामांगनेकों चला गया ॥ ५६ ॥

भिक्षांचमांप्रदेहीतिप्रोच्चचारविदूरतः श्रुत्वा
पिचनशुश्रावलिंपतीचांगनंनिजम् ॥ ५७ ॥
पुनः प्रोवाचदेहीतिश्रुत्वासाथप्रदुद्रुवे उत्था
यदक्षिणंहस्तंलेपन्यासहितंरुषा ॥ ५८ ॥ त
तोदृष्ट्वातुतांचंडींहंतुकामांभयंकरीं पलायि
त्वागृहद्वाराद्बहिरागत्यसंस्थितः ॥ ५९ ॥ त
त्रापिसासमायातांहंतुंतंसोपिचद्रुतं पलायनं
चकाराथसातुतामेवलेपनीं तमुद्दिश्यप्रचिक्षे
पसातुतामेवलेपनीम् ६० ॥

घरके अंदर जायकर भिक्षा मागनेकी अवाज कर्ता भया दूर सें खडा होकर तद सो वृद्धा अपने घरका अंगन लिपती होई अवाज सुनकर मौन होरहती भई ॥ ५७ ॥ फिर तिस ने कहा माई मेरेकों भिक्षादे वहुत चिरसें खडा होएआदा हां इतनी वात सुनतही सो वृद्धा लेप देने वाले कपडे के खंडक समेत दहना हाथ उठायकर उसके पीछे मारणेकों दौडी ॥ ५८ ॥ तद सो माधव मारने की कामना वालि भयंकरी कों देख कर भाग करकें द्वारसें वाहर चला आके स्थित होगया ॥ ५९ ॥ सो वृद्धा उसके मारणे वास्ते शीघ्र वाहर भी आवती भई तद माधवदास उहांसें भी भागजाता भया तद उस वृद्धानें लेपिनी कों माधव का उद्देश करकें पीछे सुट देतीभई क्या कहती भई की लेजा इसकों ॥ ६० ॥

माधवस्तुततः शीघ्रंपरावृत्त्यसलेपनीं गृही
त्वादुद्रुवेभक्तः कर्कशापिन्यवर्तत ॥ ६१ ॥गा
लिदानंप्रकुर्वतीक्रोधेनस्फुरिताधरा अथमाध
वदासस्तुसाधुभावात्सतांस्त्रियम् ॥ ६२ ॥ उप
कर्तुमनश्चक्रेगत्वोदधितटेस्वयम् प्रक्षालनैश्च
वहुभिःशुक्लीकृत्यचलेपनीम् ॥ ६३ ॥ शोषयि
त्वातपेवर्तीर्विधायवहुशस्ततः विक्रीयकातिचि
त्तस्यक्रीत्वाज्यमार्तिकांस्ततः ॥ ६४ ॥

माधव दास भक्त परतके शीघ्र तिस लेपिनी कों ग्रहण कर्के फिर दौडकर चला जाता भया तद सो कर्कशा स्त्री भी हट कर पीछेसें चलीजाती भई ॥ ६१ ॥ गालियां दियाकर्ती औ र और क्रोध कर्के ओष्ठ जिसके फरकरहे इससें उपरंत सो भक्तमाधवदास श्रेष्ट अछे स्वभावसें तिसस्त्रीके ऊपर उपकार कर्णेकी इच्छा कर्ता भया ॥ ६२ ॥ तो समुद्रके किनारे परजा यके तिस लेपिनी कों वहुत वार धोय २ कर श्वेत रंगकी क रलेता भया ॥ ६३ ॥ फिर तिसकों धूपमें सुकायकर तिस कीयां वहुत वटियां वनायकर कुछ अषनेसें वेचके उसका घृ त लिया फिर घृतके दीप वनावता भया ॥ ६४ ॥

दीपान्निर्माय संध्यायां श्रीजगन्नाथमंदिरे प्रक्षा
ल्य प्रददौ प्रेम्णा संकल्पं मनसाकरोत् ॥ ६५ ॥
तस्यास्त्वं भो जगन्नाथ सुप्रसन्नो भव प्रभो अज्ञा
नतिमिरांधाया ज्ञानं भवतु निर्भयम् ६६ ॥ दा
ने तस्या मतिर्भूयादिह जन्मनि सर्वदा उपभोगो
धनस्यास्या दीपदानप्रसादतः ॥ ६७ ॥ एवं
संकल्प्य प्रददौ दीपांस्तत्र मठे द्विजः तत्क्षणादेव
तस्यास्तु पश्चात्तापो महानभूत् ॥ ६८ ॥

वहुत सुंदर दीप वनायकर उसकपडे की वट्टियां और घृत पायकर सायंकालके समय हाथपैर धोयकर श्रीजगन्नाथजी के मंदिरमें जायकर वडे प्रेमके साथ मनकर्के ऐसे संकल्प कर्ता भया ॥ ६५ ॥ हे श्रीजगन्नाथ वडे क्रोध वाली दानभोग रहित धनपदार्थ कर्के युक्त जो सोवृद्धा है हे प्रभो तिसके ऊपर प्रसन्न हो और अज्ञानतिमिर क्या है अज्ञान रूपी अंधकार तिसकर्के अंधाकों निर्भयज्ञान होवे तुमारी कृपासें ॥ ६६ ॥ और जवतक सो जीवतीहै तवतक उसकों इस जन्ममे दानकरणेमें वुद्धि उत्पन्न होवे और इसदीप दानके प्रसादसें धनका उसकों उपभोग होवे अर्थात् जितना उसके पास धनहै उसकों कुछखाये कुछतुमारे निमित्त दानकरे ॥ ६७ ॥ इस प्रकार सो व्राह्मण मनकर्के संकल्पकर मंदिरमें दीपों कों जगावताभया तद भगवानकी कृपासें उसीसमय धरमें वैठी होई तिसकों मनमैं वहुतएक पश्चात्ताप उत्पन्न होता भया ॥ ६८ ॥

नददामिविशिष्टेभ्योनभुंजामिस्वयंपुनः अद्यै
कःसाधुरायातस्तस्मैगालिमदामहम् ६९ ॥
अतोमत्सदृशीलोकेनान्यादुर्भाग्यशालिनीधि
ग्मांमूर्खांयदेतावद्धनंप्राप्यापिपुष्कलम् ७०
नदीयतेभुज्यतेवातस्माज्जन्मैवमेमृषा इतिचिं
तापरारात्रौलेभेनिद्रांनकर्कशा ॥ ७१ ॥ प्रात
रुत्थायसंमार्ज्यगृहद्वारंतथांगने अन्नादिवस्त्र
द्रव्याणिनिष्कास्यगृहात्तुसा ॥ ७२ ॥

कथा पश्चात्ताप करने लगी देखो मैं कैसीहां नातोमैं इस धनकों दीन अनाथ साधु अभ्यागतोंकों देतीहां नामैं आप खातीहां आज एक साधु आया उसकों भी मैने गालियां दियां तिरस्कार किया ॥ ६९ ॥ इस कारणसें जानोंकी मेरे जैसी संसारमें दुष्टखोटे भाग्यो कर्के युक्त नहि होवेगी धिक्कारहै मेरेकों २ जोंमैं इतने वहुत धनकों प्राप्त होकर्के भी कुछ नहि कर्तीहां ॥ ७० ॥ नामैंनें खाया नालाया नादिया नलिया इसथैं मेरा जन्म ही वृथाहै इस प्रकार की चिंतामें तत्पर होईं हुई रातके समय निद्राकों नहि प्राप्त होती भई ॥ ७१ ॥ वडेक्लेश कर युक्त जद रात व्यतीत भई प्रातः काल उठके सो कर्कशा अपनें घरके अंदर वाहर सारेही सोतकर गोहेका लेपन देती भई फिर अंदरमें जो कुछ अन्न वस्त्र भांडें भूषण रुपैये सारेही कुछ निकालकर वाहर स्थापन कर्तीभई ॥ ७२ ॥

दीनानाथदरिद्रेभ्योसाधुभ्यःप्रददौमुदा चिंतयामासमनसाकदापश्यामिताद्दशम् ॥ ७३ ॥ यस्मैगालिर्मयादत्तायाचमानायसाधवे मिलिष्यतियदादैवात्तोषयिष्यामिसर्वथा ॥ ७४ ॥ एवंचित्तेचिंतयंतीद्वारदेशेसमागता अथमाधवदासस्तु ज्ञातुंतच्चेष्टितंपुनः ॥ ७५ ॥ आयातस्तेनमार्गेणकर्कशापिददर्शतंदूरादागत्यन्यपतत्पादयोरतिभक्तितः ॥ ७६ ॥

और मनका संकल्प करा और जो उससमय दीन अनाथदरिद्री अंधा साधु ब्राह्मण अभ्यागत आवताभया सभकों मनमांगेया हुया देती भई और मनमें ऐसे चिंतन कर्तीभई की तिस साधू कों कद देखूंगी ॥ ७३ ॥ भिक्षा मांगते होए जिसकों मेने पूर्व दिनमें गालियां दईआंथी आज जेकर दैवयोगसें मिलजावे तद तिसकों तो अछीतरांसें प्रसन्न करूंगीं जो कुछ मांगेगा सोई वस्तु देवूंगी ॥ ७४ ॥ इस प्रकार मनमे चिंतन कर्ती होई द्वार देशपरचली आई की नजाने कहीं आवता जाता मिल जावे इतनेंमें माधव दास भी तिसका चरित्र देखने कों चला आया ॥ ७५ ॥ तिसमार्ग कर्के आवता हीथा तद दूरसेंही तिसें कर्कशा वृद्धाने देखां दौडकर बडी भक्तिसें तिसके पादोमें डिग कर्के शिर रखकें प्रार्थना कर्तीभई ॥ ७६ ॥

क्षमस्वाद्यापराधम्मेमूर्खायास्तुदयानिधे यत्पू
र्वेद्युर्मयादत्तागालयस्तेनिरागसे ७७ अथा
गच्छगृहेनाथदयांकुरुममोपरि इत्युक्तातंकरे
धृत्वानिनायनिजमंदिरम् ॥ ७८ ॥सोपिमत्वा
दीपदानमाहात्म्यंतद्गृहेगतः तद्दिनेसर्वमन्ना
दिस्वीकृत्यप्रददौस्वयम् ॥ ७९ ॥ उवाचतस्यै
मातस्त्वंसाधुसेवापरायणा हरिभक्तिरताभूत्वा
समुद्धरनिजंकुलम् ॥ ८० ॥

क्या हे दयानिधे में वडा मूर्खहां मेरे अपराधों कों आप क्षमा करो जो मेंने विना अपराधके तुमारे कों गालियां दईयां सिंयां सोई वडा अपराध हुया सो क्षमाकरो ॥ ७७ ॥ और हे नाथ मेरेपर दया कर्के आज घरमें चलो ऐसा कह कर वलात्कारसें हाथ पकडकर अपने घरके अंदर लेगई ॥ ७८ ॥ सो माधव दासभी दीपदानकी महिमाका प्रभाव जाणकर तिस के घरमें चलागया उस वृद्धाने जो कुछ निकाल रखेया हुयाथा सो साराही कुछ उसकों देदिया उसनें भी अंगीकारकर लिया फिर आपवांट कर देंदेता भया ॥ ७९ ॥ फिर तिसकों कहने लगा हेमातः तूंआज सें लेकर साधुयों ब्राह्मणों की सेवा करेया कर और नारायणजी की भक्ति में तत्परहो कर्के अपनेकुलका उद्धार कर ॥ ८० ॥

इत्युक्त्वानिर्ययौतस्यागेहात्समाधवोद्विजः ब्रा
ह्मणीसापिसत्कर्मनिरताभक्तिमत्यभूत् ॥ ८१
भुक्त्वाभोगानशेषांश्चमृताहरिपुरंययौ इतितेक
थितंदीपमाहात्म्यंहरिभक्तिदम् ॥ ८२ ॥ इति
श्रीदीपदानमाहात्म्यम्

इसतरां की शिक्षा करकें माधव दास ब्राह्मण तिसके घरसें नि कल आवता भया और उसके पीछे सो ब्राह्मणी अच्छे श्रेष्ठक र्ममें भक्ति वाली होति भई ॥ ८१ ॥ इस लोकके सुखभोग भ क्तिके प्रभावसें भोगकर मृत होंइं हुई हरिके पुर वैकुंठ लोक में चली जाती भई एह तेरे प्रति हरिकी भक्ति देने वाला भ गवानजीके आगे दीप जगानेका माहात्म्य कहाहै ८२ एह भ गवान जीके आगें दीप जगानेकामिहिमा समाप्त भई है ॥

अथ विष्णोराराऽर्तिकमाहात्म्यं भविष्यत्पुरा
णे वहुवर्तिसमायुक्तंज्वलंतंकेशवोपरिकुर्यादा
रार्तिकंयस्तुकल्पकोटिंदिवंवसेत् १ ॥ नीराज
नंचयः पश्येद्देवदेवस्यचक्रिणः सप्तजन्मभवे
द्विप्रोह्यंतेचपरमंपदम् २ कर्पूरेणचयः कुर्या
द्भक्त्याकेशवमूर्द्धनि आरार्तिकंमुनिश्रेष्ठप्रवि
शेद्विष्णुमव्ययम् ॥ ३ ॥ मंत्रहीनंक्रियाहीनंय
त्कृतंपूजनंहरेः सर्वंसंपूर्णतामेतिकृतेनीराजने
हरौ ॥ ४ ॥

अव विष्णु भगवानजीको आर्तिकरणेकी महिमा लि० भविष्य
त्पुराणमें कथन कराहै वहुत घृतकीयां वट्टियां जिसकों लगी
दीयां होवें ऐसीप्रकाशमान ज्यावलती होई केशवजी के ऊपर
जोकोई आर्ति कर्ताहै सो कल्प'कें क्रोडां स्वर्गमें निवासकर्ताहै
१ और जोकोई देवतयोंके देवता चक्रवाले विष्णुभगवानजी
की आर्तिकों देखताहै सोसात जन्म ब्राह्मण होताहै फिर परम
पदकों प्राप्त होताहै ॥ २ ॥ और जोकोई पुरुष भक्ति प्रेम करकें
कपूरके साथ भगवानजी के शिरमे आर्ति कर्ताहै हे मुनियों
में श्रेष्ट सो अविनाशि विष्णुजीमें प्रवेश कर्ताहै ॥ ३ ॥ जौन
सानारायणजी का पूजन मंत्रों करकें और क्रिया करकें हीनक
राहै सो सभनीराजन के करे होए संपूर्णताकों प्राप्त होताहै ४ ॥

नीराजनजलंयत्रयत्रपादोदकंहरेः तिष्ठतेमुनि शार्दूलवर्धंतेतत्रसंपदइति ५ पाद्मेकार्तिक माहात्म्ये आरार्त्तिकंहरेर्यस्तुसकर्पूरंसुवर्तिकं कुरुतेमोक्षमाप्नोतिकुलायुतसमन्वितः ६ स्कांदे वहुवर्तिसमायुक्तांज्वलंतींकेशवाग्रतः सवैष्णवोनरोज्ञेयोविमुक्तोनरकार्णवात् ७ सनत्कुमारसंहितायां कुर्यादारार्त्तिकंयस्तुकल्पकोटिंदिवंवसेत् कर्पूरेणचयः कुर्याद्भक्त्याकेशवमूर्धनि ॥ ८ ॥

जिस स्थानमें नीराजन सें उपरंत भगवानजीके शिरपर वारेया हुया जल और पादोंका जल स्थित होताहै तहां २ संपदाव धतीयांहैं ॥ ५ ॥ एहपद्मपुराण के कार्तिक माहात्म्यमें कहाहै जोपुरुष सुंदर वट्टियों वाली कर्पूरके सहित भगवानजीकों आर्तिकर्ताहै सो अयुत कुलके सहित मोक्षकों प्राप्त होताहै ॥ ६ ॥ स्कंदमें कहाहै वहुत वट्टियों करके युक्त आर्ति कों जो केशवजीके आगे कर्ताहै सो नरक समुद्रसें मुक्त होताहै ॥ ७ ॥ सनत्कुमार संहितामेंलि॰ जोकेशवजी के मूर्द्धमें कपूरके साथ आर्तिकर्ताहै सो क्रोड कल्प स्वर्गमें निवास कर्ताहै ॥ ८ ॥

नीराजनावलिर्विष्णोर्यस्यगात्राणिसंस्पृशेत्
यज्ञलक्षसहस्राणांलभतेस्नानजंफलम् इति
॥ ९ ॥ पाद्मेपातालखंडे आरार्तिकंहरेर्यस्तुस
कर्पूरंप्रजागरे कुरुतेमोक्षमाप्नोतिकुलायुतसम
न्वितः ॥ १० ॥ इतिआरार्तिककरणमाहा
त्म्यंसमाप्तम ॥

जोकोई पुरुष विष्णुकी करीहोई आरतिकी पंक्तिकों गात्रों में स्पर्श कर्ताहै सो पुरुष यज्ञों के हजारों लाखोंके फलकों प्राप्त होताहै ॥ ९ ॥ पद्मके पाताल खंडमें लि० ॥ जोकोई पुरुष जागरण के दिन हरिकी आरति कर्ताहै सो अयुत कुलके सहित मोक्षकों प्राप्त होताहै ॥ १० ॥ एह आरति की महिमा समाप्त हुई है ॥

अथविष्णोर्निर्माल्यग्रहणमहिमा क्रियायोग
सारे मस्तकेदृश्यतेयस्यविष्णोर्निर्माल्यमु
त्तमम् सविज्ञेयोद्विजश्रेष्ठसाक्षादेवहरिः स्व
यम्॥ १ ॥ दुर्लभंविष्णुनिर्माल्यंपवित्रंपापना
शनं गृह्णंतित्रिदशास्सर्वेमानुषाणांचकाक
था २ जैमिनेतुलसीपत्रंयस्तुजिघ्रतिवैष्णवः
तस्यदेहांतरस्थायिसर्वंपापंविनश्यति ॥ ३ ॥
तुलसीपत्रगंधस्तुप्रविशेद्यस्यनासिकां आप
दस्तच्छरीरस्थाःसद्योगच्छंतिसंक्षयम् ॥ ४ ॥

अब विष्णुके ऊपर चढे होए निर्माल्य धारण की महिमा लि० क्रिया योग सारमें कहाहै जिस पुरुषके मस्तकमें उत्तम विष्णु का निर्माल्य देखनेमें आवे हे द्विज श्रेष्ट सो साक्षात् हरिका रूप जानना ॥ १ ॥ दुर्लभ जौनसा पवित्र पापों के नाशकरणेवाला विष्णुका निर्माल्यहै तिसकों सारेदेवता ग्रहण कर्तेहैं मनुष्योंकी तोक्या वातहै ॥ २ ॥ हे जैमिने जो वैष्णव पुरुष निर्माल्यकी तुलसीकों सूंघताहै तिसके देहके मध्यमें स्थित जौनसें पापहैं सों सारेही नष्ट होजातेहैं ॥ ३ ॥ और जिस किसी पुरुषकी नासिकां में तुलसी के पत्रकी सुगंधि प्रवेश कर्तीहै उसके शरीर मे स्थित जो आपदां हैं सो सभशीघ्र नष्ट होजातियांहैं ॥ ४ ॥

कृष्णोत्तीर्णंतुनिर्माल्यंयस्यांगंस्पृशतेमुने सर्व
रोगैस्तथापापैर्मुक्तोभवतिमानवः ॥ ५ ॥
विष्णोर्निमाल्यशेषेणयोगात्रंपरिमार्जयेत् दु
रितानिविनश्यंतिव्याधयोयांतिखंडिता ॥ ६ ॥
शंखोदकंहरेर्भक्त्यानिर्माल्यंपादयोर्जलम् वंद
नंधूपशेषस्यब्रह्महत्यापहारकम् ॥ ७ ॥ स्कां
दे मुखेशिरसिदेहेतुनिर्माल्यंपादयोर्जलं ह
रेर्देहपरिभ्रष्टंविभृयान्मुनिसत्तम ॥ ८ ॥

हेमुने जिस पुरुषके कृष्णजीके ऊपरसें उतरा हुया अंगोंमें स्प
र्श कर्ताहै सों सारेरोगों करकें और पापों करकें मुक्त हो
ताहै ॥ ५ ॥ और जो कोई पुरुष विष्णुके उतरे होए नि
र्माल्य शेष करकें अपने अंगों कों मार्जन कर्ताहै तिस्कें पाप
और व्याधियां खंडित होजातियांहैं ॥ ६ ॥ और जो कोई
पुरुष शंखका जल और विष्णुकें पादों का निर्माल्यजल पान
कर्ताहै धूप दीपकेशेष कों वंदनाकर्ताहै एहसभकाम ब्रह्महत्या
कें दूर करणे वालेहैं ॥ ७ ॥ स्कंद पुराण में कहाहै ॥ हेमु
निसत्तम हरिके देहसें भ्रष्ट हुया २ जो निर्माल्य पुष्पादि औ
र पादों का जल तिसकों मुखमें शिरमे देहमे इतने स्थानों में
धारणकरे ॥ ८ ॥

महास्नानोदकंयत्रयत्रपादोदकंहरेः तिष्ठतेमु
निशार्दूलतत्रस्युःसर्वसंपदः९ स्कांदे विष्णो
र्मूर्ध्निस्थितंपुष्पंशिरसायोवहेन्नरः जन्मप्रभृति
यत्पापंशतधास्यविनश्यति ॥ १० पाद्मे ॥ मु
खेशिरसिदेहेचविष्णोत्तीर्णांचयोवहेत् तुलसीं
मुनिशार्दूलनतस्यस्पृशतेकलिः ११ गारुडेतु
लसीदलसंमिश्रंयस्तोयंशिरसावहेत् सर्वती
र्थाभिषेकस्तुतेनप्राप्तोनसंशयः १२ ॥ स्कंदपु
राणे मुखेशिरसिविप्रेंद्रविष्णुदेहार्चनेरतः तु
लसीस्पर्शमात्रेणविनश्यतिसदाकलिः॥ १३ ॥

जिस स्थान महास्नान का जलहै और जहां में पादोंका जल है हेमुनियोंमें श्रेष्ठ तहां सारियां ही संपदाहैं ॥ ९ ॥ स्कंद पुराणमें लि० ॥ विष्णुके शिरपर स्थित जो पुष्प तिसकों शिरकर्के जो धारण कर्ताहै तिसके जन्मसें लेकरके जो पापहै सो सौ प्रकारका होकेनष्टहोताहै ॥ १० ॥ पद्म पुराणमें लि० विष्णुके ऊपरसें उतारीहोई तुलसीकों हेमुनिशार्दूल मुखमें और शिरमें देहमें जो धारणकर्ताहै तिसकों कलि स्पर्श नहि कर्ता है ॥ ११ ॥ गरुडमेंलि०तुलसी दलसें मिला हुयाजो जल तिसकों शिरकर्के जो धारण कर्ताहै तिसने सारेतीर्थोंमें स्नानका फलही प्राप्तहुयाहै इसमें संशयनाहिहै १२ स्कंदपुराणमें कहाहै हे विप्रेंद्र विष्णुकी पूजामें तत्पर होएआहुया पुरुष मुखमें जां शिरमें अथवा देहमें इतने स्थानोंमें तुलसीके स्पर्श मात्र कर्के सर्वदाकाल कलि क्या कलहानष्ट होतीहै ॥ १३ ॥

पाद्मेक्रियायोगसारे तुलस्याःस्मरणेनैवसर्वं
पापंविनश्यति तुलसीस्पर्शनेनैवनश्यंतिव्या
धयोनृणाम् ॥ १४ ॥ योश्नातितुलसीप
त्रंसर्वपापहरंशुभम् तच्छरीरांतरस्थायिपापा
नश्यंतितत्क्षणात् ॥ १५ ॥ तुलसीकाष्ठसंभू
तांमालांवहतियोनरःतद्गात्रेपातकंनास्तिसत्य
मेवमयोच्यते ॥ १६ ॥ तुलसीपत्रसंमिश्रं
यस्तोयंशिरसावहेत् गंगायाःस्नानजंपुण्यं
लभतेनात्रसंशयः॥ १७ ॥

पद्म पुराणके क्रिया योग सारमें लि० तुलसी के स्मरण मात्र करके सारे पाप नष्ट होतेहैं और तुलसीके साथ स्पर्श करणे करके पुरुषों कीयां व्याधियां नष्ट होतीयांहैं ॥ १४ ॥ जो कोई पुरुष सभनों पापोंके हरणे वाले शुभ क्या मंगल रूप तुलसी के पत्र कों भोजन कर्ताहै तिसके देहांतरमें स्थित जौनसें पापहैं सो तत्क्षण नष्ट होजाते हैं ॥ १५ ॥ जोकोई पुरुष तुलसीके काष्ठकी वनी होई माला कों धारण कर्ताहै तिसके देहमें कोई पाप नहि रहताहै एह वात मैने सत्य कथन करीहै ॥ १६ ॥ जो कोई पुरुष तुलसी दलककें मिलित जलकों शिर करके धारण कर्ताहै सो श्रीगंगा जीके स्नान करणेके पुण्यकों लभताहै इसमें संशय नहिहै १७

पाद्मे राजसूयसमंपुण्यंपुष्पेपुष्पेश्वमेधजंयःपु
नस्तुलसीमालांकंठेकुर्यान्मधुद्विषः १८ लला
टेदृश्यतेयस्यतिलकंतुलसीमृदा तस्यपापानि
नश्यंतिक्रियमाणानिनारद ॥ १९ ॥ गारुडे ॥
तन्मूलमृत्तिकांचांगेकृत्वास्नातिदिनेदिने दशा
श्वमेधावभृथेस्नानजंलभतेफलम् ॥ २० ॥स्कां
दे तुलसीमृत्तिकालिप्तोयदिप्राणान्परित्यजेत्
यमोपिनेक्षितुंशक्तोयुक्तंपापशतैरपि ॥ २१ ॥

पद्म पुराणमें लि ० ॥ राज सूयके समान पुण्य होताहै और अश्वमेध फल प्राप्त होताहै एक २ पुष्प चढानेमें और जो पुरुष तुलसीकीमाला कों भगवान जी के ऊपर चढावता है तिसकी क्यावातकहणी ॥ १८ ॥ और जिस पुरुषने तुलसीके मूलकी मृत्तिकाका तिलक लगादा होवे हेनारद तिसके क्रिय माण क्या रोजके रोज करीदे जोपाप सो नष्ट होतेहैं ॥ १९ गारुड में लि॥० तुलसीके मूलकी मृत्तिकाकों अंगोंमैं लगाय कर जो प्रतिदिन स्नान कर्ताहै सो पुरुष दश अश्वमेधमें स्नान करणेके फल कों प्राप्त होताहै ॥ २० ॥ और जो कोई तुल सी के मूलकी मृत्तिका कर्के लिपा हुया प्राणोंकों त्याग करे तिसकों यमराज भी देखने कों समर्थ नहि होताहै चाहे सो सैकडे पापों करभी युक्त होवे ॥ २१ ॥

अधुनाविष्णोर्निर्माल्यतुलसी माहात्म्यं सेति
हासंवर्णयामि पद्मपुराणे क्रियायोगसारे जैमि
निंप्रतिव्यासवाक्यम् व्यासउवाच माहात्म्यं
तुलसीधात्र्योःप्रोक्तमेतदशेषतः अत्रतेकथयि
ष्यामिचेतिहासंपुरातनम् १ जैमिनिरुवाच भूय
एवमहाभागतुलस्याः पापनाशनं अतिथेः पू
जनस्यापिमाहात्म्यंब्रूहिविस्तरात् २ सूतउवा
च ततोव्यासोमहातेजास्तुलस्याद्विजसत्तमाः
माहात्म्यंवक्तुमारेभेशृण्वतांपापनाशनम् ॥ ३

अब विष्णुजी की निर्माल्य रूपा क्या ऊपरसें उतारी होई तु
लसीके धारणका माहात्म्य इतिहासके सहित वर्णन कर्ताहुं
पद्मपुराणके क्रिया योग सारमें जैमिनी के प्रति व्यास देवजी
का कथन है ॥ व्यासदेवजी कथन कर्ते भये हेजैमिने तुलसी
का और धात्री आमली का माहात्म्य अच्छीतरां सें वर्णन करा
है जिसमें कुछ शेष नहि रहाहै अवतेरेकों इसमें इतिहास क
थन कर्ताहुं ॥ १ ॥ जैमिनि ऋषि व्यासदेवजी का वचन सुन
के कहने लगे हेमहाभाग अब पापोंके नष्ट करणे वाला तुल
सीका माहात्म्य और अतिथियोंके पूजनका माहात्म्य विस्तार
सेंमेरेप्रति कथनकरो॥ २ ॥सूतजी कथनकरतेहैं हेशौनकादिऋषि
यो बडेतेजवाले व्यासदेवजी श्रवण करणे वालयोंके पापनष्ट
करणे वाला तुलसी का माहात्म्यकहनेकों आरंभ कर्ते भये ३

व्यासउवाच ॥ इयंसाक्षान्महालक्ष्मीस्तुलसी
भगवत्प्रिया तस्मादिमांनपश्यंतिवृक्षज्ञानेनसू
रयः ॥ ४ ॥ सादरस्तुलसींमर्त्योयथैवभुविसेव
ते तथैवसेंद्राविवुधाः सेवंतेतांमुरारये ॥ ५ ॥
परंब्रह्मस्वरूपेयंतुलसीयत्रतिष्ठति तत्रैवकुशलं
सर्वंसुदृढंप्रोच्यतेमया ६ प्राप्नोतिमृत्युकालेय
स्तोयंपातकवानपितुलसीपत्रगलितंसयातिह
रिसंनिधिम् ७ तुलसीमृत्तिकापुंड्रंमृत्युकालेस
मुद्वहेत् समुक्तःसर्वपापौघैः पुरंगच्छतिचक्रिण ८

व्यासदेवजी कथन करणे लगे हेऋषे एह तुलसी साक्षात् भगवान् विष्णु जीकी प्यारी महालक्ष्मी का रूपहै इसकारणसें वुद्धिमान् लोक इसकों वृक्ष ज्ञान कर्के नहिदेखें की एह वृक्ष है ॥ ४ ॥ और जिस प्रकार पृथिवी लोंकमें आदर पूर्वक तुलसीकों पूजतेहैं इसी प्रकार स्वर्ग लोकमें इंद्रादिक देवता मुरारि जो विष्णुभगवान् तिनकी प्रसन्नताके वास्ते तुलसीकों सेवतेहैं ॥ ५ ॥ हेऋषे परंब्रह्म स्वरूपा एह तुलसी जहां स्थित है तहां मेंही निश्चय कर्के सम्पूर्ण कल्याण स्थितहै एहवात मैने कहीहै ॥ ६ ॥ जोकोंइ पापी पुरुष भी मृत्युके समय तुलसीके पत्रों सें डिगे होए जलकों प्राप्त होताहै सो हरिकी समीपता कों प्राप्त होताहै ॥ ७ ॥ जो पुरुष मरणे के समय तुलसीके मूलकी मृत्तिका का त्रिपुंडर तिलक धारण कर्ताहै सो सम्पूर्ण पापोंसें मुक्त होएआ हुया भगवान् जीके वैकुंठपुरमें जाताहै ८

यस्यस्यात्तुलसीपत्रंमुखेशिरसिकर्णयोः मृ
त्युकालेद्विजश्रेष्ठतस्यस्वामीनभास्करिः ९।
पवित्रनामासुमतिर्वभूवपरमार्थवित् वभूव
ब्राह्मणीतस्यवहुलानामधारिणी॥ १० सद्वं
शप्रभवासाध्वीपतिसेवापरायणा अनाथस्सु
मतिर्नामतत्रैकोऽस्तिद्विजोत्तमः॥ ११ सख्यंते
नसहानेनकृतंचहरिसेविना वयोनयत्सुमति
मान्कथालापेनसत्तम॥ १२॥

मरणेके समय जिसपुरुषके मुखमेंजांशिर विषें अथवा कानोंमें तुलसीपत्रस्थितहोवे तिसका स्वामी यमनहि होताहै ९ परमार्थ के जानने वाला श्रेष्टवुद्धि कर युक्त पवित्र नामा एक ब्राह्मण होता भया तिसकी स्त्री वहुला नाम वाली होती भई॥ १०॥ सो वहुला अच्छेश्रेष्ट वंशमें उत्पन्न होई हुई पतिव्रता पतिकी सेवा करणेमें तत्पर होती भई उसी नगर में और एक सुमति नाम कर्के अनाथ ब्राह्मण निवास कर्ता था॥ ११॥ उसकेसा थ सुमति का सख्य भावथा सोदोनों हरिकी सेवा कर्तेथे और हेसत्तम आपसमें परमेश्वर संवंधिनीयां कथां के कहने सुना ने कर्के काल समय कों व्यतीत कर्ते भये॥ १२॥

उपविष्टःपवित्रोसौस्नेहादेववरासने अत्रांत
रेमहातेजालोमशोनामसद्दिजः ॥ १३ ॥ कथ
यंतौकथाश्चित्राः समागम्यददर्शतौ अथतं
लोमशंविप्रंविप्रावुत्थायपीठतः १४ पाद्यार्घा
चमनीयाद्यैःपूजयाम स तुश्चतौ सुप्रीतौलोम
शस्ताभ्यांनारायणपरायणः १५ उवासब्राह्म
णश्रेष्ठआसनेकीर्त्तयन्हरिं आसनस्थंमहात्मा
नंलोमशंतौकृतांजली पवित्रनामासुमति र्भ
क्त्याप्राहतुरुत्तमौ ॥ १६ ॥

एह जौनसा पवित्र नामा था सोस्नेह पूर्वक सुंदर आसन पर वैठा हुयाथा इतनेमें वडेतेजवाले लोमश नामा ब्राह्मण आय गया ॥ १३ ॥ तो क्या देखता है की दोनोंआपसमें विचित्र कथा करेया कर्तेथे तिनकों देखता भया इतनेमें सोभी लोम श जीकों देखतेही आसन के ऊपर सें उठखडे होए ॥ १४ ॥ और पाद्य अर्घ आचमन इनसे तिनका पूजन कर्ते भये तद प्र सन्न मन वाले लोमशजी नारायणजी के भजन में तत्पर क्या कर्ते भये ॥ १५ ॥ हेब्राह्मण श्रेष्ठ तिनो कर्के दिये होए आसन के ऊपर नारायणजी के नामों कों उच्चारण कर्ते २ वैठ जातेभ ये तद आसनपर वैठे होए महात्मा लोमशजीको पवित्र नाम सुमति एह दोनो वडे श्रेष्टभाक्ति कर्के हाथ जोड विनती कर कहते भये ॥ १६ ॥

पवित्रसुमतीऊचतुः भगवन्सर्वधर्मज्ञत्वत्पाद
कमलैर्नृभिः सद्भिर्ग्राह्यैराश्रमोयंपूतोभून्नूनमा
वयोः ॥ १७॥ कृतानियानिपापानिश्रावाभ्यां
मोहतःपुरा तानिसर्वाणिनष्टानित्वत्पादयुग
दर्शनात् ॥ १८ ॥ भवान्नारायणः साक्षात्पूज
नीयोमरैरपि सम्यक्तेपूजनंकर्तुंकिमावांमान
वौक्षमौ ॥ १९ ॥ आतिथेयाकृतापूजातवेयं
निजशक्तितःअनयाभवसुप्रीतःक्षमस्वदोषमा
वयोः ॥ २० ॥

पवित्र सुमती नामा दोनों ब्राह्मण कहने लगे हेभगवन् सभनो तरोंके धर्मजानने वाले सत्पुरुषों कर्के ग्रहण करणे योग्यजो एहतुमारे चरणकमल तिनो कर्के एहहमारा दोनोंका आश्रम पवित्र होता भया ॥ १७ ॥ और हमने अज्ञानसें पीछे २ कियेजोनसें पापहैं सो सारेहो आज तुमारे चरण युगलके दर्शन कर्के नष्ट हो गएहैं ॥ १८ ॥ तुसी देवतेयों कर्केभी पूजा के योग्य साक्षात् नारायणका स्वरूपहो अच्छीतरांसें तुमारा पूजन करणेकों हम मनुष्य जन्मा कैसे समर्थ होवेंगे ॥ १९ ॥ और अपनी सामर्थके अनुसारसें एह तुमारी आतिथेय जो पूजाथीसो करीहै इतनी कर्केही आप प्रसन्न होए हुए हमारे अपराध क्षमा करो ॥ २० ॥

इत्युक्तौमहात्मानौतस्यनम्रौपदद्वये निपेत
तुर्द्विजश्रेष्ठवयस्थौगृहधर्मिणौ ॥ २१ ॥ तयोर्भ
क्त्यासुसंप्रीतोलोमशोविदुषांवरः तौप्राहमधुरै
र्वाक्यैर्जैमिनेलोकपूजितः ॥ २२ ॥ लोमश
उवाच अनयायुवयोर्भक्त्यासुप्रीतोस्मिमहाश
यौ युवाभ्यांवरपुत्राभ्यांनिजवंशःप्रतिष्ठितः
॥ २३ ॥ विनयाल्लभतेधर्मंविनयाल्लभतेयशः
विनयाल्लभतेवित्तं विनयात्किंनलभ्यते ॥ २४

इस तरां सो दोनों महात्मा कथन कर्के तिसके पादोंमें नम्रमन वाले होए हुए पडजाते भऐ कैसे सो दोनोंहैं आपस में स्निग्धप्रीति वाले मित्रऔर गृहस्थ धर्मी ॥ २१ ॥ तिनकी भक्ति कर्के प्रसन्न होएहुए विद्वानोंमेश्रेष्ट और लोकांमें पूजित लोमशजी हे जैमिने मधुर वाक्यों कर्के तिनकों कहते भये ॥ २२ ॥ लोमशजी कहने लगे हेमहाशयो वडे उदार मन वालेयो तुमारी इतनीही भक्ति पूजाकर्के प्रसन्नहां क्योंकि वडे श्रेष्ठ पुत्रहो तुमने अपना वंश प्रतिष्टा वाला कराहै ॥ २३ ॥ किसतरांजो विनयनम्रताकरयुक्तहैं सोविनयसें धर्मकों लभता है औरविनयसें यशकोंलभताहै और विनयसे धनकों भी लभ है और ऐसीविशेष कौनसी वस्तुहै जोविनय नंम्रतासें नाहिप्राप्त होतीहै विनयसें सभीकुछ लभताहै ॥ २४ ॥

युवांविनायिनांश्रेष्ठौकुलजौधर्मतत्परौ आप्या
यितोस्मिसुतरांयुवाभ्यांविनयोक्तिभिः ॥ २५
साक्षाद्ब्रह्माशिवोविष्णुरतिथिःप्रोच्यतेवुधैः त
स्मिन्नेतावतीभक्तिर्युवयोरस्तुमंगलम् ॥ २६
आराधितोस्म्यहंसम्यगतिथिर्भूरिभोजनैःव्या
सउवाच इतिब्रुवतिवैतस्मिल्लोमशेविदुषां
वरे ॥ २७ ॥ कालहस्ताकृष्टआखुस्तत्रोत्त
स्थौनिजालयात् तमुत्थितंविलाद्दृष्ट्वामूषकं
क्रोधविह्वलः ॥ २८ ॥

तुसीं दोनों विनयक्या शिक्षा कर्के युक्त पुरुषोंके मध्यमें श्रेष्टहो और अच्छे कुलमें जन्मे होए धर्ममें तत्परहो तुसांने मेरेकों विनयकी उक्तियां कर्के अत्यंत प्रसन्न मनवाला कियाहै ॥ २५ वुद्धिमान् पुरुषोंने अतिथि जोहै सोसाक्षात् व्रह्मा शिवजी का रूपकहाहै फिरतिस अतिथिमें तुमारी इतनी भक्तिहै इससें तुमारेकों मंगल होवे ॥ २६ ॥ मैंजो अतिथि हां सोतुमने वहुत सुंदर अनेक तरोंके भोजनों कर्के सेवित कराहों इतनी कथा सुनाय फिर व्यासदेवजी बोले इसप्रकार विद्वानोंमें श्रेष्ट तिस लोमश ऋषिके कथन कर्ते होए ॥ २७ ॥ इतनेमें कालनेहाथ कर्के खेंचा हुया एक अपने घरसें वाहर चूहा निकलता भया तव विलक्या खुड्डके वीचसें निकले होए चूहेकों देखकर क्रोध कर्के व्याकुल होया हुया ॥ २८ ॥

पवित्रस्तरसोत्तस्थौवदन्निातिमुहुर्मुहुः अयंपा
पाशयोदुष्टोमूषकोनिशमाश्रमम् ॥ २९ ॥ य
तोमदीयंदंतौघैर्गृहद्रव्यंचकुंथति सर्वेषामेवध
र्माणांदयाश्रेष्ठाप्रकीर्तिता ॥ ३० ॥ साचसर्वे
षुकर्तव्यानचदुष्टेषुजंतुषु इत्युक्त्वासद्विजः को
पान्मूषकंतंकृतैनसम् ॥ ३१ ॥ नाराचेनातिती
क्ष्णेनप्राप्तकालंजघानह अथशोणितधाराभिः
प्लावितांगःसमूषकः पपातभूमौविप्रर्षेव्यथया
गतचेतनः ॥ ३२ ॥

पवित्र नामा ब्राह्मण शीघ्र ऐसें वारंवार कथन कर्ता हुया उठ खडा भया क्याकहता एहपापाशयदुष्ट चूहाहै वारंवार मेरेइस आश्रम कों २९ दंतोंके समूह कर्के घरके द्रव्योंकों काटताहै लिखाहै सभनों धर्मोंमें दया धर्म वडा श्रेष्ठहै ॥ ३० ॥ सोदया सभतरांके जीवोंमें करणी योग्यहै पर दुष्ट जीवोंमें नहि करणी ऐसा कहकर सोद्विज कराहै अपराध जिसने तिस चूहेकों क्रो धसें वडे तीक्ष्णबाण कर्के प्राप्त होएआ मरण समय जिसका तिस कों मारदेता भया ॥ ३१ ॥ इससें उपरंत सोमूषक बाण कर्के विद्धा हुया रुधिरधारां कर्के युक्त हो गएहैं अंग जि सके ऐसासोव्यथा पीडा कर गत चेतन क्यादूरहो गई चैतन्य ताक्या प्राणजिसकें सोमरके पृथिवीपर डिग पडता भया ३२

आखौनिपतितेतस्मिन्ननादसुमतिर्द्विजः हाहा
कारंततःकृत्वासमुत्तस्थौजवेनसः ३३ ततःक
र्णात्समानीयतुलसीपत्रमुत्तमम् तस्याखौवद
नेशीर्षेकर्णयोश्चप्रदत्तवान् ३४मातस्तुलसिगो
विंदहृदयानंदकारिणि अस्याखोः कृतपापस्य
कुरुत्वंगतिमुत्तमाम् ३५ इत्युक्त्वासद्विजश्रेष्ठः
सर्वलोकोपकारकःहरेनारायणानंतइत्युच्चैरक
रोद्ध्वनिम् ३६ ॥

तिस चूहे के पृथिवी पर गिरेहोए सुमति नामा ब्राह्मण हा हा
कार करके शीघ्रवडेवेगसें उठखडाहोताभया ॥ ३३ तिससें अनं
तर अपने कानसें उत्तम तुलसी का पत्र ले कर तिस चूहे के
मुख शिर और कानोंमें देताभया ३४ ॥ इतने स्थानोंमें देकर
पीछेसें प्रार्थना करणे लगा हेमातः तुलसि भगवान्‌जी के हृदय
कों आनंद करणे वालि पापों केकरणे वाले इसचूहेकी तूं
उत्तमगतिकर ३५ ॥ इसप्रकार सो सारेलोकोंपर उपकार करणे
वालाद्विजों में श्रेष्ट सुमति हेहरे हेनारायण हे अनंत ऐसे वडे
ऊंचेस्वरसें शब्द कर्ता भया ॥ ३६ ॥

तुलसीपत्रसंस्पर्शान्मूषकोगतकल्मषः श्रवणा
द्विष्णुनाम्नश्चमुक्तोभूद्भववंधनात् ३७ ततोदू
ता महाविष्णोःसर्वलक्षणसंयुताः आजग्मुःस
र्वतः शीघ्रंनेतुंतंगतकल्मषम् ३८ ततोऽथंसमा
रुह्यविष्णुदूतगणैर्वृतः जगामपरमंस्थानं मूष
कोद्विजसत्तम ३९ युगकोटिसहस्राणि स्थि
त्वानारायणालये ज्ञानमासाद्यतत्रैवमोक्षमा
द्यंजगामह ४० ॥ व्यासउवाच ॥ माहात्म्यं
तुलसीदेव्याः कथितंतेद्विजोत्तम इदानींब्रूहि
किंश्रोतुंमहाभागत्वमिच्छसि ४१ इतिविष्णु
निर्माल्यतुलसीमहिमासमाप्तः ॥

तुलसी पत्रके स्पर्शकरणेसें दूरहोगएपापजिसके ऐसा मूषक
और विष्णुकेनामोंके श्रवणकरणेसें संसारके वंधनों सें मुक्त हो
जाता भया ३७ तदनंतर लक्षणोंकर्के युक्त विष्णुके दूत गतक
ल्मष क्या निष्पापी चूहे के ल्याउने वास्ते शीघ्र आजाते भये
३८ तिस सें उपरंत विष्णुके दूत गणों कर्के परिवारिया हुया चू
हा रथके ऊपरवैठकर हेद्विजसत्तम परमस्थानकों चला जाता
भया ३९ ॥ तहांनारायणजी के घर युगोंके हजारां क्रोडां वर्ष
स्थित होकर फिर उसी लोकमें ज्ञानकों प्राप्त होकर मोक्षकों
प्राप्त होजाता भया४० व्यासदेवजी कथन करतेहैं हेद्विजोत्तम तु
लसी देवीका माहात्म्य कथन कराहै हेमहाभाग अवक्या श्रवण
करणे की इच्छा कर्ता हैं४१ एहविष्णुभगवानूजीके निर्माल्य तु
लसी का माहात्म्य कथन कराहै ॥

अथसच्छूद्रैरपिब्राह्मणद्वाराशालग्रामशिला
र्चनंकर्तव्यं पद्मपुराणे पुराणसंग्रहेच दीक्षा
युक्तैस्तथाशूद्रैर्मद्यमांसविवर्जितैःकर्तव्यब्राह्म
णद्वाराशालग्रामशिलार्चनम् १ इत्येवंप्रकारे
ण ब्राह्मण दिचतुर्वर्णैरन्यब्राह्मणद्वारा शिला
र्चनंकार्यम्

अब श्रेष्ट शूद्रोंने भी और ब्राह्मणके द्वारा शालग्रामकी शि
लाका पूजन करणा योग्यहे एहवाक्य पद्मपुराणमे पुराणसंग्र
हमें लिखाहै ॥ क्या कीदीक्षा मंत्र कर्के युक्तजौनसें सच्छूद्र औ
र जौनसें मद्य मांसनहि खाते हैं तिनों शूद्रोंने ब्राह्मणके द्वारा
शालग्राम शिलाका पूजन करणा योग्यहे १ इसतरांके प्रका
रकर्के ब्राह्मणादि चारवर्णों नें और ब्राह्मणके द्वारा पूजन क
रणा योग्यहै ॥

अथ प्रसंगाद्विष्णुमंदिरे प्रातरुत्थायसंमार्जन करणमाहात्म्यमाह नरसिंहपुराणे यस्तुसं मार्जनंकृत्वाकृष्णवेश्मानिलेपयेत् सपापकल हंदेहंत्यक्त्वायातिपरंपदम् ॥ १ ॥ पाद्मेक्रिया योगसारे ततोविष्णवालयेतस्मिन्स्वयमागत्य मार्जनं कुर्याच्छनैःशनैःप्राज्ञःसंमार्जन्यापवि त्रया ॥ २ ॥ यावंतोरेणवस्तस्माद्गच्छंतिनि लयाद्बहिः तावन्मन्वंतरशतंतिष्ठेद्विष्णुगृहेज नः ॥ ३ यस्तुसंमार्जनंकुर्याद्ब्रह्महापिहरेर्गृहे सोपियातिपरंधामकिमन्यैर्बहुभाषितैः ॥ ४ ॥

अत्र प्रसंगसें विष्णु भगवान्‌जीके मंदिरमें प्रातःकाल उठकर्कें जो संमार्जन क्या सोंतनाहैं तिसका माहात्म्यकहतेहैं नरसिं ह पुराणमें लि० ॥ जो पुरुष श्रीकृष्णजी के मंदिरमें सोत दें कर्कें पीछेसें लेपन कर्ताहै क्या चौंका देताहै सोपापोंके सहि त कलह देहवाले देहकों त्यागकर परम पदकों जाताहै ॥ १ ॥ पाद्मके क्रिया योग सारमें लि ॥ ० तिसविष्णुके मंदिरमें धीरे २ स्थितहोकेपवित्र मार्जनी वहारीकेसाथ शोधनकरेक्या मंदिरकों अछीतरांसे सोते ॥ २ उसकाएहफलहै जितने क धूलिकेरेणु सो तने कर्कें वाहर निकलैं हें उतने सैकडे मन्वंतर विष्णुलोक में पुरुष निवास कर्ताहे ॥ ३ ॥ जौनसा कोई ब्रह्महत्या वाला भीहरिकें मंदिरमें संमार्जन करे तद सो भी हरिकें लोक विष्णु मंदिरमें जाताहै और इसमें वहुत क्या कहनाहै ॥ ४ ॥

संमार्जनंविष्णुगृहेजनःकृत्वोपलेपनं लभते परमंधामपूजायाःफलवत्प्रभोः ॥ ५ ॥ वृहन्नारदीये देवतायतनेराजन्कृत्वासंमार्जनंनरः यत्फलंसमवाप्नोतितन्मेनिगदतःशृणु ॥ ६ ॥ यावत्यः पांशुकणिकाः सम्यक्संमार्जितान्नृप तावद्युगसहस्राणिविष्णुलोकेमहीयते ॥ ७ ॥ वृहन्नारदीये सूतशौनकसंवादेन हरिमंदिरांतरसंमार्जनमाहात्म्यंसेतिहासमाह ॥

पुरुष जोहै सो बिष्णुके घरमें संमार्जन क्या सोत कर्के और लेपनदेकर्के पूजाके फलकी न्यांई प्रभुके परम धामकों प्राप्तहोताहै अर्थात् जिस गतिकों पूजा करणे वाला प्राप्तहोताहै उसी गतिकों सोतने और चौका देने बाला प्राप्त होताहै ॥ ५ ॥ वृहन्नारदीय पुराणमें लि० ॥ हेराजन् पुरुष जोहै सोदेवताके मंदिरमें संमार्जन कर्के क्या सोतकर्के जिस फलकों प्राप्तहोताहै सो फल कथन कर्ते होए मेरेसें श्रवणकर ६ हेराजन् पुरुषने सोंतने कर्के जितनीयांक धूलिकियां कणिका सोतियांहैं उतनेही हजार युग विष्णुलोकमें महिमाकों प्राप्तहोताहै ॥ ७ ॥ वृहन्नारदीयपुराणमेंसूतशौनकजीके संवाद कर्के हरिके मंदिरमें संमार्जनकरणेके क्या सोतनेके माहात्म्येमे इति हास क्या प्रा[illegible] एकक थाकहतेहैं ॥ ॥

सूतउवाचभूयःशृणुताविप्रेंद्रामाहात्म्यंपरमेष्ठि
नः सर्वपापहरंपुण्यंनारदेनप्रभाषितम् ८ ॥
अहोहरिकथालोकेपापघ्नीपुण्यदायिनी हरि
भक्तिरसास्वादमुदितायेनरोत्तमाः ॥ ९ ॥
अहोभाग्यमहोभाग्यंविष्णुभक्तिरतात्मनां ते
षांमुक्तिकरस्थैवयोगिनामपिदुर्लभा ॥ १० ॥
अत्रैवोदाहरंतीममितिहासंपुरातनं शृण्वतां
वदतांचैवसर्वपापप्रणाशनम् ॥ ११ ॥

सूतजी कथन कर्तेभये हेविप्रेंद्राःअव परमेष्ठिका माहात्म्य फिर मेरेसे सुनो कैसाहै पापोंकें नाशकरणे वाला और नारदजी ने कथन कराहुया ॥८॥ हेऋषयःइस संसारमें नारायणजीकीऐसीक थाहै पापोंके नाशकरणे वाली पुण्योंके देनेवालीहै जौनसें श्रेष्ठ पुरुष हरिकी भक्तिरूपीरसके स्वाद कर्कें प्रसन्नहैं ॥९॥अर विष्णु भगवानजी की भक्तिमें रत क्या युक्त आत्मावालेयो के वडे भाग्यहैं उनकी क्या वातहै और योगिजनां कों भी दुर्लभ जौनसी मुक्ति है सो तिनकेहाथपरस्थितहै ॥ १० ॥इसवातमें प्राचीन इतिहासक्या कथा उदाहरणदेताहुं क्या कहताहुं जोकथासुनने कहने वालोंके सारे पापनष्ट करणे वालीहै॥११

आसीत्पुरामहीपालः सोमवंशसमुद्भवः य
ज्ञध्वजइतिख्यातोनारायणपरायणः १२॥ वि
ष्णोर्देवालयेनित्यंसंमार्जनपरायणः सकदा
चिन्महीपालोरेवातीरेमनोहरे १३ विचित्रक
लशोपेतंकृतवान्हरिमंदिरं सतत्रनृपशार्दूलः
सदासंमार्जनेरतः॥१४॥ कर्माण्यन्यानिसंत्य
ज्यविष्णोःप्रियतराणिवै हरिनामपरोनित्यं
हरिसंसक्तमानसः ॥ १५ ॥

पूर्व एक समय चंद्र वंशमें उत्पन्न होएआ हुया यज्ञ ध्वज नाम कर्के नारायणजी में युक्त एकराजा होताभया ॥ १२ सो विष्णु देवताके मंदिरमेंमार्जन कर्ताथा क्या सोतताथा फिर एक किसी समय सोराजा यज्ञध्वज मनोहररेवानदीके किनारे १३ पर वडे विचित्र कलशेयों कर युक्त हरिका मंदिर वनावता भया तिस मंदिर में आप सो राजा सर्वदाकाल संमार्जन कर्ताथा क्या आप तिसमंदिरकों चारो ओर से सोतताथा ॥ १४ और विष्णुके अत्यंतप्यारे जौनसें कर्महैं तिनकों त्यागकर हरिमें लग गयाहै मन जिसका ऐसा सो नारायणजीका नाम जपने में तत्पर होताभया ॥ १५ ॥

हरिप्रणामनिरतोहरिभक्तजनप्रियः वीतिहो
त्रइतिख्यातश्रासीत्तस्यपुरोहितः ॥ १६ यज्ञ
ध्वजस्यचरितंदृष्ट्वाविस्मयमागतः कदाचि
दुपविष्टंतंराजानंविष्णुतत्परम् अपृच्छद्वीति
होत्रस्तंवेदवेदांगपारगः ॥ १७ वीतिहोत्रउ
वाच राजन्परमधर्मज्ञहरिभक्तिपरायण वि
ष्णुभक्तिमतांपुंसांश्रेष्ठोसिभरतर्षभ ॥ १८ ॥

श्रोर हरिकों प्रणाम कर्णा हरिके भक्त लोक जिसकों प्यार ऐसा वीति होत्रनामक तिसका पुरोहित होताभया ॥ १६ ॥ सो यज्ञ ध्वज नामक राजे अपने यज्ञमान का चरित क्या वर्तन देखकर वडे विस्मयकों प्राप्तहोएश्रा एकसमय विष्णु भग वान की पूजामें तत्पर होए हुए राजा कों वेद वेदांग शास्त्र के पार अठिध कों जाणने वाला वीति होत्र पूछता भया १७ वीतिहोत्र राजाकों पूछने लगा हेराजन् परम धर्म के जाणने वाले श्रोर भगवानजीकी भक्तिमें तत्पर मैने जानाहे कि त्रिष्णुकी भक्ति करणे वाले पुरुषोंमें हेभरतर्षभ तूं वडाश्रे ष्ठहैं ॥ १८ ॥

संमार्जनपरोनित्यंदीपदानपरःसदा तन्मेवद
महाभागत्वयाकिंविदितंफलम् १९ संपादने
चवर्त्तीनांतैलसंपादनेतथा उद्युक्तोसिमहाभाग
सदासंमार्जनेरतः २० कर्माण्यन्यानिचीर्णा
निविष्णोः प्रियतराणिवै तथापित्वंमहाभाग
ह्येतयोःसततोद्यतः२१ सर्वात्मनामहत्पुण्यंजने
शविदितंत्वया तद्ब्रूहिमेगुह्यमपिप्रीतिर्मयित
वास्तिचेत्२२ पुरोधसैवमुक्तस्तुप्रहसन्पद्मजा
त्मज विनयावनतोभूत्वाप्रोवाचेदंकृतांजलिः २३

हेमहाभाग तूं जो सर्वदा काल मंदिरको सोतताहैं और दीप दान कर्ताहैं नित्यं प्रति मेरेकोंभी कथन करतैने इसमें क्या फ लजानेया हुयाहै १९ और तूंजो वट्टियां वनावता रहताहैं ते लसंपादन कर्ताहैं क्या इधर उधरसें इकट्ठा कर्ताहैं और सदा वहारी फेरताहैं इसमें क्या फलहे मेरेकोंभी कहो २० क्यों की विष्णुके प्यारे और वहुत तरोंके काम तैने करे हैं तदभी तूं हेमहाभाग इनों कामोंमैं सदा उद्यत रहताहैं एहक्या कार णहै २१ हेजनेश लोकोंके स्वामी सर्वात्मना क्या सभनों तरों से इनों दोनों कामोंमि वहुत पुण्य जानेआहे तद जेकर इसमें गुप्तभीहै जेकर तेरा मेरेमे प्रीतिहै तद मेरेकों कहो २२ हेपद्म जात्मज वह्माके पुत्र हेनारद सो राजा पुरोहितने ऐसेपूछाहुया हसता २ हाथ जोड विनतीकर शिरझुकायके कहताभया २३

यज्ञध्वजउवाच शृणुष्वविप्रशार्दूलयन्मयाच
रितंपुरा जातिस्मरत्वाच्छ्रोतॄणांकिंतुतेविस्मय
प्रदम् २४ आसीत्पुराकृतयुगेब्रह्मन्स्वारोचि
षेंतरे रैवतोनामविप्रेंद्रोवेदवेदांगपारगः २५
अयाज्ययाजकश्चैवसचैवग्रामयाजकः पिशु
नोनिष्ठुरश्चैवमपण्यानांचविक्रयी २६ निषि
द्धकर्माचरणःपरित्यक्तःसबांधवैः दरिद्रोदुःखि
तश्चैवजीर्णांगोऽव्यथितोभवत् ॥ २७ ॥

यज्ञध्वज कथन कर्ताभया हेविप्रशार्दूल जोकुछमैंने पूर्वमें करा हुयाहै सोश्रवण कर मेरेकों पूर्व जन्म स्मरणहै इससेमें कहता हुं श्रवणकर्णे वालेकों आश्चर्य देने वाला जोसुनताहै सो अचंभा होताहै २४ हेब्रह्मन् स्वारोचिष मनुके राज्यमे सत्ययुगके वीच वेद वेदांगोंके जाणने वाला रैवत ब्राह्मण होताभया २५ कैसाथा अयाज्य याजक और ग्राम याजक वडादुष्ट कठोर कहने वाला नहिवेचने वालियों वस्तुयोंकों वेचताथा २६ निषिद्ध कर्मोंके करणे वालाथा इससें बांधवोंने त्यागया हुयाथा और वडा दरिद्री अत्यंत दुःखित जीर्ण अंगों वाला वडा वृद्ध सोरोगों करके वहुत पीडित होता भया २७

सकदाचिद्धनार्थंतुपृथिव्यांपर्यटन्द्विजः ममार
नर्मदातीरेकासश्वासप्रपीडितः॥ २८॥ तस्मि
न्मृतेतस्यभार्यानाम्नावंधुमतीतदा कामाचार
पराभूतापरित्यक्तास्ववंधुभिः ॥ २९ ॥ तस्यां
जातोस्मिचांडालाद्दंडकेतुरितिश्रुतः महापाप
रतोनित्यंब्रह्मद्वेषरतस्तथा ॥ ३० ॥ परदार
परद्रव्यलोलुपोजंतुहिंसकः गावश्चविप्राव
हवोनिहतामृगपक्षिणः ॥ ३१ ॥

सो ब्राह्मण एकसमें धनके निमित्त पृथिवीमें फिरता २ हुया कासश्वास रोग कर पीडित होयाहुया नर्मदानदीके किनारे पर मृत होजाता भया ॥ २८ ॥ तिसके मरणएपीछे उसकी जो वंधुमती नाम कर्के स्त्रीथीसो कामा चार मैं क्या व्याभिचार करणेमें तत्पर होती भई तद वांधव जो उसके थे उनोंने तिसकों घरसें निकाल दिया तो निश्शंक होके व्यभिचार कर्तीभई ॥ २९ ॥ उस ब्राह्मणकी स्त्रीमें चांडालके गर्भसें दंड केतु नाम कर्के प्रसिद्धमैं जन्मता भया सो कैसा होता भया महापाप कर्णेमें नित्य तत्पर रहना ब्राह्मणों के साथ द्वेषकरणा ॥ ३० और पराईआं स्त्रियां वलात्कारसें भोगनीयां पराया धन हरलेना इतने कामोंमें तत्पर और वनके जीव मारणे ब्राह्मण गौयां मृग पंछि अनेकमैंने मारदिये ॥ ३१ ॥

मेरुतुल्यसुवर्णानिवहून्यपहृतानिच मद्यपानं
रतोनित्यंनिंदकःपिशुनस्तथा ३२ एवंपापकृ
तोनित्यंवहुशोमार्गरोधकृत् पशुपक्षिमृगादी
नांजंतूनामंतकोपमः ॥ ३३ ॥ सकदाचित्का
मतप्तोरन्तुकामःपरस्त्रियं शून्यंपूजादिभिर्वि
ष्णोर्मंदिरंप्राप्तवान्निशि ॥ ३४ तत्ररामोपभो
गार्थंशायितंतेनकामिना स्ववस्त्रप्रांततोब्रह्म
न्कियद्देशः सुमार्जितः ॥ ३५ ॥

और मैने सुमेरु पर्वतके तुल्य सुवर्ण चुराए और वहुत द्रव्य चुराए जिनकी कुछ गिनती नहिहै नित्यं प्रति मद्यपान करणा लोकोंकी निंदाकरणी चुगलीयां करणियां ॥ ३२ ॥ इस प्रकारके नित्यंप्रति वहुत पापकरे और मार्गों को रोक २ कर लोकों के धन लूटे और पशुपाक्षि मृगादि जीवोंकों तो में मृत्युकें तुल्यथा ॥ ३३ सो एकसमय कामदेवकरकेपीडित होए आ हुया पराई स्त्रीके साथ क्रीडा करणेकी इच्छावाला स्थान देखता फिरता था तद रातके समय एक पुराणा मंदिर विष्णु काथा जिसमें कोई पूजा नहिकर्तांथा न दीप जगाताथा सो मिलगया उसमेंचलेगए ॥ ३४ ॥ तहां स्त्रीके भोग करणेके ले ये उसकामिने अपने वस्त्रके साथथोडी जगा मोत कर शयनके निमित विछावने करे ॥ ३५ ॥

यावत्यःपांशुकणिकास्तेनसंमार्जितास्तदाता
वज्जन्मकृतंपापंतदैवक्षयमागतम् ॥ ३६ ॥ प्र
दीपः स्थापितस्तत्रसुरतार्थंद्विजोत्तम तेनापि
ममदुष्कर्मनिः शेषंक्षयमागतम् ॥ ३७॥ एवं
स्थितोविष्णुगृहेरमाभोगेच्छयाद्विज तदेवदीप
कंदृष्ट्वाआयाताः पुरपालकाः ॥ ३८ ॥ चौरो
यंपरदूतोयमित्युक्त्वामामपादयन् खड्गेनशि
तधारेणशिरःछित्त्वातुतेगताः ॥ ३९ ॥

जितने धूलिके कणके उसने उहांसे मार्जित करे क्या सोते उ
तनेही जन्मोंके करेहोए उसके पाप उसी समय नष्ट होजाते भये
॥ ३६ ॥ हेद्विजोत्तम क्रीडाके निमित्त तिसने उसमंदिरमें दीप
भी जगाया तद तिसदीप दानके प्रभाव करकें वाकीके पापभी
सारे नाशकों प्राप्त होजाते भये॥ ३७ ॥ हेद्विज इसप्रकार परस्त्री
के साथ भोंग करणेकी इछा वाला विष्णुके मंदिरमें स्थित हो
ता भया तद उस दीपककों जगते होए देख कर उस पुरके रख
वाले उहां आयजाते भये ॥ ३८ ॥ सो आनकर कहनेलगे ए
ह चौरहै एह औंर किसीका दूतहै ऐसें कथन कर तीक्ष्ण धारा
वाले खड्गके साथ मेराशिर काट अछीतरां मार करकें सो च
ले गए ॥ ३९ ॥

दिव्यंविमानमारुह्यसर्वभोगसमन्वितं सद्यए
वतयासार्धंविष्णुलोक मुपागतः॥४०॥तत्रस्थि
त्वाब्रह्मकल्पंशतंसाग्रंद्विजोत्तम ततश्चब्रह्मणा
सार्धंतावत्कालंचसंस्थितः॥४१॥ततश्चभूमिभा
गेषुदेवभोगेषुचैक्रमात् तेनपुण्यप्रभावेणयदू
नांवंशसंभवः॥४२॥तेनैवभुज्यतेसंपत्तथाराज्य
मकंटकं ब्रह्मन्कृत्वातुरागार्थमेवंश्रेयः समास
वान् ॥ ४३ ॥

सो मार कर मेरेकों चलेगए पीछेसे विष्णुके गण सम्पूर्णसु खभोगों कर्के युक्त विमान ल्याए उसके ऊपर मेरेकों चढाय कर तिसस्त्रीके साथही विष्णुलोकमें चले आए ॥ ४० ॥ हे द्विजोत्तम तिस लोकमें अग्रके सहित कुछक सौ वर्षसें अधिक ब्रह्माके कल्प तकस्थित होकरफिर उतनाहीचिर ब्रह्माके साथ ब्रह्मलोकमें निवास कर्ता भया ॥ ४१ ॥ फिर क्रमसे स्वर्गमें देवतेयोंके भोग २ कर भूमिभागमें आय प्राप्त भयाहां और तिस पुण्यके प्रभाव कर्के यादवोंकेवंशमें उत्पन्न भया हां ॥ ४२ और तिसपुण्यके प्रभाव कर्के सारियां संपदां और निष्कंटक राज्य भोग्या कर्ता हुं हे ब्रह्मन् विना पुण्यके प्रभाव जाने मार्ज्जनका और दीपका एह इतना फलपाया है अवजान कर सेवा कर्ता हुं नजाने किस फलकों प्राप्त होआंगा ॥ ४३ ॥

भक्त्याकृतवतांपुंसांकिंभवेदितिवेद्मिन तस्मा
त्संमार्जनेनित्यंदीपदानेचसत्तम ॥ ४४ ॥ य
तिष्येपरयाभक्त्याह्यहंजातिस्मरोयतः यःपूज
येज्जगन्नाथमेकाकीविगतस्पृहः ॥ ४५ ॥ सर्व
पापविनिर्मुक्तः प्रयातिपरमंपदं अवशेनापि
यत्कर्मकृत्वेमांश्रियमागतः ॥४६॥ भक्तिमद्भिः
प्रशांतैश्चकिंपुनःसम्यगर्चनात् इतिभूपवचः
श्रुत्वावीतिहोत्रोद्विजोत्तमः अत्यंततुष्टिमापन्नो
हरिपूजापरोभवत् ॥ ४७ ॥

और जोकोई भक्तिकर्के नारायणजीके मंदिरमें रोलके २ चौका देतेहैं और दीपजगातेहैं उनकों खबर नहिक्या फल होता होवेगा इसबातकों जानकर हेसत्तम रोजमंदिर कों सोततांहुं और दीप जगाताहुं ॥ ४४ ॥ और परम भक्तिकर्के यतन कर्ताहुं जिसके प्रभावसेंमें जातिस्मरहां क्या मेरेकों पूर्व जन्म यादहै जोपुरुष बिगत स्पृह होकर क्या कामनां कोंत्यागकरएकाग्र चित्त लगायकर जगन्नाथजीकों पूजताहै४५सोसारे पापोंसें निर्मुक्तहोकर परम पदकों जाताहे अवशक्या विना जाने बूझे अपने काम भोगके निमित्त जिसकामकों कर्के इतनी संपदा कोंप्राप्त भयाहां जौनसे कोंई भक्तिवाले शांत चित्त वेद विधिसें पूजन कर्तेहैं उनकोंखबर नहिक्याफल होताहै४६एहवाक्य राजाका श्रवण कर वीतिहोत्र ब्राह्मण अत्यंत परमप्रसन्नताकों प्राप्त होकर नारायण जीकी भक्ति पूजामें तत्परहोजाताभया४७

सूतउवाच तस्माच्छृणुतविप्रेंद्रा देवोनाराय
णोऽव्ययः ज्ञानताऽज्ञानतोवापिपूजकानांविमु
क्तिदः ॥४८॥ अनित्यानिशरीराणिविभवोनै
वशाश्वतः नित्यंसन्निहितोमृत्युःकर्त्तव्योधर्मसं
ग्रहः॥४९॥ अनित्याबांधवाः सर्वेसंपदत्यंत
चंचला शरीराणांध्रुवोमृत्युस्तस्माद्भजतकेश
वम् ॥५० जन्मकोटिसहस्त्रेषुपुण्यंयैः समुपा
र्जितं तेषांभक्तिर्भवेच्छुद्धादेवदेवेजनार्दने ५१
दुर्लभंजाह्नवीस्नानंतथाचातिथिपूजनं अर्चय
ध्वंजगन्नाथंभूयोभूयोवदामिवः ॥ ५२ ॥

सूतजी कथनकर्नेभयेइसकारणसें हेशौनकादिकऋषयोतुमश्रवण करो अविनाशिजोदेवता नारायणजीहेसोज्ञानकर्के विनाजाने भीपूजे होए पूजा करणे वालेयोकों मुक्तिके देतेहैं ४८ एहशरीर अनित्यहै क्यानहि रहनेवाला और धनभीसर्वदा काल नहिहै और मृत्यु सभनोंके पासरहताहै इसबातकों जानकर धर्मकों इकट्ठा करणा चाहिए४९ और भाई बांधवभी सदानहिरहते किसोकी संपदो जोहै सोतोअत्यंतकर्केंचचलहैसोक्याउोहकिसीके सदा रहतीनहिहै और शरीरका मरजाना निश्चयकरवनाहै इसवास्ते केशवजीकाभजन करोकुछ भला होवेगा५० जिनोंने हजारोंक्रोडोंजन्मोंमें पुण्य इकट्ठेकरेहोएहैं तिनकी भक्ति देवदेवजनार्दन जीमे होतीहै ५१ संसारमें गंगा जीका स्नान दुर्लभहै और अभ्यागतोंकी पूजा उससें भीदुर्लभहै और वारंवारमें एही कहता हुंकी जगन्नाथ जीकी पूजाकरो ॥ ५२ ॥

भगवतोमंदिरसंमार्जनमहिमानमाह भक्तमालायां वल्लभाचार्यपुत्रस्याविठ्ठलस्वामिनःसुताः सप्तपूर्वोदितास्तत्रसप्तस्थाननिवासिनः॥१॥ श्रीमद्गोकुलनाथस्यकथांवक्ष्यामिभक्तिदां महाभागवतः सोभूत्प्रसिद्धोऽद्यापिभूतले॥ २ ॥ नाथद्वारेतिविख्यातापुरीपरमपावनी तत्रश्रीनाथनामानं पूजयामासुरुत्तमाः ॥ ३ ॥ तत्र श्रीनाथमूर्त्तितुमंदिराद्वाह्यतोजनाः ददृशुर्नचतत्रासीत्किमप्यव्यवधानकम् ॥ ४

अबभगवान् जीके मंदिरमें झाडू देने की महिमा कहीहै भक्तमाला में लि० ॥ वल्लभाचार्यका पुत्रजो विठ्ठल स्वामि तिसके सात पुत्र पीछे कह आएहै सातों स्थानोंमे निवास कर्ते थे ॥ १ ॥ अब उनसें श्री मद्गोकुल नाथकी मनोहर कथा कथनकर्ताहुं जिसके सुनने सें परमेश्वरमें भक्ति होतीहै सो श्रीमद्गोकुलनाथ वडा परम भक्त होता भया सो आजतकर भी प्रसिद्धहै ॥ २॥ नाथ द्वारानाम करके परम पावनी नामा एकपुरी है तहां में श्रेष्ट भक्त जन पूजामें श्रीनाथ नामाठाकुरजी की मूर्त्तिकों पूजतेथे ॥ ३ ॥ तहां मंदिर के अंदर श्रीनाथजी की मूर्त्ति कों वाहरसें लोक देखते थे उनके आगे कोई दृष्टि रोकने वाला पढदा नहीथा ॥ ४ ॥

अथैकस्तत्रचांडालःकांधाख्योमलशोधकः वा
ह्याद्ददर्शतांमूर्त्तिंप्रातराराात्रिकक्षणे ॥५॥ दृष्ट्
वाविमोहितो मूर्त्तिंप्रातरारात्रिकक्षणे नचचाल
स्वयंकेनाप्याहूतोनिर्दयौततः॥ ६ ॥ परंतुसं
स्मरन्मूर्त्तिंगृहकर्मचकारसः एवंप्रत्यहमुत्थाय
प्रातरारात्रिकक्षणे ॥ ७ ॥ गत्वातत्रतुतांनाथ
मूर्त्तिंपश्यन्स्थितोभवत् ॥ ॥ एवंबहुदिनेयाते
तेदृष्टंकेनापिसाधुना श्रीमद्गोकुलनाथाख्यस्वा
मिनेकथितंतुतत् ॥ ८ ॥

उस नगरीमें मल मूत्र शोधने वाला कांधा नामक एक चूडा निवास कर्ताथा सो सोतनेके निमित्त गया हुया प्रातः काल आर्त्तिके समय वाहरमें खडा होकर मूर्त्तिकों देखताथा ॥५॥ तिसकों देखकर आर्त्तिके समय प्रातः काल उहां खडा होजाताभया फिर उहासें ना आप चलता भया किसीका वुलायाहुया उहां सें जाता भया॥ ६ ॥ और जेकर उसने घरमें जाना भी तदभी उसमूर्त्तिका स्मरण कर्ते२ घरका काम करणा इस प्रकार रोजके रोज उठ कर्के प्रातः काल आर्त्तिके समय उहां जाकर मूर्त्तिके सामने स्थित होजाता भया ॥ ७ ॥ इसनरां कर्ते होए तिसकों वहुत दिन वीत गए तद एक साधुने तिसकों देखा तद उसने श्रीमद्गोकुलनाथ स्वामिके तांई कहदिया हेगुरो मंदिरके वाहरसें चूडा दर्शन कर्ता है ॥ ८ ॥

भित्तिर्देयांतरानोचेच्चाडालोपिनिरीक्षते इत्यु
क्तः सोपितंप्राहकारयाद्यैवमाचिरम् ९ ततोभृ
त्यानुपाहूयनिर्ममेभित्तिमुत्तमां अथप्रातः स
मागत्यचांडालोनैवदृष्टवान् १० महाशोकार्ण
वेमग्नोदुःखीभूमौनिविष्टवान् ददर्शपुनरुत्था
यनापश्यत्संस्थितस्तदा ११ एवंसुदुःखितो
भूत्वात्यक्त्वाकर्मनिजंपुनः कामीप्रियावियोगे
णकृपणस्तुधनक्षये ॥ १२ ॥

सो साधु जाकर कहने लगा हेगुरो ठाकुर जीके सामने कुछ पडदा करना चाहिए नहितो चांडाल सामने सें देखताहै इसप्रकार कथन कराहुया गोकुलनाथ उसको कहता भया आज ही एक कंध झढाय देओ मतचिर लगाओ ९ इतनी आज्ञाउसकी पातेही भृत्यकोबुलाय कर उत्तम भित्तीआगे चढायदी इससें दूसरे दिन उसी तरां प्रातःकाल आयके देखने लगा तो ठाकुरजी दृष्टिमें नहि आये १० तद वडे शोक रूपी समुद्रमे डूबकरदुःखित मनवाला होके भूमि पर वैठ जाता भया फिर उठकर ऊचा होके देखने लगा तदभी नहि देखे फिर उसीतरांवैठगया ११ ऐसें सो दुःखित होता भया जैसे प्रियास्त्री के वियोग करके कामी पुरुष दुःखित होताहै और धनके नष्ट होए हुए कृपण दुःखित होताहै उसीतरांका होके अपना कर्म भी त्याग देता भया ॥ १२ ॥

एकपुत्रःसुत्त्यागेतथादुःखमवाप्तवान् आग
त्यस्वगृहंसोथाशिश्येरोगात्तवत्क्वचित् १३नभु
क्तवान्दिवारात्रौमूर्त्तिविश्लेषदुःखितः ततःसभ
गवान्देवः स्वप्नेप्राहदयान्वितः १४श्रीमद्गोकु
लनाथंतांभित्तिंदूरीकुरुद्रुतं योसौकांधाख्यचां
डालः सोप्यतीवममप्रियः १५ मद्दर्शनंविना
सोथमरणेकृतनिश्चयः तस्माद्यथासपश्येन्मां
तथाकुरुमदाज्ञया ॥ १६

और एक पुत्रवाला पुरुष पुत्रका त्याग कर जैसे दुःखित होताहै ऐसे सो दुःखित होता भया इससें उपरंत अपने घर में आय कर कहीं एकांतमे रोगार्तकी न्यांई सोय रहता भया १३ ॥ और मूर्त्तिकेवियोग कर दुःखित होएआहुया उसदिन में नारातमें भोजन कर्ता भया तद दयाके समुद्र भगवान् श्रीमद्गोकुलनाथकों स्वप्नमें कहते भये १४ जौनसा एह कांधानाम चांडालहै सोमेरावहुत प्यारा है और आज मेरेदर्शन विना मरणे में निश्चयधारण करलियाहै इसवास्ते ऐसा कामकरो जिसतरां सें मेरेकों आगेकी न्यांई देखे अर्थात् एहकंध जौनसी भ्रांईहै सोदूरकर देओ ॥ १६ ॥

इत्युक्त्वातंतथाकांधंप्राहवैष्णवरूपधृक् अहो
भित्तिस्तुपतितागत्वापश्यहरिंमुदा १७ इति
दृष्ट्वातदोत्थायकांधस्तत्रागतोनिशि संमुखः
संस्थितस्तस्थौपूजकः स्वाम्यपिस्वयम् १८
उत्थायाभित्तिंतत्कालंदूरीचक्रेतिविस्मितः अ
थप्रातरभूद्द्वारःकपाटोद्घाटनेकृते १९ कांधः
संमुखतोदृष्टःकिंकरोष्यत्रमांवद इतिश्रुत्वा
ततोकांधः सर्वंस्वाचरितंजगौ २०

इस प्रकारका वचन गोकुलनाथकों स्वप्नमें कथन कर फिर इसी प्रकार वैष्णवका रूप धार कर स्वप्नमें उस कांधे चांडाल कोंभी जाकर भगवानजी कहते भये हे कांधे सो जो दिवाल डिग पडीहै जौनजी ठाकुरजीके अगे पडदा करीथी अवहो जाकर हर्ष युक्त नारायणका दर्शन कर १७ इस तरांका स्वप्न देख कर उसीसमय उठ खडा होकर रातके समेंही उहां चला तो उस समय उहांका द्वार वंदथा सामने बैठरहा इतनेमें पूजक और साधु उठ कर आपही उस कंदाकों दूर करदेते भये क्या डिगाय देते भये विस्मय युक्त होए हुए अव इससें उपरंत प्रात काल भी होगया तद उनोंने किपाट खोलेतो क्या देखतेहैं की कांधा सन्मुख खडाहै १९ उसकों पूछने लगे तूं क्या इहां कर्ताहैं हमारेकों कहो इतना वचन सुन कर कांधा चांडालसा रा अपना चरित्र कहदेता भया २० ॥

श्रुत्वास्मृत्वास्वप्नवृत्तंतस्योपरितुतोषसः प्राह त्वंत्यजस्वांवृत्तिंभोजनंतेददाम्यहम् २१ द्वारसंमार्जनंत्वेकंकुर्वन्नत्रसुखीभव इत्युक्तः सोपिकांधाख्यस्तंप्रणम्यमुहुर्मुहुः २२ त्यक्का गृहादिकंसर्वंस्थितोभक्ततरोभवत् एवंभक्तिवशोभूत्वासंमार्जनपरायणः गोविंदनामप्रजपंश्चांतेहरिपुरंययौ २३ इति

उसका वर्तन श्रवण कर्के और स्वप्नका वृत्तांत स्मरण कर्के श्रीमद्गोकुलनाथ तिसपर वडा प्रसन्न होता भया और तिसकों- कहने लगा इस अपनी वृत्तिकों छोडदे हम तेरेकों भोजन दियाकरेंगे ॥ २१ ॥ और एक भगवान्‌जीके मंदिरका द्वार तैने सोतना और कुछ काम नहि करणा इस जगामें सुख पूर्वक निवास कर इस प्रकार तिसने कथन करा हुया कांधा वारंवार तिसकों प्रणामां कर्ता भया २२ और गृहस्थ कात्याग कर उहां ठाकुरद्वारेके वाहर कुटिया वनाय कर सुख पूर्वक निवास कर्ता श्रेष्ट भक्त होजाता भया इस प्रकार सोचांडाल भक्तिके वशी भूत होकर भगवानजीका मंदिर सोतने कर्ममें तत्पर होए आ हुया गोविंदजीके नाम जपता २ अंतमें नारायणजीके लोक वैकुंठमें जाय प्राप्त होताभया २३ एह भक्त माला ग्रंथ भगवानजीके मंदिरसोतनेकी महिमा कहीहै ॥

अथप्रसंगाद्विष्णुप्रासादे यःप्रातरुत्थायगोम
येनोपलेपनंकरोतितस्यफलमाह विष्णुधर्मो
त्तरे अभ्युक्षणंचयः कुर्याज्जलेनापिहरेर्गृहे स
शांतपापो भवतिनात्रकार्याविचारणा ॥ १ ॥
गोमयंगृह्यवैभूमिंममवेश्मोपलेपयेत् यावत
स्तुपदास्तत्रसमंतादुपलेपयेत् तावद्वर्षसह
स्त्राणिमद्भक्तोजायतेभुवि ॥२॥ स्कांदेकार्त्तिक
माहात्म्ये गृहीत्वागोमयंचाद्भिर्मंडलंकेशवाग्र
तः कर्त्तुःश्रियोधनप्राप्तिः संततेःस्वजनस्यच
इति ॥ ३ ॥

अबप्रसंगसें विष्णुजीके मंदिरमेंजोकोई प्रातःकालगोहे आदि
कालेपनकर्ताहै तिसकाफल कहतेहैं विष्णु धर्मोत्तरमें लिखाहै
जो कोई पुरुष जलके साथभी हरिके घरमें अभ्युक्षण कर्ताहै
क्या छिडकताहै उसके जितने कोई पापहैं सोशांत होजातेहैं
इसमें कुछ विचार नहिहै ।१॥ और जोकोई पुरुष गोमय ले
के मेरे घरमें जितने पादोंकी संख्याके लंबे चौडा चारो और
सें चौका देताहै सो उतनेही हजारवर्ष पृथिवी लोकमें मेरा
भक्त होताहै ॥ २ ॥ स्कंदके कार्त्तिकमें लिखाहै जोकोई गो
मय लेकर जलके साथ केशवजीके आगे मंडलकी न्याई चौ
का देताहै तिसकों श्रीशोभासंतान धनकी प्राप्तिऔर आगे सं
तानकी प्राप्ति होतीहै ३

पाद्मेक्रियायोगसारे संमार्जनंविष्णुगृहेजनःकृ
त्वोपलेपनं लभतेपरमंधामपूजायाःफलवत्प्र
भोः४ अथोपलेपनं कुर्यात्पावकैर्गोमयैर्जलैः
तस्मिन्विष्णुगृहेप्राज्ञःस्मरन्नारायणंप्रभुम् ५
यस्तूपलेपनंविप्रकुर्यात्केशवमंदिरे तस्यपुण्य
फलंवच्मिसंक्षेपाच्छृणुजैमिने ॥ ६ ॥ रजांसि
तत्रयावंतिविनश्यंतिद्विजोत्तम तावत्कल्पसह
स्राणि तिष्ठेद्विष्णुगृहेसुखम् ॥७॥ यस्तुदेवाल
येभक्त्याराजन्गोष्पदमात्रकंजलेनसेचनंकुर्या
त्तत्फलंवदतःशृणु ॥ ८ ॥

पाद्मकेक्रियायोगसारमे लिखाहै कि जोविणुकेमंदिरमें पहलेसो
तकरपीछेसे चौकादेवेसो प्रभुकीपूजा करणेकेतुल्य परमधामको
लभताहै ४ जोपुरुषप्रथमसोतकर्के पीछेसे पवित्रगोहे और जल
केसाथ जिसविष्णुके मंदिरमें प्रभुनारायणजीका स्मरणकर्ता २
लेपन करे ॥ ५ ॥ जोपुरुष केशवजी के मंदिरमें हेविप्र लेप
न लगाताहै तिसके पुण्यका फल संक्षेप सें तेरे प्रति कथन
कर्ता हुं तू श्रवणकर ॥ ६ ॥ हेद्विजोत्तम चौका देते २ जित
नीक धूलि उहां सें नष्टहोतीहै उतने हजार वर्ष विष्णुके घरमें
निवास कर्ताहै ॥ ७ ॥ हेराजन् जोकोई भक्ति प्रेम कर्के देव
ताके मंदिरमें गोष्पद मात्रभी जलके साथ सेचन करे तिसका
फल कथन कर्ते होए मेरे सें श्रवण कर ॥ ८ ॥ ॥

यावत्यः पांशुकणिकाद्रवीभूताजनेश्वर ताव
ज्जन्मार्जितैः पापैः सद्यएवप्रमुच्यते ९ गंधो
दकेनयोमर्त्योदेवतायतनेनृप भक्तितः सेचनं
कुर्यात्तस्यपुण्यफलंशृणु १० द्रवीभूतानियावं
तिरजांसिमधुसूदन तावत्कल्पसहस्राणिह
रिसारूप्यमश्नुते ११ वृहन्नारदीये मृदाधातु
विकारैर्वावर्णकैर्गोमयेनवा उपलेपनकृद्यस्तु
नरोवैमानिकोभवेत् ॥ १२ ॥

हेजनेश्वर जितनीयां क पांशु धूलि कियां कणिका द्रवी भूत हुईंआंहैं उतनेही जन्मोंके करे होंएपापों करके शीघ्र मुक्त होताहै ॥ ९ ॥ हेनृप देवता के मंदिर में जौनसाकोई पुरुष सुगंधि वालेजल करके सेचन कर्ताहै तिसके पुण्यका फलश्र वणकर ॥ १० ॥ हेमधुसूदन जितनीक रजक्या धूलि उहांसे दूर हुईहै उतने हजारां कल्प हरिकी सारूप्यता भोगता है ॥ ११ ॥ वृहन्नारदीय में कहाहै जो कोई पुरुष मृत्तिका करके और धातुयोंके विकारों करके क्या गेरिकादियों करके और रंगों करके गोमयके साथ उप लेपन करे सो विमानों पर चढता है ॥१२ ॥

बृहन्नारदीये सूतशौनकसंवादे हरिमंदिरांतरे
लेपनकरणस्येतिहासंवर्णयामि अत्रैवोदाहरं
तीममितिहासंपुरातनं पठतांशृण्वतांचैवसर्व
पापप्रणाशनम् १३ सूतउवाच विप्राः शृणुध्वं
चरितंयज्ञमालिसुमालिनोः यस्यश्रवणमा
त्रेणवाजिपेयफलंलभेत् १४ कश्चिदासीत्पुरा
विप्रा ब्राह्मणो रैवतेंतरे वेदमालिरितिख्यातो
वेदवेदांगपारगः १५ सर्वभूतदयायुक्तोहरिपू
जापरायणैः पुत्रमित्रकलत्रार्थंधनार्जनरतोभ
वत् ॥ १६ ॥

बृहन्नारदीय पुराण में सूतशौनकजी के संवाद करकें हरिके मंदिरमें चौकादेनेकी महिमामें इतिहासवर्णनकर्तेहैं इस लेपनकी महिमामें पुरातन इतिहास का उदाहरण देतेहैं जो पडने सुननें वालेयों के सारे पाप नष्ट करणे वाला है १३ सूतजी कथन कर्ते भये हेशौनकादि ब्राह्मणो इसमें यज्ञमालिसुमालिका चरित श्रवणकरो जिसकेसुनने मात्रकरकें वाजिपेय यज्ञका फलहोताहै १४ हेविप्राःरैवत मनुके राज्यकर्ते होए वेदवेदांग शास्त्रके जानने वाला वेदमालिनाम ब्राह्मण होता भया १५ केसा सो ब्राह्मणथा सभनो जीवोंमें दयाकर्णी हरिको पूजामें तत्पर रहना और पुत्र मित्र स्त्रीयां इनकें निमित्त धनइकठा करणे मे तत्पर रहता भया ॥ १६ ॥

अपण्याविक्रयंचक्रेव्रतानांविक्रयंतथा परार्थं
तीर्थगमनंकलत्रार्थमकारयत् ॥ १७॥ कालेन
गच्छताविप्राजातौतस्यसुतावुभौ यज्ञमालिः
सुमालीचयमलावतिशोभनौ ॥ १८ ततःपि
ताकुमारौतावतिस्नेहसमन्वितः पोषयामास
वात्सल्याद्बहुभिः साधनैस्तथा ॥ १९ ॥ वे
दमालेः सुतौप्रोक्तौयावुभौद्विजसत्तमाः यज्ञ
मालिः सुमालीचतयोः कर्माधुनोच्यते ॥ २०

तोक्या करणे लगा जौनसी बेचनेके अयोग्य वस्तु है तिसकों और व्रतादिक धर्मोंकों बेचता भया और पराए निमित्त तीर्थयात्रा करणी इत्यादि दुष्कर्म स्त्री पुत्रादियोंके लिये कर्ता भया ॥ १७ ॥ हेविप्रा इस प्रकार समयके वीतते २ तिसके घर यज्ञमालि सुमालि नाम वाले वडे सुंदर दोपुत्र इकठ्ठेही जन्मतेभये ॥ १८ ॥ तिससें उपरंत पिता तिनका उनोंकुमारोंमें अत्यंत स्नेह प्रीतिकर युक्त होएआ हुया अत्यंत प्रीतिसें वहुततरोंके साधन क्या उपायों करके तिनकों पालन कर्ता भया ॥ १९ ॥ हे द्विजसत्तमा वेदमालिके जौनसें दोपुत्र यज्ञमालि सुमालि कथनकरे हैं तिनका कर्म अब कथन कर्ताहुं ॥ २० ॥

तयोराद्योयज्ञमालिर्विभेदपितृसंचितं धनंद्वि
धाकनिष्ठस्यभागमेकंददौतदा ॥ २१ ॥ सुमा
लिस्तद्धनंसर्वंव्यसनाभिरतस्तथा असद्व्यया
दिभिश्चैवनाशयामासभोद्विजाः ॥ २२ ॥ गी
तवाद्यरतोनित्यंमद्यपानरतोभवत् वेश्याविभ्र
मलुब्धोसौपरदाररतोभवत् ॥ २३ ॥ सर्वस्मि
न्नाशमायातेहिरण्येपितृसंचिते अपहृत्यपरद्र
व्यंवारस्त्रीनिरतोभवत् ॥ २४ ॥

तिनोंमैंआद्य क्या वडा यज्ञमालि था सो पिताके मरेहोए पीछे सें उसपिताके इकठे करेहोए धन को दो भाग कर्ताभया उसका एकभाग छोटे भ्राता सुमालिकों देताभया २१ सुमालि दुष्ट बुद्धिवाला तिसधनकों प्राप्त होकर व्यसनोमें तत्पर होएआहुया असत् क्या खोटे जो वृथा खर्च तिनों करकें सारा धन नष्ट कर देताभया ॥ २२ ॥ क्याकाम करणेलगाकि गायन सुनना वाजेव जाने मद्यमांस खाना पीना वैश्यांके नृत्यादियोंका लोभी पराई स्त्रियां भोगनेमें तत्पर होताभया ॥ २३ ॥ जद सारा सो धन पिताका इकठा करा हुया नष्ट होगया तद पराए द्रव्य अनेक तरांके उपाय कर कर ल्याके वेश्या गमन करनेमें प्रीति वाला होता भया ॥ २४ ॥

दृष्ट्वासुमालिनः शीलंयज्ञमालिर्महामतिः ब
भूवदुःखितोवाढमनुजंचेदमब्रवीत् २५ अल
मत्यंतकष्टेनवृत्तेनानुजसत्कुले त्वमेकएवदुष्टा
त्मामहापापरतोभवः २६ एवंनिवारयंतंतं
वहुशोभ्रातरंततः हनिष्यामीतिनिश्चित्यखड्
गहस्तःकचेग्रहीत् २७ ततोहाहारवोजज्ञेन
गरेमुनिसत्तमाः ववंधुर्नागराश्चैनंकुपितास्तसु
मालिनम् २८

वडा वुद्धिमान् यज्ञमालि सुमालिका शील देख कर क्या वर्त्त न देख कर वडा दुःखित होके छोटे भ्राताकों ऐसें कहन लगा २५ हेअनुज छोटे भ्रातः ऐसें श्रेष्ट कुलमें इस तरांके कष्ठ दायक खोटे वर्तन कर्के पूर्णताहैं क्या जो कुछ किया सोकरा अब आगेकों जानदें तूं एक दुष्ट आत्मा वाला महापाप करणें में तत्पर होएआहैं २६ इस प्रकार वहुत बार निवारण कर्ते होए भ्राताकों तिससें उपरंत उसनें मनमें ऐसा चिंतन करा कि इसकों मार देउंगा ऐसा निश्चयकर एक दिन हाथ मे खड्ग लेकर केशोंसें पकडता भया ॥ २७ तद हेमुनिसत्तमाः उस नगरमें हाहा कार शब्द होने लगा और नगरके लोक क्रोधी होए हुए सुमालिकों वांधलेते भये २८

यज्ञमालिरमेयात्मापौरान्संप्रार्थ्यदुःखितःबंध
नान्मोचयामासभ्रातृस्नेहविमोहितः २९ य
ज्ञमालिःपुनश्चापिविभेदस्वधनंद्विधा आददे
स्वयमर्धंचददावर्धंयवीयसे ३० सुमालिस्त्व
तिमूढात्मातद्धनंचापिसत्तमाः मूर्खैःपाषंडचां
डालैर्बुभुजेचमदोद्धतैः ३१ असतामुपकारा
यदुर्जनानांविभूतयः पिचुमंदःफलाढ्योपिका
कैरेवाहिभुज्यते ३२

तद अमेय मन वाला यज्ञमाले वडा दुःखित होएआ हुयाआ
नके लोकोंकी प्रार्थना कर्के भ्राताके स्नेह कर व्याकुल होआ
हुया वंधनसे छुडाय देता भया२९फिर यज्ञमालि अपने धनको
दोभाग कर्के अर्धभाग आप लेता भया आधा उसको देता
भया३० हेसत्तमाः अत्यंत मूढ बुद्धि वाला सुमालि उसधनको
भी मूर्ख पाषंडी चांडालोंके साथ मिल कर भोगले
ता भया ३१ एह वात प्रसिद्धहै दुष्ट पुरुषोंकियां विभूतियां खो
टे पुरुषोंकेही उपकारके वास्ते होतियांहैं जिसतरां फलोंके सा
थ भराहुया निंवका वृक्ष काकों कर्केही भोजन करीदाहै ३२

भ्रात्रादत्तंधनंप्राप्यसुमालिर्मत्ततांगतः शर्करा
सहितंदुग्धंपीत्वेवपवनाशनः ॥३३॥ सुमाली
त्वतिमूढात्माचांडालत्वमुपागतः मद्यपानप्र
मत्तश्चगोमांसादीनभक्षयत् ॥ ३४ ॥ त्यक्तोवं
धुजनैःसर्वैश्चांडालस्त्रीसमन्वितः राज्ञापिबाधि
तश्चापिप्रपेदेनिर्जनंवनम् ३५ ॥ यज्ञमालिः
सुधीर्विप्रः सदाधर्मरतोभवत् अर्वारितंददाव
न्नंसत्संगगतकल्मषः ॥ ३६ ॥

फिर भ्राता कर्के दियेहोए धनकों प्राप्त होकर सुमालि मत्तभाव कों ऐसें प्राप्त हुया जेसें शर्करा सहित दूध पान कर्के पवनाशन सर्प मस्त होताहे ॥ ३३ ॥ उस सें उपरंत अत्यंत मूढ बुद्धिवाला सुमालि चांडाल भाव कों प्राप्त हुया२ मद्य पान करणे कर्के मत्त गोमांसादियों कों भी भक्षण कर्ता भया ॥ ३४ तद बांधव लोकोंने तिस चांडाल की स्त्रीके सहित त्यागदिया और राजाने भी तिसकों दंडकरा उससें उपरंत निर्जन वनकों चला जाता भया ॥ ३५ जौनसा यज्ञमालि बुद्धिमान् धर्मात्म ब्राह्मणथा सो सदा धर्ममें तत्पर होता भया और प्रतिदिन अन्नदान कर्ता भया कैसाथा यज्ञमालि सत्संग कर्के दूर होगए हैं पापजिसके ॥ ३६ ॥

पित्राकृतानिसर्वाणितडागादीनिसत्तमाः अपा
लयद्यज्ञमालिःसदाधर्मपरायणः ॥ ३७॥ वि
श्राणितंधनंसर्वंयज्ञमालेर्महात्मनः सत्पात्रदा
ननिष्ठस्यधर्ममार्गप्रवर्तिनः॥ ३८ अहोसदुप
भोगायसज्जनानांविभूतयः कल्पवृक्षफलंसर्वं
ममरैरेवभुज्यते ॥ ३९ ॥ धनंविश्राण्यधर्मार्थं
यज्ञमालिर्महामतिः नित्यंविष्णुगृहेसम्यक्प
रिचर्यापरोभवत ॥ ४० ॥

हेसत्तमाः और तिसने क्या काम करे कि पितृपितामहादियों के वनाए हुए जोवाग वगीचे खूहे तला मंदिरादिक तिनके निमित्त लगाए हुए जो धर्मार्थ धनादि तिनकों पालन कर्ता भया धर्ममें तत्पर होएआ हुया ॥ ३७ ॥ और सत्पात्रोंकों दान देनेमें निष्टा वाले और धर्ममें वर्तने वाले तिस यज्ञ मालि महात्माका सारा धनका खजाना खाली होजाता भया ॥ ३८ ॥ हेऋषियो सत्पुरुषोंके धनादि श्रेष्टोंके भोगने वास्तेहि होतेहैं जिस प्रकार कल्पवृक्षके सारे फल देवतेही भक्षण कर्ते हैं ॥ ३९ सो जौनसा यज्ञमालि वडा बुद्धिमान् धर्म कर्मके निमित्त धनकों खर्च कर्के फिर नित्यही विष्णुके घरमें नारायण जी की सेवामें तत्पर होजाता भया ॥ ४० ॥

कालेनगच्छतातौतुवृद्धभावमुपागतौयज्ञमाली
सुमालीचएककालेमृतौद्विजाः ४१ हरिपूजारत
स्यास्ययज्ञमालेर्महात्मनःहरिःसंप्रेषयामासवि
मानशतमुत्तमम् ४२ दिव्यंविमानमारुह्ययज्ञ
मालिर्महामतिः पूज्यमानःसुरगणैःस्तूयमानो
मुनीश्वरैः ४३ गंधर्वैर्गीयमानश्चअप्सरोभि
श्चसेवितः कामधेन्वापोष्यमाणश्चित्राभरण
भूषितः ४४

आयुके व्यतीत होते २ दोनों वृद्ध भावकों प्राप्त होगए फिर हे द्विजाः दोनों सो एकही समय मरगए ४१ ॥ तदहरीकी पूजा में रत जो यज्ञमालि तिस महात्माके लिये नारायणजी उत्तमसौ विमान भेजते भये ४२ उनमेंसे दिव्यजो विमानथा उस पर महामति वाला यज्ञमालि आरूढ होगया तो देवतयोंके समूह उसकी पूजा करणे लगे मुनीश्वर लोकस्तुतिकरणे लगे ४३ ॥ गंधर्व उसके आगे गायन कर्ते चलें अप्सरां नृत्य कर्तीयां आगे चलियां और कामधेनु उसकी पालना कर्ती भई और वडे २ विचित्र वस्त्र भूषणो कर्के शोभायमान होताभया ४४ ॥

कोमलैस्तुलसीमाल्यैर्भूषितस्तेजसांनिधिः ग
च्छन्विष्णुपदंदिव्यंसचतंपार्थिददृष्टवान् ४५ ता
ड्यमानंयमभटैःक्षुत्तृष्णापरिपीडितं प्रेतीभूतं
विवस्त्रंचददृष्टवान्पाशबंधितम् ४६ इतस्ततःप्र
धावंतंविलपंतंस्वकर्मणा क्रोशंतंवहुशोदीनं
वमंतंरुधिरंमुखात् ॥ ४७ ॥ यज्ञमालीदयायु
क्तोहरिदूतान्समीपगान् कोयंभटैस्ताडयमा
णइत्यपृच्छत्कृतांजलिः ॥ ४८ ॥

और कोमल तुलसीकी माला करके भूषित तेजोंका निधि प्र
काशमान दिव्य विष्णुके लोकमें जाता हुया रस्तेमें छोटे भ्रात
कों भी देखताभया ॥४५ ॥ कैसाहै यमके दूतोंकरके ताडयमान
औरक्षुधा तृषा करके पीडित प्रेतोंका रूप बनाहुया नग्नफांसियो
सें बांधकर दूत लेजाया करतेहैं ४६ उनसें इधर ऊधर दौडता
है और करे होए कर्मोंकों स्मरण करके विलाप करेया कर्ता औ
र बहुत दीन हो कर कर लाया कर्ता रुधिर मुखसें चला क
र्ताहै ४७ ऐसे तिसकी दशा देख कर दया करके युक्त पासमें बै
ठे होए हरिके दूतोंकों हाथजोड कर यज्ञमालि पूछता भया
हेविष्णुके गणो एह यमके दूत किसकों मारेया कर्तेहैं कोनहै
एह ४८ ॥

अथतेहरिदूतास्तंयज्ञमालिंमहौजसं असौसु
मालिर्भ्रातातेपापात्माइत्यवोधयन् ॥ ४९ ॥
यज्ञमालिः समाकर्ण्यआख्यातंविष्णुकिंकरैः
मनसादुःखमापन्नस्तत्कर्मसुविमृश्यवै ५० ॥
ईदृशीहिगतिर्लोकेनराणांदुष्टचेतसां कर्मजान
न्नपिभ्रातुः पुनः पप्रच्छवेगतः ॥५१॥ यज्ञमा
ल्युवाच सख्यंसप्तपदीनंस्यादित्याहुर्धर्मको
विदाः तस्मात्संबांधवायूयंयदुपायंवदंतुवै ५२

उसके पूछनेसें उपरंत हरिके दूत तिस वडेतेजवाले यज्ञमालि
कों ऐसे कथन कर्तेभये एहतेरा छोटा भ्राता पापात्मा सुमालि
है ॥ ४९ ॥ तद विष्णुके किंकरोंने कथन करेहोए ऐसा सुन
कर मनमें वहुत दुःखकों प्राप्तहोएआ हुया तिसकेकर्मोंको वि
चार कर अपने आपमें कहनेलगा ॥ ५० ॥ दुष्ट मन वाले पुरु
षोंकी एहीसंसारमें गतिहोतीहै ऐसें भ्राताके कर्मोंकों जानता
भीहुया पर तिनकों शनावी फिर पूछताभया ॥ ५१ ॥ यज्ञमा
लिकहने लगा हेविष्णु भगवानजीके दूतो धर्मके जानने वाले
ऐसे कहतेहैं क्याजिसके साथ सात पैर इकठे चालिये सोमित्र
होजाताहै और मैंतो तुमारेसाथ वहुत दूर आयाहां इसवास्ते
मित्रभाव जानकर्के पूछताहुं तुममेरे मित्रहो कुछ इसमें उपाय
कहो जिससें एह भ्राता मम दंडसें मुक्तहोजावे ॥ ५२ ॥

यज्ञमालेर्वचः श्रुत्वाहरिदूतादयापराः पुनः
स्मितमुखाभ्रातुर्यज्ञमालेर्विचेष्टितम् ॥ ५३ ॥
प्राग्जन्मकर्महृदयेविचार्यचमहुर्मुहुः ऊचुः
संमुखतोभूत्वायज्ञमालिंहरिप्रियम् ॥ ५४ ॥
विष्णुदूताऊचुः यज्ञमालेमहाभागनारायणप
रायण उपायंतववक्ष्यामः शृणुष्वगदितंचनः
॥ ५५ ॥ कृतंतुसुमहत्कर्मत्वयाप्राक्तनजन्मनि
प्रवक्ष्यामः समासेनशृणुष्वसुसमाहितः॥ ५६

इसतरांका दीन वाक्य यज्ञमालिकासुन कर्के हरिकेदूत दयामें त
त्परहोएहुए फिरमंद हास्यकर युक्त मुखवाले यज्ञमालिकों भ्राता
का पूर्व जन्मका चरित्र सुनावते भये ५३ तिसके पूर्वके जन्मों
काकर्म अपने मनमे विचार कर २ सावधान होके हरिके
प्यार यज्ञमालिकों कहतेभये ॥ ५४ ॥ विष्णुके दूत कहनेलगे
हेबडे भाग्योंवाले यज्ञमालि नारायण जीको भक्तिमें तत्पर ते
रेको उपाय कहतेहैं तूंहमारे कहेकों श्रवण कर ॥ ५५ ॥ हेय
ज्ञमालेपिछले जन्मोंमे तैंनेवडे २ अच्छे कर्मकरेहोए हैं सोते
रेकों संक्षेपसें कहतेहैं तूंसावधान होके श्रवणकर ॥ ५६ ॥

पुरात्वंवैश्यजातीयोनाम्नाविश्वंभरःस्मृतःत्वया
कृतानिपापानिमहांत्यगणितानिवै ५७ ॥ स्व
कर्मवासनाहीनोमात्रापित्रातथोज्झितः एक
दावंधुभिस्त्यक्तः शोकसंतापपीडितः ५८ क्षु
धापिपासासंतप्तः प्राप्तवान्हरिमंदिरं तत्रवृष्टि
समुद्भूतकर्दमेस्थातुमिच्छया ॥ ५९ ॥ निवा
रितस्त्वयासोपितत्रलेपनतांगतः त्वयोषितंतुत
द्रात्रौतस्मिन्देवालयेद्विज ॥ ६० ॥

पूर्व जन्ममें तूंवैश्य जातीका था विश्वंभरनाम कर्के प्रसिद्ध तैंने अगणित वडे २ घोर पापकरे ॥ ५७ ॥ तद अपने जातिके योग्य कर्मोंकी वासनासें हीन तेरेकोंदेख कर्के मातापिताने भी त्याग दिया तो वांधवोंसें मिल कर रहने लगा तो एक समय तिनोंने भी तेरेकों निकाल दिया उस समय शोक संताप कर युक्त और तिनके क्लेश कर पीडित घरसें तूं निकल जाता भया ॥ ५८ ॥ जद चला गया तेरेकों क्षुधा तृषा वहुत लगी तिस कर्के संतप्त क्या दुःखित होएआ हुया मार्ग में एकहरिका मंदिरथा तिसमें जाकर तूं प्राप्त भया उहां तेरे गए वृष्टि जो हुई मंदिर मेचिक्कड होगया और तैंने उहां वैठनेकी इच्छाकरी ५९ उहांसें चिक्कड सारा हाथोंसें हटाय दियास्वछ निर्मलस्थान वनायकरतैंने उहां देवताके मंदिरमें रातकोंनिवास करा और जौनसाकर्दमहटायासोचोका देनेकेफलकोंप्राप्त हुया क्या इसने मेरेआगेचौंका दिया उससें विष्णुजीप्रसन्न होए ६०

सर्पेणदंशितस्तत्रप्रातःपंचत्वमागतः तेनपु
ण्यप्रभावेणह्युपलेपनजेनते ६१ विप्रजन्मच
तत्रापिहरिभक्तिरचंचला कल्पकोटिसहस्रा
र्थंनिविश्यहरिसन्निधौ ६२ तत्रैवज्ञानमासाद्य
परंमोक्षंगमिष्यसिस्वानुजंपातकिश्रेष्ठमुद्धर्तुमि
हचेच्छसि ६३ उपायंतंप्रवक्ष्यामस्तच्छृणुष्व
महामते गोचर्ममात्रभूमेस्तुह्युपलेनजंफलं द
त्त्वोद्धरमहाभागतस्माच्छ्रेयोभविष्यति ॥ ६४

रात्रिके समय तेरेको सर्पने दंशन कराप्रातःकालके समय मर
गया तद सो जो चिकड हटाय कर उपलेपन करा तिसपु
ण्यके प्रभाव कर्के ॥ ६१ ॥ तेरेकों ब्राह्मणके घरजन्म हुया
और अचंचल भक्ति परमेश्वरमें हुई अब तूं कल्पोंके हजारांको
डांवर्ष हरिके सामने निवास कर ६२ परममोक्षको प्राप्तहोजा
वेंगा और ज्ञानकों प्राप्तहोकर हेमहामते जेकर अब अपने छोटे
भ्राताकों उद्धार करणेकी इच्छाकर्ताहैं तद तेरेकों एक उपाय
कहतेहैं तूं सावधान होकर श्रवण कर ॥ ६३ ॥क्या गोचर्ममा
त्र भूमिमें उपलेपन जो चोका तिसके लगानेका उसकों फल
देकर उसका भी उद्धार कर इसकारणतें उसको कल्याण हो
वेगा ॥ ६४ ॥

सूतउवाच॥ एवमुक्तस्ततस्तैस्तुयज्ञमालिर्महा
मतिः देवदूतोक्तमात्रंतुददौतस्मैफलंतदा ६५
विनष्टमभवत्तस्यपापजालंमुनीश्वराः यमाज्ञा
कारिणः सर्वेतम्प्रमुच्यप्रदुद्रुवुः ॥ ६६ ॥ वि
मानस्सागरंसद्यः सर्वभोगसमन्वितं समारुह्य
सुमालीचमुमुदेदेववत्तदा ॥ ६७ ॥ तावुभौभ्रा
तरौविप्राःसुरवृंदनमस्कृतौ अवापतुर्महाप्री
तिंसमालिंग्यपरस्परम् ॥ ६८ ॥

सूतजी कथनकरणेलगे हेशौनकादिकऋषियो इसप्रकार देवदूतोंने कथन करा तद ही यज्ञमालि ऐसे कहकर फल तिसकों देता भया क्या जोमैने पूर्व जन्ममें नारायणजीके मंदिरलेपन करा हुया है उसमेंसें गोचर्ममात्र पृथिवीमें लेपन देनेका फल इसकों होवे ॥६५॥ इतना वचन जद उसने कहा तद उसी समय हे मुनीश्वराः पापोंके समूह उसके नष्ट होजाते भये और जिनों यमके दूतोंने तिसकों पकडा हुयाथा सो सारेही तिसकों त्याग कर भागकेचले जाते भये ॥ ६६ ॥ तद सभतरां के भोगों कर युक्त विमान रूपी सागर में आरूढ होकर सुमाली भी देवतों की न्यांई हर्ष आनंद को प्राप्त होता भया ॥ ६७ ॥ सूतजी कथन करतेहैं हेशौनकादिकविप्राःविमानोंके ऊपर चढे होए दोनों भ्राताकोंदेवतोंकेसमूहनमस्कारां कर्तेभये और आप सपें दोनों भ्राताग ळमिल करवडो प्रीतिकों प्राप्त होतेभये ॥६८

यज्ञमालिःसुमालीचस्तूयमानौमहर्षिभिः गी
यमानौचगंधर्वैर्विष्णुलोकमुपागतौ ६९॥अवा
पहरिसालोक्यंसुमालीद्विजसत्तमाः यज्ञमाली
चधर्मात्माहरिसारूप्यमाप्तवान्॥७०॥ भुक्त्वा
भोगांश्चिरंतत्रयज्ञमालिर्महामतिः तत्रैवज्ञा
नसंपन्नः परंमोक्षमुपागतः॥७१॥सुमालीचम
हाभागोविष्णुलोकेयुगायुतं स्थित्वाभूमिंपुनः
प्राप्यभूयोविप्रत्वमागतः ॥ ७२ ॥

और यज्ञ मालि सुमाली कों महर्षि लोक स्तुतकर्ते भये गंधर्व उनके आगे २ गायन कर्तेहैं इस विधिसें विष्णुके लोक में आय प्राप्त भये ॥ ६९ ॥ हे द्विजसत्तमाः सुमाली जौनसा था सो तो हरिकी सालोक्य मुक्ति कों प्राप्त भया यज्ञमालिहारिकी सारूप्य मुक्तिकों प्राप्त भया ॥ ७० ॥ और सो धर्मात्मा यज्ञमालि चिरकाल तिस लोक में सुख भोग भोगकर महामति वाला उहांही ज्ञान कर युक्त होएआ हुया परम मोक्ष कों प्राप्त होजाता भया ॥ ७१ ॥ और जोनसा वडे भाग्यों वाला सुमाली विष्णुके लोकमें दश हजार युग निवास कर्के फिर पृथिवी लोकमें प्राप्त होकर ब्राह्मणोंके घर जन्म लेता भया ॥ ७२ ॥

अतिशुद्धकुलेजातोगुणवान्वेदपारगः सर्वसंप
त्समायुक्तोहरिपूजापरायणः ॥ ७३ ॥ यज्ञा
नियाजसुवहून्मोक्षार्थंविष्णुतत्परः समस्तव्र
तदानानिधर्मांश्चकृतवांस्तथा ॥ ७४ ॥ हरिपू
जापरोनित्यंहरिनामपरायणः व्याहरन्हरिना
मानिप्रपेदेजाह्नवीतटम् ॥ ७५ ॥ तत्रस्नात्वा
चगंगायांदृष्ट्वाविश्वेश्वरंप्रभुं अवापपरमंस्था
नंयोगिनामपिदुर्लभम् ॥ ७६ ॥

अच्छेश्रेष्ठ कुलमेंजन्मता भया वडा गुणवान् वेदोंके जानण वा
ला होताभया सारियां संपदां करके युक्तहरिकी पूजा करणेमें
तत्पर ॥ ७३ ॥ वहुततरोंके यज्ञ विष्णुभक्तिमें तत्पर मोक्षके नि
मित्त कर्ताभया और सारेही व्रत दान धर्मकार्य कर्ताभया ॥७४
और नित्य हरिकी पूजामें तत्पर रहताथा हरिका नामजपनेमें
तत्पर हरिके नामोंको उच्चारण कर्ता २ गंगाजी के किनारे
में प्राप्त होता भया ॥ ७५ ॥ तहां श्रीगंगाजी में स्नान करके
विश्वेश्वर जीका दर्शन करा उहांही देहका त्याग कर योगि
जनोंको दुर्लभ जोपरम स्थान तिसमें जायप्राप्त होताभया ७६

उपलेपनमाहात्म्यंकथितंवोमहीश्वराः तस्मा
त्सर्वप्रयत्नेनसंपूज्यध्वंजनार्दनम् ॥ ७७॥ न
तेषांनरकंविप्रायेप्रपन्नाजनार्दनं तस्मात्सर्वप्र
यत्नेनसंपूज्योजगतांपतिः ॥ ७८ ॥ अकामा
अपियेविष्णोःसकृत्पूजांप्रकुर्वते नतेषांभवबं
धस्तुकदाचिदपिजायते ॥ ७९ ॥ हरिभक्ति
रतान्यस्तुहरिबुद्ध्याप्रपूजयेत् तस्यतुष्यंतिवि
प्रेंद्राब्रह्मविष्णुमहेश्वराः ॥ ८० ॥

हेमहीश्वरा उपलेपनक्याजो हरिके आगे चौंका लगाना तिसका
माहात्म्य तुमकों कथन कराहै इसकारणसें सारेहीतरोंके यत्नों
कर्के जनार्दनजीका पूजनकरो ॥७७॥हेविप्रा जौनसे कोईहरि
की शरणकों प्राप्तहैं तिनकों नरकोंकी यातना नहीहै इसकारण
सें जगतके पति पूजने योग्यहैं ॥ ७८ ॥ औरजौनसें निष्काम
पुरुषहैं और विष्णुकी एकवारभी पूजा कर्तेहैं तिनकों कदा
चित्भीसंसारका बंधन नहीहै ॥ ७९॥ जोपुरुष विष्णुके भक्तों
का विष्णुका हीरूप जान कर्केपूजन कर्तेहैं तिनके ऊपर हेविप्रें
द्रा ब्रह्मा विष्णु शिव एह तीनोंही देवता प्रसन्न होतेहैं॥ ८०

हरिभक्तिपराणांतुसंगिनांसंगमात्रतः मुच्य
तेसर्वपापेभ्योमहापातकवानपि ॥ ८१ ॥ हरि
पूजापराणांचहरिनामरतात्मनां शुश्रूषानिर
तायांतिपापिनोपिपरांगतिम् ॥८२॥ इतिश्रीवृ
हन्नारदीयपुराणेउपलेपनमाहात्म्यंसमाप्तम्

जो पुरुष हरिकी भक्तिमें तत्पर हैं उनकें साथ जोनसे संग
ति करणे वालेहैं उनके साथ व्यवहार मात्रसें महापातकोंवा
ला भी पुरुष सभनों पापोंसें मुक्तहोताहै ॥ ८१ ॥ जो पुरुषह
रिकी पूजा करणे वालेहैं और हरिकानाम जपने वालेहैं उन
की सेवा करनेमें युक्तमनवाले पापीभी परमगतिकों प्राप्तहोतेह
॥ ८२ ॥ एह वृहन्नारदीय पुराणमें विष्णुके आगेचौका देनेका
माहात्म्य समाप्त हुया ॥



अग्निपुराणे ध्यायंतियेसदाप्रीत्याकरिष्याम हरेर्गृहं तेषांविलीयतेपापंपूर्वजन्मशतोद्भवम् ॥ १ ॥ विष्णुधर्मोत्तरे सप्तजन्मकृतंपापंस्व ल्पंवावहुलंतथा विष्णोरालयविन्यासस्थाप नादेवनश्यति ॥ २ ॥स्कांदे आरंभेकृष्णाधि ष्ण्यस्यसप्तजन्मसुयत्कृतं पापंविलयमायाति नरकादुद्धरेत्पितॄन् ॥ ३ ॥ प्रासादपादेकृ ष्णस्ययावत्तिष्ठंतिरेणुकाः तावद्वर्षसहस्राणिस वसेद्विष्णुमंदिरे ॥ ४ ॥

अग्नि पुराण में कहाहै जोनसे पुरुष सर्वदा काल प्रीति कर्के ऐसें ध्यान कर्ते रहतेहैं कि हमभी नारायणजीका मंदिर वनावें उनके पीछेके सैकडे जन्मोंके पाप उत्पन्न होए हुए लीनहो जातेहैं ॥ १ ॥ विष्णुधर्मोत्तरमें कहाहै पीछेके सातजन्मोंमें कि ये होए थोडे वा बहुत पाप सोसारेही विष्णुका घर वनानेके निमित्त धन स्थापन करणेसें नष्ट होतेहैं २ स्कंदपुराणमें लिखा है कृष्णजीके निमित्त स्थान वनानेके आरंभके करेहोए सात जन्मोंमै करे होए जो पाप सोसारेही नष्ट होजातेहैं और नरको सें पितरोका उद्धार कर्ताहै ॥ १ ॥ श्रीकृष्णजी के एकहि स्सा मंदिरवने होए जितने रेणु धूलिके होतेहैं उतनेही हजार वर्ष विष्णुके मंदिरमें निवास कर्ताहै ॥ ४ ॥

विष्णुरहस्ये बाल्येप्रक्रीडमानायेपांशुभिर्भव
नंहरेः वासुदेवस्यकुर्वंतितेपितल्लोकगामिनः ५
पाद्मे जीर्णंकुर्वंतियेवैश्यतत्फलंद्विगुणंभवेत्
तद्विदार्यपृथक्कुर्यात्सगच्छेत्परमंपदम् ६ वाम
नपुराणे यःकारयेतमंदिरंमाधवस्यपुण्यांल्लो
कान्सगच्छेच्छाश्वतान्वै कृत्वारामान्फलपु
ष्पादिरम्यान्भोगान्भुक्तेकामतः स्वर्गसंस्थः
७ ॥ पितामहस्यपुरतः कुलान्यष्टौतुयानितु
तारयेदात्मनासार्धंविष्णोर्मंदिरकारकः ८ ॥

विष्णुरहस्य ग्रंथमें लिखाहै जो कोई बाल्यावस्था में क्रीडाक
र्ता हुया धूलियोंके साथ हरिका मंदिर बनाता है सो भी तिस
लोकमें जानेवाला होताहै ५ पद्मपुराणमे लि० ॥ हेवैश्य जो
कोई पुराणे मंदिरकों नवीन बनाताहै तिसकों नवीन सें दूना
फल होताहै और जो कोई उस पुरातन कों विदारण करकेंक्या
गिरायकर और नवीन ही बनाता है सो अत्यंत श्रेष्ठ परमपद
कों जाताहै ॥ ६ ॥ वामन पुराणमें लि० जों पुरुष माधव
विष्णुजी का मंदिर बनाताहै सो सर्वदाकाल रहनेवाले लोकों
में जाताहै और जो कोई पुष्प फलों वाले बाग लगाताहै सो
स्वर्गमें स्थित होकर कामना सें भोग भोगताहै ॥ ७ ॥ जो
विष्णु का मंदिर बनाने वाला है सों पितामहसें लेकर अपने
समेत जो आठ कुलहैं तिनका उद्धार कर्ताहै ॥ ८ ॥

नरसिंहपुराणे यः कुर्याच्छोभनंवेश्मनरसिंह स्यभक्तिमान् ससर्वपापनिर्मुक्तोविष्णुलोकम वाप्नुयात् ॥ ९ ॥ आदित्यपुराणे प्रतिष्ठाकांडेच लेपनाच्छादनाद्यैवयःकरोतिपुनर्नवं देव स्यायतनंतस्यनभवेत्कालजंभयम् १० ॥ जीर्णोदेवस्यप्रासादोयैःकृतःसंस्कृतोद्विजैः अ शोच्यास्तेमहात्मानोऽकृतपापामहामुने ११ मूलाच्छतगुणंपुण्यंप्राप्नुयाज्जीर्णकारकः तस्मा त्सर्वप्रयत्नेनजीर्णस्योद्धारमाचरेत् ॥ १२ ॥

नरसिंहपुराणमें लि० जौनसा कोई भक्तिमान् पुरुष शोभा वाला नरसिंहजीका मंदिर बनाताहै सो सभनों पापों सें निर्मुक्त होएआ हुया विष्णुके लोकमें जाताहै ॥ ९ ॥ आदित्य पुराणके प्रतिष्ठा कांडमें लि० जोकोई पुरुष पुराणे देवताकेमंदिरकों लेपन छादन कर्ताहै क्या छत पाताहै और कच्चेजां पक्केको चूना जां मिट्टी फिराणेसें नवीन जैसा कर्ताहै तिसकों कालकाभय नहि होताहै ॥ १० ॥ प्राचीन देवताका मंदिर जिन द्विज जातियोंने संस्कृतकराहै क्या लेपनादियोंसें अच्छा साफकराहै हेमहामुने सो पुरुष नहि शोक करणे योग्यहैं और पापभी नहि करा तिनोंने ११ जोकोईजीर्ण क्या पुराणे मंदिर कों बनावता है ओह मूलक्या नवीन पहले जिसने बनायाथा उससें भी सौगुणां अधिक पुण्यकों प्राप्त होताहै १२

जीर्णंदेहंयथादेहीत्यक्त्वाचान्यंसमाश्रयेत् प्रा
सादंदेवताजीर्णंत्यक्त्वान्यत्रव्रजेत्तथा ॥ १३ ॥
पुनस्तत्रैव कारयेच्चैवशिल्पज्ञैश्चित्रकर्माणि
मंदिरे विचित्रंयानमारुह्यचित्रभानुगृहंव्रजेत्
॥ १४ ॥ यावद्देवस्यरूपाणिहरेरूपाणिलेख
येत् तावद्युगसहस्राणिसूर्यलोकेवसेन्नरः १५
बृहन्नारदीये मृदाधातुविकारैर्वादेवतायतने
नृप करोतिचित्ररूपाणिविष्णुलोकेयुगंवसेत्
॥ १६ ॥

किस वास्ते कि जैसे पुराणे देहकों त्याग कर देहधारी और दूसरे देहमे आश्रय कर्ताहै इसीप्रकार पुराणे मंदिर कों देवता भी त्याग कर और स्थानमे चलाजाताहै ॥ १३ ॥ फिर उहां और विशेष वचन लि० ॥ जो पुरुष चित्रकारी करणे वाले यों सें देवताके मंदिरमैं विचित्र २ चित्र वेलां वूटे मूर्तियां लिखाताहै सो अंतमैं विचित्र तरां के वने होए विमान पर वैठ के चित्रभानुके घरमे जाताहै ॥ १४ ॥ उस मंदिरमे जितने रूप देवतयोंके और हरिके रूपलि० उतने हजार युग सूर्य लोकमैं निवास कर्ताहै १५ वृहन्नारदीयपुराणमें लि० मृत्तिका जोगेरिकादिऔर धातुयोंके विकारों कर्के हेराजन् देवताके मंदिरमैं चित्र रूप लि० सो विष्णुके लोकमैं निवास कर्ताहै ॥ १६ ॥

शालिचूर्णेनयोमर्त्यौदेवतायतनेनृप करोति स्वस्तिकादीनि तस्यपुण्यंनिशामय १७ यावत्यः कणिकाभूमौक्षिप्तारविकुलोद्भव तावद्युगसहस्राणि हरेःसालोक्यमश्नुते १८ मंदिरनिर्माणेचेतिहासमाहभक्तमालायां अथापरंप्रवक्ष्यामिभक्तेर्माहात्म्यमुत्तमं आश्चर्यकारकं विष्णोर्दृढभक्तिप्रदायकम् १ दक्षिणेद्रविडेदेशेग्रामःश्रीरंगपत्तनः तत्रश्रीरंगनामास्तिविष्णुभक्तसुरद्रुमः २

हेनृप शालिके चूर्ण कर्के क्या चाउलों के आटे कर्के जो मनुष्य देवता के मंदिरमे स्वस्तिकादिक क्या सर्वतोभद्र अष्टदल लिखता है तिसके पुण्यका फल श्रवण कर १७ हेसूर्य वंशोद्भव राजन् शालिके चूर्णकीआं जितनीआंक कणिका पृथिवी मैं क्षेपन करीयां हैं उतने ही हजार युग हरिकी सालोक्य मुक्ति कों भोगता है १८ अब देवता के मंदिर वनाने मैं इतिहास लि० भक्तमालामे अब और एक उत्तम भक्तिका माहात्म्य कथन कर्ता हुं केसा ओह माहात्म्य है आश्चर्य के करणे वाला और विष्णु भगवान्‌जी मे दृढभक्ति के देने वाला १ दक्षिण मे द्रविड देशके वीच श्रीरंग नामक एक शहर था तहां श्रीरंगनामा विष्णु भक्तो का सुरद्रुम था क्या कल्पवृक्ष था २

तत्रवेदैश्चशास्त्रैश्चब्राह्मणास्तंयजंतिहि अन्ये
पियेवसंतिस्मतेपिमोक्षंलभंतिहि ३॥ तत्रास्तां
स्वर्णकारौद्वौमातुलोभागिनेयकः ॥ केनापिवै
ष्णवेनाथतावुभावुपदेशितौ ॥४ ॥ ततस्तुस्वर्ण
कारौतौमहाभक्तौवभूवतुः अथैकदातयोश्चित्ते
वभूवाकास्मिकंत्विदम् ५ श्रीरंगमठनिर्माणमा
वांकुर्यावयत्नतः परंतुनधनंचास्तिकथमेतद्भ
विष्यति ॥ ६ ॥

तिस नगर में वेदशास्त्रों करके तिस श्रीरंगजी का पूजन करतेथे
और भी जौनसें उहां निवास करतेथे सो भी मोक्ष कों प्राप्त होतें
ते थे ३ तिस नगरमें मामा भनेआ दो सुनआर निवास करते
थे तिनकों किसी वैष्णवने उपदेश करा कि भगवान् जीकी
भक्ति करो ॥ ४ ॥ तद तिसके उपदेशसें दोनो हि मामा भ
नेआ सुनआरे परमेश्वर के वडे भक्त होते भये तद एकदिन अ
कस्मात् तिनके मनमें उत्पन्न भया ५ कि हमभी एक श्रीरंगभ
गवानजीका मंदिरवनावें पर हमारे पास धन नहि है किस
तरांसें मनोरथ हमारा सिद्ध होवेगा ६ ॥

इतिचिंतापरीतौद्वौपरस्परमभाषतां अहोयंना स्तिकोग्रामेमहाधनसमृद्धिमान् ॥ ७ ॥ तत्रत द्भृत्यव्याजेनआवांतद्गृहगौपुनः चोरयि त्वातुतद्द्रव्यंकरिष्येतेनतन्मठम् ॥ ८ ॥ इतिनि श्चित्यमनसागतौतौनास्तिकालये तमुचावां भवत्सर्वंकृत्वातद्वेतनेनच ॥ ९ ॥ जीविकांवैक रिष्यावोयदितेभिमतंविभो इतिश्रुत्वातयोर्वा क्यंतिष्ठेतमितिसोऽब्रवीत् ॥ १० ॥

उस प्रकार मंदिर वनाने मे चिंता कर्ते हुए दोनों आ पसमैं कहनेलगे एहजोनसा शहरमै नास्तिकहै सो वहुत धन समृद्धि कर्के युक्त है ७ उहां तिसके जाय कर्के नौकरी कर णेके वहाने कर्के असी उसकेधरमैं प्राप्त होवेंगे क्या अंदरमेजा नाआना कियाकरेंगे इसतरां विश्वास देकर उसके घरका द्रव्य चुरायकर उसधनसें मंदिर वनावेंगे ॥ ८ ॥ ऐसा मनमे निश्चय कर्के दोंनों उसनास्तिकके घरमैं चलेगए तहां जायकर उस कों कहनेलगेहमतेरी नौकरी करणेकों आयेहैं ॥ ९ ॥ हेविभो जीविकाके लिये तेरे पास आएहैं जेकर तेरी इच्छा होवे तद तिस तलव कर्के तेरे घरके सारे काम करेंगे एह तिनका वाक्य श्रवण कर्के ओहकहने लगा अच्छा तुमारी मर्जी रहो नौकरी करो ॥ १० ॥

ततस्तौस्वर्णकारौतुतद्गृहेभृत्यवास्थितौ पर
स्परंचिंतयंतौचोर्यावोधनंकिमु ११ नापश्य
तांत्ववश्यंतुधनंतद्देवतास्मृते देवतातुतदीया
सीत्सुवर्णप्रतिमामयी १२ महार्घरत्नघटि
तावहुमौल्यातिसुंदरी दृष्ट्वातांप्रतिमांतौतु
चक्रातेहरणेमनः १३ अथैकदानिशायांतुसु
प्तेलोकेततस्तुतौ प्रतिमामठमारुह्यगवाक्षंद
दृशेमहत् १४

तव उोह दोनों मामा भनैया सुनेआरे तिसके घरमे नौकर की न्याई स्थित होते भये और आपसमे चिंतन कर्तेथे कि इसके घरसें क्या धनचुरावें कुछ मालुम नहि होताहै ॥ ११ और उसनास्तिकके देवताकी स्वर्णमयी प्रतिमाथी तिससें विना और कुछ नहि धन तिनकों लभता भया ॥ १२ ॥ केसी उोहमूर्तियो वडे मोलके रत्नोंकर जडाऊ वनी होई वढेमोल की अतिसुंदर तिसकों देखकर उसके चुराणेकी इच्छा कर्ते भये मूर्ति चोरीमें मिलतद अच्छा मंदिरवन जाताहै ॥ १३ ॥ ऐसे मनमे चिंतन कर्ते २ एकादिन लोकोंके सोएहोए पीछे आधीरातके समय दोनों मामा भनेया उठकर्के प्रतिमा चुराणे के लिये मार्ग देखते भये किस रस्ते अंदर मंदिरकेजावें ऐसें देखते २ ऊपर एकवडाझरोखादेखा जिसमे मनुष्य निकल जावे उस मार्ग कर्के जाने वास्ते उसवडे मंदिरके ऊपर चडते भये ॥ १४ ॥

द्वारेकपाटसंरोधात्तेनमार्गेणमातुलः कष्टात्क
ष्टतरेणाथययौमंदिरमध्यतः १५ उत्थाप्यप्र
तिमांतांतुभागिनेयायचार्पयत् ततःस्वयंततो
नैवमार्गेणागंतुमुद्यतः १६ नशशाकवहिर्गंतु
द्वाराल्पत्ववशादसौ ततोब्रवीद्भागिनेयंमातु
लोमठमध्यगः १७ अतःपरंयद्वक्ष्यामितत्कु
रुष्वाविचारितं उपायोस्तिनचान्योत्रकुरुशी
घ्रंमदीरितम् १८

द्वारमैं किवाड लगे होए थे इस वास्ते मामा तिस गवाक्षकें मार्ग करकें वडेक्लेश करकें अर्थात् अत्यंतही दुःखपायकर मंदिर के अंदर चला जाता भया ॥ १५ ॥ उहांसे उनके देवताकी प्रतिमा उठायकर भनेवेंको देताभया तिस मूर्तिको देदेनेंसें उपरंत आप तिस मार्ग करकें आवनेंको उद्यत हुया ॥ १६ ॥ तद छोटेद्वारकें वशथें उसरस्ते आवनेंको समर्थ न होताभया जद उसरस्ते नहि आया तद उस मंदिरके अंदरसें मामा भनेवें को कहने लगा ॥ १७ ॥ मेरेसें अव वाहर नहि आने होताहै पर जो मैं तेरेको कहताहुं सो तूं विना विचारे काम कर उससे विना और कुछ उपाय नहिहै इससे मेरा कहना शतावी कर ॥ १८ ॥

छित्त्वामेमस्तकंयाहिगृहीत्वाप्रतिमामिमां नो
चेद्द्रक्ष्यतिमांप्रातरुभयोर्मरणंध्रुवम् १९ इ
त्थंमयिमृतेत्वंतुगृहीत्वामांविनाधनं श्रीरंगम
ठनिर्माणंकुरुष्वममशासनात् २० एताव
देवकर्त्तव्यमासीद्बहुदिनावधि मातुलस्येतिव
चनंश्रुत्वातद्भागिनेयकः २१ छित्त्वाशिरो
मातुलस्यनीत्वातांप्रतिमांद्रुतम् ययौस्वभव
नंरात्रौसंस्थाप्यप्रतिमांतुताम् २२

मेरा सिर काटकर इस प्रतिमाको लेके चला जा नहितो प्रातः काल आयकर देखेगा तब हमारे दोनोंका मरण निश्चयकरके होवेगा ॥ १९ ॥ इसप्रकार मेरे मरे होए पीछे कोई मेरेकोंन हि जानेगा और तूं मेरे विनाइसप्रतिमाकों ले जा और मेरेकहने सें श्रीरंगजीका मंदिर तैने बनाना ॥ २० ॥ एहि काम करनेकी इच्छा हमारि बहुतदिनोंसें बनी होईथी सोतोकाम आज सिद्ध होगया पर मंदिर अबतैने बनानारहा ऐसा वचन मामेका सुन कर ओहभनेवा कचा कर्ताभया २१ कि मामेका सिर काटकर और उह प्रतिमा उठाय ली शीघ्रतासें रातकेही समय अपने घरमे जायकर तिस प्रतिमाकों स्थापन करके दौड आवता भया ॥ २२

